रजत जयन्ती महोत्सव के उपलक्ष्य पर प्रकाशित

# शाङ्खायनशाखीया
# ऋग्वेदसंहिता

(पदपाठ-संवलिता)

## द्वितीयो भागः
(अष्टकौ तृतीय-चतुर्थौ)



महर्षिसान्दीपनिराष्ट्रियवेदविद्याप्रतिष्ठानम् उज्जयिनी
(मानव संसाधन विकास मन्त्रालय भारत सरकार)

ओ३म्

शाङ्खायनशाखीया

# ऋग्वेदसंहिता

## (पदपाठ-संवलिता)

## द्वितीयो भागः

(अष्टकौ तृतीय-चतुर्थौ)


प्रधानसम्पादकः

प्रो० रूप किशोरः शास्त्री

सचिवः

सम्पादकः

अमलधारीसिंहगौतमः

संयुक्त-सम्पादकः

डॉ. देवानन्द शुक्ल



महर्षिसान्दीपनिराष्ट्रियवेदविद्याप्रतिष्ठानम्, उज्जयिनी

(मानवसंसाधनविकासमन्त्रालयभारतसर्वकारस्याधीनम्)

विक्रम संवत् - २०६८ ई०सन् - 2013

# रजत-जयन्ती-वर्ष (१९८७-२०१२): प्रकाशनम्






**प्रधानसम्पादकः**
प्रो. रूप किशोरः शास्त्री, सचिवः, म.सा.रा.वे.वि.प्र.

**संयुक्त-सम्पादकः**
डॉ. देवानन्द शुक्ल, कार्यक्रमाधिकारी

**सम्पादकः**
अमलधारीसिंहगौतमः, अतिथि-प्राध्यापकः,
धर्मागम-विभागः, काशी हिन्दू विश्वविद्यालयः, वाराणसी
[illegible]कः-संस्कृत-विभागः,
[illegible]श्वविद्यालयः, जोधपुर

**प्रबन्धसम्पादकौ**
आचार्य वी.एस.विजयराघवन्, निदेशक
डॉ.अनूपकुमारमिश्रः

**अक्षरसंयोजिका**
श्रीमती मिताली रत्नपारखी



प्रथमं संस्करणम् २०१३
प्रतियाँ - ५००
ISBN – 978-81-923629-7-7
मूल्य - ५००







**प्रकाशकः**
महर्षि सान्दीपनि राष्ट्रिय वेद विद्या प्रतिष्ठानम्,
(मानवसंसाधनविकासमन्त्रालयभारतसर्वकारस्याधीनम्)
वेदविद्या मार्ग, चिन्तामन गणेश, पो. जवासिया, उज्जैन ४५६००६ (म.प्र.)
Phone 0734-2502266S 2502254S 2502255 Fax- (0734)2502253
Web-msrvvp.nic.in, Email- msrvvpujn@gmail.com



# THE ṚGVEDA SAṀHITĀ

of

## Śāṁkhāyana- Śākhā

(accompanied with Pada-Pāṭha)

## SECOND PART

(Aṣṭakas 3rd and 4th)


GENERAL EDITOR
**Prof. Roop Kishor Shastri**
Secretary

EDITOR
**Amal Dhari Singh Gautam**

JOINT EDITOR
**Dr. Devanand Shukla**



MAHARSHI SANDIAPNI RASHTRIYA VEDA VIDYA PRATISHTHAN, UJJAIN
(Under the Ministry of HRD, Govt. of India)

## Silver Jubilee Year (1987 - 2012) : Publication



**General Editor**
Prof. Roop Kishor Shastri

**Editor**
Amal Dhari Singh Gautam
Guest – Professor, Department of Dharmāgama, B. H. U., Varanasi
Ex-Lecturer Department of Sanskrit, University of Jodhpur, Jodhpur

**Joint Editor**
Dr. Devanand Shukla, Programm Officer

**Managing Editors**
Achary V.S.Vijayraghavan, Director
Dr. Anoop Kumar Mishra

**Composed By** Mrs. Mitali Ratnaparkhi

FIRST EDITION - 2013, Copies - 500
ISBN – 978-81-923629-7-7
Price: 500



**Publisher**
**Maharshi Sandipani Rashtriya Veda VIdya Pratishthan,**
(Under the Ministry of HRD, Govt. of India)
Vedvidhya Marg, Chintaman Ganesh, Po. Jawashiya, UJJAIN 456006 (M.P.)
**Phone 0734-2502266S 2502254S 2502255 Fax- (0734)2502253**
**Web-msrvvp.nic.in, Email- msrvvpujn@gmail.com**

# विषयानुक्रमणी

॥ ओ३म् ॥

नमो ब्रह्मणे नमोऽस्त्वग्नये
नमः पृथिव्यै नम ओषधीभ्यः।
नमो वाचे नमो वाचस्पतये
नमो विष्णवे महते करोमि ॥

ऋ. ८.८.६३

# ऋग्वेदीया

# शाङ्खायनसंहिता

## तृतीयोऽष्टकः

तृतीयमण्डले सूक्तानि ७ - ६२

चतुर्थमण्डले सूक्तानि १ - ५८

पञ्चममण्डले सूक्तानि १ - ८

# ॥ तृतीयाष्टके प्रथमोऽध्यायः॥

**अथ प्रथमोऽध्यायः॥१॥ वर्गाः १-३४ ]** **[ तृतीयमण्डले सूक्तानि ७-२९ ]**

## ( ७ )

**मन्त्र संख्या ११ ऋषिः = गाथिनो विश्वामित्रः। देवता = अग्निः। छन्दः = त्रिष्टुप् ।**

**प्र य ऽआरुः शितिपृष्ठस्य धासेरा मातरा विविशुः सप्त वाणीः ।**
**परिक्षिता पितरा सं चरेते प्र सर्स्राते दीर्घमायुः प्रयक्षे ॥१॥**

प्र । ये । आरुः । शिति॰पृष्ठस्य । धासेः । आ । मातरा ।
विविशुः । सप्त । वाणीः ॥ परि॰क्षिता । पितरा । सम् ।
चरेते इति । । प्र । सर्स्राते इति । दीर्घम् । आयुः । प्र॰यक्षे ॥१॥

**दिवक्षसो धेनवो वृष्णो ऽअश्वा देवीरा तस्थौ मधुमद्वहन्तीः ।**
**ऋतस्य त्वा सदसि क्षेमयन्तं पर्येका चरति वर्त्तनिं गौः ॥२॥**

दिवक्षसः । धेनवः । वृष्णः । अश्वाः । देवीः । आ ।
तस्थौ । मधु॰मत् । वहन्तीः ॥ ऋतस्य । त्वा । सदसि ।
क्षेम॰यन्तम् । परि । एका । चरति । वर्त्तनिम् । गौः ॥२॥

**आ सीमरोहत्सुयमा भवन्तीः पतिश्चिकित्वान्रयिविद्रयीणाम् ।**
**प्र नीलपृष्ठो ऽअतसस्य धासेस्ता ऽअवासयत्पुरुधप्रतीकः ॥३॥**

आ । सीम् । अरोहत् । सु॰यमाः । भवन्तीः । पतिः ।
चिकित्वान् । रयि॰वित् । रयीणाम् ॥ प्र । नील॰पृष्ठः ।
अतसस्य । धासेः । ताः । अवासयत् । पुरुध॰प्रतीकः ॥३॥

**महि त्वाष्ट्रमूर्जयन्तीरजुर्यं स्तभूयमानं वहतो वहन्ति ।**
**व्यङ्गेभिर्दिद्युतानः सधस्थ ऽएकामिव रोदसी ऽआ विवेश ॥४॥**

महि । त्वाष्ट्रम् । ऊर्जयन्तीः । अजुर्यम् । स्तभु०यमानम् ।
वहतः । वहन्ति ॥ वि । अङ्गेभिः । दिद्युतानः । सध०स्थे ।
एकाम्ऽइव । रोदसी इति । आ । विवेश ॥४॥

**जानन्ति वृष्णो ऽअरुषस्य शेवमुत ब्रध्नस्य शासने रणन्ति ।**
**दिवोरुचः सुरुचो रोचमाना ऽइळा येषां गण्या माहिना गीः ॥ ५॥ (१)**
जानन्ति । वृष्णः । अरुषस्य । शेवम् । उत । ब्रध्नस्य ।
शासने । रणन्ति ॥ दिवः२रुचः । सु०रुचः । रोचमानाः ।
इळा । येषाम् । गण्या । माहिना । गीः ॥ ५॥

**उतो पितृभ्यां प्रविदानु घोषं महो महद्भ्यामनयन्त शूषम् ।**
**उक्षा ह यत्र परि धानमक्तोरनु स्वं धाम जरितुर्ववक्ष ॥६॥**
उतो इति । पितृ०भ्याम् । प्र०विदा । अनु । घोषम् । महः ।
महत्०भ्याम् । अनयन्त । शूषम् ॥ उक्षा । ह । यत्र । परि ।
धानम् । अक्तोः । अनु । स्वम् । धाम । जरितुः । ववक्ष ॥६॥

**अध्वर्युभिः पञ्चभिः सप्त विप्राः प्रियं रक्षन्ते निहितं पदं वेः ।**
**प्राञ्चो मदन्त्युक्षणो ऽअजुर्या देवा देवानामनु हि व्रता गुः ॥७॥**
अध्वर्यु०भिः । पञ्च०भिः । सप्त । विप्राः । प्रियम् । रक्षन्ते ।
नि०हितम् । पदम् । वेरिति वेः ॥ प्राञ्चः । मदन्ति । उक्षणः ।
अजुर्याः । देवाः । देवानाम् । अनु । हि । व्रता । गुरिति गुः ॥७॥

**दैव्या होतारा प्रथमा न्यृञ्जे सप्त पृक्षासः स्वधया मदन्ति ।**
**ऋतं शंसन्त ऽऋतमित्त ऽआहुरनु व्रतं व्रतपा दीध्यानाः ॥८॥**
दैव्या । होतारा । प्रथमा । नि । ऋञ्जे । सप्त । पृक्षासः ।
स्वधया । मदन्ति ॥ ऋतम् । शंसन्तः । ऋतम् । इत् ।
ते । आहुः । अनु । व्रतम् । व्रत०पा । दीध्यानाः ॥८॥

**वृषायन्ते महे ऽअत्याय पूर्वीर्वृष्णे चित्राय रश्मयः सुयामाः ।**
**देव होतर्मन्द्रतरश्चिकित्वान्महो देवान्रोदसी ऽएह वक्षि ॥९॥**
वृष०यन्ते । महे । अत्याय । पूर्वीः । वृष्णे । चित्राय ।
रश्मयः । सु०यामाः ॥ देव । होतः । मन्द्र०तरः । चिकित्वान् ।
महः । देवान् । रोदसी इति । आ । इह । वक्षि ॥९॥

**पृक्षप्रयजो द्रविणः सुवाचः सुकेतव ऽउषसो रेवदूषुः ।**
**उतो चिदग्ने महिना पृथिव्याः कृतं चिदेनः सं महे दशस्य ॥१०॥**
पृक्ष०प्रयजः । द्रविणः । सु०वाचः । सु०केतवः । उषसः ।
रेवत् । ऊषुः ॥ उतो इति । चित् । अग्ने । महिना । पृथिव्याः ।
कृतम् । चित् । एनः । सम् । महे । दशस्य ॥१०॥

**इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।**
**स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥११॥ ( २ ) [ मन्त्रसंख्या ११ ]**
इळाम् । अग्ने । पुरु०दंसम् । सनिम् । गोः । शश्वत्०तमम् ।
हवमानाय । साध ॥ स्यात् । नः । सूनुः । तनयः । विजा०वा ।
अग्ने । सा । ते । सु०मतिः । भूतु । अस्मे इति ॥११॥

# ( ८ )

**११ गाथिनो विश्वामित्रः । यूपः, ६-१० यूपाः, ८ विश्वे देवा वा, ११ व्रश्चनः।**
**त्रिष्टुप् ३, ७, अनुष्टुप् ।**

**अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन ।**
**यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या ऽउपस्थे ॥१॥**
अञ्जन्ति । त्वाम् । अध्वरे । देव०यन्तः । वनस्पते ।
मधुना । दैव्येन ॥ यत् । ऊर्ध्वः । तिष्ठाः । द्रविणा । इह ।
धत्तात् । यत् । वा । क्षयः । मातुः । अस्याः । उप०स्थे ॥१॥

समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो ऽअजरं सुवीरम् ।
आरे ऽअस्मदमतिं बाधमान ऽउच्छ्रयस्व महते सौभगाय ॥२॥
सम्०इद्धस्य । श्रयमाणः । पुरस्तात् । ब्रह्म । वन्वानः ।
अजरम् । सु०वीरम् ॥ आरे । अस्मत् । अमतिम् ।
बाधमानः । उत् । श्रयस्व । महते । सौभगाय ॥२॥

उच्छ्रयस्व वनस्पते वर्ष्मन्पृथिव्या ऽअधि ।
सुमिती मीयमानो वर्चो धा यज्ञवाहसे ॥३॥
उत् । श्रयस्व । वनस्पते । वर्ष्मन् । पृथिव्याः । अधि ॥
सु०मिती । मीयमानः । वर्चः । धाः । यज्ञ०वाहसे ॥३॥

युवा सुवासाः परिवीत ऽआगात्स ऽउ श्रेयान्भवति जायमानः ।
तं धीरासः कवय ऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥४॥
युवा । सु०वासाः । परि०वीतः । आ । अगात् । सः । ऊँ इति ।
श्रेयान् । भवति । जायमानः ॥ तम् । धीरासः । कवयः ।
उत् । नयन्ति । सु०आध्यः । मनसा । देव०यन्तः ॥४॥

जातो जायते सुदिनत्वे ऽअह्नां समर्य ऽआ विदथे वर्द्धमानः ।
पुनन्ति धीरा ऽअपसो मनीषा देवया विप्र ऽउदियर्ति वाचम् ॥५॥ ( ३ )
जातः । जायते । सुदिन०त्वे । अह्नाम् । स०मर्ये ।
आ । विदथे । वर्द्धमानः ॥ पुनन्ति । धीराः । अपसः ।
मनीषा । देव०याः । विप्रः । उत् । इयर्ति । वाचम् ॥५॥

यान्वो नरो देवयन्तो निमिम्युर्वनस्पते स्वधितिर्वा ततक्ष ।
ते देवासः स्वरवस्तस्थिवांसः प्रजावदस्मे दिधिषन्तु रत्नम् ॥६॥

यान् । वः । नरः । देव॰यन्तः । नि॰मिम्युः । वनस्पते ।
स्व॰धितिः । वा । ततक्ष ॥ ते । देवासः । स्वरवः ।
तस्थि॰वांसः । प्रजा॰वत् । अस्मे इति । दिधिषन्तु । रत्नम् ॥६॥

**ये वृक्णासो ऽअधि क्षमि निमितासो यतस्रुचः ।**
**ते नो व्यन्तु वार्यं देवत्रा क्षेत्रसाधसः ॥७॥**
ये । वृक्णासः । अधि । क्षमि । नि॰मितासः । यत॰स्रुचः ॥
ते । नः । व्यन्तु । वार्यम् । देव॰त्रा । क्षेत्र॰साधसः ॥७॥

**आदित्या रुद्रा वसवः सुनीथा द्यावाक्षामा पृथिवी ऽअन्तरिक्षम् ।**
**सजोषसो यज्ञमवन्तु देवा ऽऊर्ध्वं कृण्वन्त्वध्वरस्य केतुम् ॥८॥**
आदित्याः । रुद्राः । वसवः । सु॰नीथाः । द्यावा॰क्षामा ।
पृथिवी । अन्तरिक्षम् ॥ स॰जोषसः । यज्ञम् । अवन्तु ।
देवाः । ऊर्ध्वम् । कृण्वन्तु । अध्वरस्य । केतुम् ॥८॥

**हंसाइव श्रेणिशो यतानाः शुक्रा वसानाः स्वरवो न ऽआगुः ।**
**उन्नीयमानाः कविभिः पुरस्ताद्देवा देवानामपि यन्ति पाथः ॥९॥**
हंसाःऽइव । श्रेणि॰शः । यतानाः । शुक्राः । वसानाः । स्वरवः ।
नः । आ । अगुः ॥ उत्॰नीयमानाः । कवि॰भिः । पुरस्तात् ।
देवाः । देवानाम् । अपि । यन्ति । पाथः ॥९॥

**शृङ्गाणीवेच्छृङ्गिणां सं ददृश्रे चषालवन्तः स्वरवः पृथिव्याम् ।**
**वाघद्भिर्वा विहवे श्रोषमाणा ऽअस्माँ ऽअवन्तु पृतनाज्येषु ॥१०॥**
शृङ्गाणिऽइव । इत् । शृङ्गिणाम् । सम् । ददृश्रे । चषाल॰वन्तः ।
स्वरवः । पृथिव्याम् ॥ वाघत्॰भिः । वा । वि॰हवे ।
श्रोषमाणाः । अस्मान् । अवन्तु । पृतनाज्येषु ॥१०॥

वर्नस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयं रुहेम ।
यं त्वामयं स्वधितिस्तेजमानः प्रणिनाय महते सौभगाय ॥११॥ (४) [२२]
वनस्पते । शत॰वल्शः । वि । रोह । सहस्र॰वल्शाः । वि ।
वयम् । रुहेम ॥ यम् । त्वाम् । अयम् । स्व॰धितिः ।
तेजमानः । प्र॰निनाय । महते । सौभगाय ॥११॥

## (९)

९ गाथिनो विश्वामित्रः। अग्निः। बृहती, ९ त्रिष्टुप् ।

सखायस्त्वा ववृमहे देवं मर्त्तास ऊतये ।
अपां नपातं सुभगं सुदीदितिं सुप्रतूर्तिमनेहसम् ॥१॥
सखायः । त्वा । ववृमहे । देवम् । मर्त्तासः ।
ऊतये ॥ अपाम् । नपातम् । सु॰भगम् ।
सु॰दीदितिम् । सु॰प्रतूर्तिम् । अनेहसम् ॥१॥

कायमानो वना त्वं यन्मातॄरजगन्नपः ।
न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः ॥२॥
कायमानः । वना । त्वम् । यत् । मातॄः । अजगन् ।
अपः ॥ न । तत् । ते । अग्ने । प्र॰मृषे । नि॰वर्तनम् ।
यत् । दूरे । सन् । इह । अभवः ॥२॥

अति तृष्टं ववक्षिथाथैव सुमना असि ।
प्रप्रान्ये यन्ति पर्यन्य आसते येषां सख्ये असि श्रितः ॥३॥
अति । तृष्टम् । ववक्षिथ । अथ । एव । सु॰मनाः ।
असि ॥ प्र॰प्र । अन्ये । यन्ति । परि । अन्ये ।
आसते । येषाम् । सख्ये । असि । श्रितः ॥३॥

**ईयिवांसमति स्त्रिधः शश्वतीरति सश्चतः ।**
**अन्वींमविन्दन्निचिरासों ऽअद्रुहोऽप्सु सिंहमिव श्रितम् ॥४॥**
ईयि०वांसम् । अति । स्त्रिधः । शश्वतीः । अति ।
सश्चतः ॥ अनु । ईम् । अविन्दन् । नि०चिरासः ।
अद्रुहः । अप्०सु । सिंहम्ऽइव । श्रितम् ॥४॥

**ससृवांसमिव त्मनाग्निमित्था तिरोहितम् ।**
**ऐनं नयन्मातरिश्वा परावतो देवेभ्यो मथितं परि ॥५॥ (५)**
ससृवांसम्ऽइव । त्मना । अग्निम् । इत्था ।
तिरः२हितम् ॥ आ । एनम् । नयत् । मातरिश्वा ।
परा०वतः । देवेभ्यः । मथितम् । परि ॥५॥

**तं त्वा मर्त्ता ऽअगृभ्णत देवेभ्यो हव्यवाहन ।**
**विश्वान्यद्यज्ञाँ ऽअभिपासि मानुष तव क्रत्वा यविष्ठ्य ॥६॥**
तम् । त्वा । मर्त्ताः । अगृभ्णत । देवेभ्यः ।
हव्य०वाहन ॥ विश्वान् । यत् । यज्ञान् ।
अभि०पासि । मानुष । तव । क्रत्वा । यविष्ठ्य ॥६॥

**तद्भद्रं तव दंसना पाकाय चिच्छदयति ।**
**त्वां यदग्ने पशवः समासते समिद्धमपिशर्वरे ॥७॥**
तत् । भद्रम् । तव । दंसना । पाकाय ।
चित् । छदयति ॥ त्वाम् । यत् । अग्ने । पशवः ।
सम्०आसते । सम्०इद्धम् । अपि०शर्वरे ॥७॥

**आ जुहोता स्वध्वरं शीरं पावकशोचिषम् ।**
**आशुं दूतमजिरं प्रत्नमीड्यं श्रुष्टी देवं सपर्यत ॥८॥**

आ । जुहोत । सु॰अध्वरम् । शीरम् ।
पावक॰शोचिषम् ॥ आशुम् । दूतम् । अजिरम् ।
प्रत्नम् । ईड्यम् । श्रुष्टी । देवम् । सपर्यत ॥८॥

**त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन् ।**
**औक्षन्घृतैरस्तृणन्बर्हिरस्मा ऽआदिद्धोतारं न्यसादयन्त ॥९॥ (६) [ ३१ ]**
त्रीणि । शता । त्री । सहस्राणि । अग्निम् । त्रिंशत् । च । देवाः ।
नव । च । असपर्यन् ॥ औक्षन् । घृतैः । अस्तृणन् । बर्हिः ।
अस्मै । आत् । इत् । होतारम् । नि । असादयन्त ॥९॥

# ( १० )

**९ गाथिनो विश्वामित्रः । अग्निः । उष्णिक् ।**

**त्वामग्ने मनीषिणः सम्राजं चर्षणीनाम् ।**
**देवं मर्त्तास ऽइन्धते समध्वरे ॥१॥**
त्वाम् । अग्ने । मनीषिणः । सम्॰राजम् । चर्षणीनाम् ॥
देवम् । मर्त्तासः । इन्धते । सम् । अध्वरे ॥१॥

**त्वां यज्ञेष्वृत्विजमग्ने होतारमीळते ।**
**गोपा ऽऋतस्य दीदिहि स्वे दमे ॥२॥**
त्वाम् । यज्ञेषु । ऋत्विजम् । अग्ने । होतारम् । ईळते ॥
गोपाः । ऋतस्य । दीदिहि । स्वे । दमे ॥२॥

**स घा यस्ते ददाशति समिधा जातवेदसे ।**
**सो ऽअग्ने धत्ते सुवीर्यं स पुष्यति ॥३॥**
सः । घ । यः । ते । ददाशति । सम्॰इधा । जात॰वेदसे ॥
सः । अग्ने । धत्ते । सु॰वीर्यम् । सः । पुष्यति ॥३॥

**स केतुरध्वराणामग्निर्देवेभिरा गमत् ।**

**अञ्जानः सप्त होतृभिर्हविष्मते ॥४॥**

सः । केतुः । अध्वराणाम् । अग्निः । देवेभिः । आ । गमत् ॥

अञ्जानः । सप्त । होतृ०भिः । हविष्मते ॥४॥

**प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् ।**

**विपां ज्योतींषि बिभ्रते न वेधसे ॥५॥ (७)**

प्र । होत्रे । पूर्व्यम् । वचः । अग्नये । भरत । बृहत् ॥

विपाम् । ज्योतींषि । बिभ्रते । न । वेधसे ॥५॥

**अग्निं वर्द्धन्तु नो गिरो यतो जायत उक्थ्यः ।**

**महे वाजाय द्रविणाय दर्शतः ॥६॥**

अग्निम् । वर्द्धन्तु । नः । गिरः । यतः । जायते । उक्थ्यः ॥

महे । वाजाय । द्रविणाय । दर्शतः ॥६॥

**अग्ने यजिष्ठो अध्वरे देवान्देवयते यज ।**

**होता मन्द्रो वि राजस्यति स्रिधः ॥७॥**

अग्ने । यजिष्ठः । अध्वरे । देवान् । देव०यते । यज ॥

होता । मन्द्रः । वि । राजसि । अति । स्रिधः ॥७॥

**स नः पावक दीदिहि द्युमदस्मे सुवीर्यम् ।**

**भवा स्तोतृभ्यो अन्तमः स्वस्तये ॥८॥**

सः । नः । पावक । दीदिहि । द्यु०मत् । अस्मे इति । सु०वीर्यम् ॥

भव । स्तोतृ०भ्यः । अन्तमः । स्वस्तये ॥८॥

**तं त्वा विप्रा विपन्यवो जागृवांसः समिन्धते ।**

**हव्यवाहममर्त्यं सहोवृधम् ॥९॥ (८)** [ ४० ]

तम् । त्वा । विप्राः । विपन्यवः । जागृ०वांसः । सम् । इन्धते ॥

हव्य०वाहम् । अमर्त्यम् । सहः२वृधम् ॥९॥

# ( ११ )

**९ गाथिनो विश्वामित्रः । अग्निः । गायत्री ।**

**अग्निर्होता पुरोहितोऽध्वरस्य विचर्षणिः ।**

**स वेद यज्ञमानुषक् ॥१॥**

अग्निः । होता । पुरः२हितः । अध्वरस्य । वि०चर्षणिः ॥

सः । वेद । यज्ञम् । आनुषक् ॥१॥

**स हव्यवाळमर्त्य ऽउशिग्दूतश्चनोहितः ।**

**अग्निर्धिया समृण्वति ॥२॥**

सः । हव्य०वाट् । अमर्त्यः । उशिक् । दूतः । चनः२हितः ॥

अग्निः । धिया । सम् । ऋण्वति ॥२॥

**अग्निर्धिया स चेतति केतुर्यज्ञस्य पूर्व्यः ।**

**अर्थं ह्यस्य तरणि ॥३॥**

अग्निः । धिया । सः । चेतति । केतुः । यज्ञस्य । पूर्व्यः ॥

अर्थम् । हि । अस्य । तरणि ॥३॥

**अग्निं सूनुं सनश्रुतं सहसो जातवेदसम् ।**

**वह्निं देवा ऽअकृण्वत ॥४॥**

अग्निम् । सूनुम् । सन०श्रुतम् । सहसः । जात०वेदसम् ॥

वह्निम् । देवाः । अकृण्वत ॥४॥

**अदाभ्यः पुरएता विशामग्निर्मानुषीणाम् ।**
**तूर्णी रथः सदा नवः ॥५॥ ( ९ )**
अदाभ्यः । पुरःऽएता । विशाम् । अग्निः । मानुषीणाम् ॥
तूर्णिः । रथः । सदा । नवः ॥५॥

**साह्वान्विश्वा ऽअभियुजः क्रतुर्देवानाममृक्तः ।**
**अग्निस्तुविश्रवस्तमः ॥६॥**
सह्वान् । विश्वाः । अभि०युजः । क्रतुः । देवानाम् । अमृक्तः ॥
अग्निः । तुविश्रवःऽतमः ॥६॥

**अभि प्रयांसि वाहसा दाश्वाँ ऽअश्नोति मर्त्यः ।**
**क्षयं पावकशोचिषः ॥७॥**
अभि । प्रयांसि । वाहसा । दाश्वान् । अश्नोति । मर्त्यः ॥
क्षयम् । पावक०शोचिषः ॥७॥

**परि विश्वानि सुधिताग्नेरश्याम मन्मभिः ।**
**विप्रासो जातवेदसः ॥८॥**
परि । विश्वानि । सु०धिता । अग्नेः । अश्याम । मन्म०भिः ॥
विप्रासः । जात०वेदसः ॥८॥

**अग्ने विश्वानि वार्या वाजेषु सनिषामहे ।**
**त्वे देवास ऽएरिरे ॥९॥ ( १० )** [ ४९ ]
अग्ने । विश्वानि । वार्या । वाजेषु । सनिषामहे ॥
त्वे इति । देवासः । आ । ईरिरे ॥९॥

# ( १२ )

९ गाथिनो विश्वामित्रः। इन्द्राग्नी । गायत्री ।

**इन्द्राग्नी ऽआ गतं सुतं गीर्भिर्नभो वरेण्यम् ।**

**अस्य पातं धियेषिता ॥१॥**

इन्द्राग्नी इति । आ । गतम् । सुतम् । गीःऽभिः । नभः । वरेण्यम् ॥

अस्य । पातम् । धिया । इषिता ॥१॥

**इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः ।**

**अया पातमिमं सुतम् ॥२॥**

इन्द्राग्नी इति । जरितुः । सचा । यज्ञः । जिगाति । चेतनः ॥

अया । पातम् । इमम् । सुतम् ॥२॥

**इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे ।**

**ता सोमस्येह तृम्पताम् ॥३॥**

इन्द्रम् । अग्निम् । कवि०छदा । यज्ञस्य । जूत्या । वृणे ॥

ता । सोमस्य । इह । तृम्पताम् ॥३॥

**तोशा वृत्रहणा हुवे सजित्वानापराजिता ।**

**इन्द्राग्नी वाजसातमा ॥४॥**

तोशा । वृत्र०हना । हुवे । स०जित्वाना । अपरा०जिता ॥

इन्द्राग्नी इति । वाज०सातमा ॥४॥

**प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः ।**

**इन्द्राग्नी ऽइष ऽआ वृणे ॥५॥ ( ११ )**

प्र । वाम् । अर्चन्ति । उक्थिनः । नीथ॰विदः । जरितारः ॥
इन्द्राग्नी इति । इषः । आ । वृणे ॥५॥

**इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् ।**
**साकमेकेन कर्मणा ॥६॥**
इन्द्राग्नी इति । नवतिम् । पुरः । दास॰पत्नीः । अधूनुतम् ॥
साकम् । एकेन । कर्मणा ॥६॥

**इन्द्राग्नी ऽअपसस्पर्युप प्र यन्ति धीतयः ।**
**ऋतस्य पथ्या ई ऽअनु ॥७॥**
इन्द्राग्नी इति । अपसः । परि । उप । प्र । यन्ति । धीतयः ॥
ऋतस्य । पथ्याः । अनु ॥७॥

**इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च ।**
**युवोरप्तूर्यं हितम् ॥८॥**
इन्द्राग्नी इति । तविषाणि । वाम् । सध॰स्थानि । प्रयांसि । च ॥
युवोः । अप्॰तूर्यम् । हितम् ॥८॥

**इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः ।**
**तद्वां चेति प्र वीर्यम् ॥९॥ (१२)** [ ५८ ]
इन्द्राग्नी इति । रोचना । दिवः । परि । वाजेषु । भूषथः ॥
तत् । वाम् । चेति । प्र । वीर्यम् ॥९॥

## ( १३ ) [ अथ द्वितीयोऽनुवाकः॥२॥ सू.१३-२९

**७ ऋषभो वैश्वामित्रः। अग्निः। अनुष्टुप्।**

**प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै ।**
**गमद्देवेभिरा स नो यजिष्ठो बर्हिरा सदत् ॥१॥**

प्र । वः । देवाय । अग्नये । बर्हिष्ठम् । अर्च । अस्मै ॥
गमत् । देवेभिः । आ । सः । नः । यजिष्ठः । बर्हिः । आ । सदत् ॥१॥

**ऋतावा यस्य रोदसी दक्षं सचन्त ऽऊतयः ।**
**हविष्मन्तस्तमीळते तं सनिष्यन्तोऽवसे ॥२॥**
ऋत०वा । यस्य । रोदसी इति । दक्षम् । सचन्ते । ऊतयः ॥
हविष्मन्तः । तम् । ईळते । तम् । सनिष्यन्तः । अवसे ॥२॥

**स यन्ता विप्र ऽएषां स यज्ञानामथा हि षः ।**
**अग्निं तं वो दुवस्यत दाता यो वनिता मघम् ॥३॥**
सः । यन्ता । विप्रः । एषाम् । सः । यज्ञानाम् । अथ । हि । सः ॥
अग्निम् । तम् । वः । दुवस्यत । दाता । यः । वनिता । मघम् ॥३॥

**शर्माणि वीतयेऽग्निर्यच्छतु शंतमा ।**
**नः प्रुष्णवद्वसु दिवि क्षितिभ्यो ऽअप्स्वा ॥४॥**
। नः । शर्माणि । वीतये । अग्निः । यच्छतु । शम्०तमा ॥
। नः । प्रुष्णवत् । वसु । दिवि । क्षिति०भ्यः । अप्०सु । आ ॥४॥

**दीदिवांसमपूर्व्यं वस्वीभिरस्य धीतिभिः ।**
**ऋक्वाणो ऽअग्निमिन्धते होतारं विश्पतिं विशाम् ॥५॥**
दीदि०वांसम् । अपूर्व्यम् । वस्वीभिः । अस्य । धीति०भिः ॥
ऋक्वाणः । अग्निम् । इन्धते । होतारम् । विश्पतिम् । विशाम् ॥५॥

**उत नो ब्रह्मन्नविष ऽउक्थेषु देवहूतमः ।**
**शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातमः ॥६॥**
उत । नः । ब्रह्मन् । अविषः । उक्थेषु । देव०हूतमः ॥
शम् । नः । शोच । मरुत्०वृधः । अग्ने । सहस्र०सातमः ॥६॥

**नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु ।**

**द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् ॥७॥ ( १३ )** **[ ६५ ]**

नु । नः । रास्व । सहस्र॰वत् । तोक॰वत् । पुष्टि॰मत् । वसु ॥

द्युमत् । अग्ने । सु॰वीर्यम् । वर्षिष्ठम् । अनुप॰क्षितम् ॥७॥

# ( १४ )

**७ ऋषभो वैश्वामित्रः । अग्निः । त्रिष्टुप्।**

**आ होता मन्द्रो विदथान्यस्थात्सत्यो यज्वा कवितमः स वेधाः ।**

**विद्युद्रथः सहसस्पुत्रो ऽअग्निः शोचिष्केशः पृथिव्यां पाजो ऽअश्रेत् ॥१॥**

आ । होता । मन्द्रः । वदथानि । अस्थात् । सत्यः । यज्वा ।

कवि॰तमः । सः । वेधाः ॥ विद्युत्॰रथः । सहसः । पुत्रः ।

अग्निः । शोचिः२केशः । पृथिव्याम् । पाजः । अश्रेत् ॥१॥

**अयामि ते नमउक्तिं जुषस्व ऽऋतावस्तुभ्यं चेतते सहस्वः ।**

**विद्वाँ ऽआ वक्षि विदुषो नि षत्सि मध्य ऽआ बर्हिरूतये यजत्र ॥२॥**

अयामि । ते । नमः२उक्तिम् । जुषस्व । ऋत॰वः । तुभ्यम् ।

चेतते । सहस्वः ॥ विद्वान् । आ । वक्षि । विदुषः । नि ।

सत्सि । मध्ये । आ । बर्हिः । ऊतये । यजत्र ॥२॥

**द्रवतां त ऽउषसा वाजयन्ती ऽअग्ने वातस्य पथ्याभिरच्छ ।**

**यत्सीमञ्जन्ति पूर्व्यं हविर्भिरा वन्धुरेव तस्थतुर्दुरोणे ॥३॥**

द्रवताम् । ते । उषसा । वाजयन्ती इति । अग्ने । वातस्य ।

पथ्याभिः । अच्छ ॥ यत् । सीम् । अञ्जन्ति । पूर्व्यम् ।

हविः२भिः । आ । वन्धुराऽइव । तस्थतुः । दुरोणे ॥३॥

**मित्रश्च तुभ्यं वरुणः सहस्वोऽग्ने विश्वे मरुतः सुम्नमर्चन् ।**
**यच्छोचिषा सहसस्पुत्र तिष्ठा ऽअभि क्षितीः प्रथयन्त्सूर्यो नॄन् ॥४॥**

मित्रः । च । तुभ्यम् । वरुणः । सहस्वः । अग्ने । विश्वे ।
मरुतः । सुम्नम् । अर्चन् ॥ यत् । शोचिषा । सहसः । पुत्र ।
तिष्ठाः । अभि । क्षितीः । प्रथयन् । सूर्यः । नॄन् ॥४॥

**वयं ते ऽअद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य ।**
**यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो ऽअग्ने ॥५॥**

वयम् । ते । अद्य । ररिम । हि । कामम् । उत्तान०हस्ताः ।
नमसा । उप०सद्य ॥ यजिष्ठेन । मनसा । यक्षि ।
देवान् । अस्रेधता । मन्मना । विप्रः । अग्ने ॥५॥

**त्वद्धि पुत्र सहसो वि पूर्वीर्देवस्य यन्त्यूतयो वि वाजाः ।**
**त्वं देहि सहस्त्रिणं रयिं नोऽद्रोघेण वचसा सत्यमग्ने ॥६॥**

त्वत् । हि । पुत्र । सहसः । वि । पूर्वीः । देवस्य । यन्ति ।
ऊतयः । वि । वाजाः ॥ त्वम् । देहि । सहस्त्रिणम् ।
रयिम् । नः । अद्रोघेण । वचसा । सत्यम् । अग्ने ॥६॥

**तुभ्यं दक्ष कविक्रतो यानीमा देव मर्तासो ऽअध्वरे ऽअकर्म ।**
**त्वं विश्वस्य सुरथस्य बोधि सर्वं तदग्ने ऽअमृत स्वदेह ॥७॥ ( १४ ) [ ७२ ]**

तुभ्यम् । दक्ष । कविक्रतो इति कवि०क्रतो । यानि । इमा । देव ।
मर्तासः । अध्वरे । अकर्म ॥ त्वम् । विश्वस्य । सु०रथस्य ।
बोधि । सर्वम् । तत् । अग्ने । अमृत । स्वद । इह ॥७॥

# ( १५ )

७ कात्य उत्कीलः। अग्निः । त्रिष्टुप् ।

**वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो ऽअमीवाः ।**
**सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य प्रणीतौ ॥१॥**

वि । पाजसा । पृथुना । शोशुचानः । बाधस्व । द्विषः ।
रक्षसः । अमीवाः ॥ सु०शर्मणः । बृहतः । शर्मणि ।
स्याम् । अग्नेः । अहम् । सु०हवस्य । प्र०नीतौ ॥१॥

**त्वं नो ऽअस्या ऽउषसो व्युष्टौ त्वं सूर ऽउदिते बोधि गोपाः ।**
**जन्मेव नित्यं तनयं जुषस्व स्तोमं मे ऽअग्ने तन्वा सुजात ॥२॥**

त्वम् । नः । अस्याः । उषसः । वि०उष्टौ । त्वम् । सूरे ।
उत्०ईते । बोधि । गोपाः ॥ जन्मऽइव । नित्यम् । तनयम् ।
जुषस्व । स्तोमम् । मे । अग्ने । तन्वा । सु०जात ॥२॥

**त्वं नृचक्षा वृषभानु पूर्वीः कृष्णास्वग्ने ऽअरुषो वि भाहि ।**
**वसो नेषि च पर्षि चात्यंहः कृधी नो राय ऽउशिजो यविष्ठ ॥३॥**

त्वम् । नृ०चक्षाः । वृषभ । अनु । पूर्वीः । कृष्णासु । अग्ने ।
अरुषः । वि । भाहि ॥ वसो इति । नेषि । च । पर्षि । च ।
अति । अंहः । कृधि । नः । राये । उशिजः । यविष्ठ ॥३॥

**अषाळ्हो ऽअग्ने वृषभो दिदीहि पुरो विश्वाः सौभगा संजिगीवान् ।**
**यज्ञस्य नेता प्रथमस्य पायोर्जातवेदो बृहतः सुप्रणीते ॥४॥**

अषाळ्हः । अग्ने । वृषभः । दिदीहि । पुरः । विश्वाः ।
सौभगा । सम्०जिगीवान् ॥ यज्ञस्य । नेता । प्रथमस्य ।
पायोः । जात०वेदः । बृहतः । सु०प्रनीते ॥४॥

**अच्छिद्रा शर्म जरितः पुरूणि देवाँ ऽअच्छा दीद्यानः सुमेधाः ।**
**रथो न सस्निरभि वक्षि वाजमग्ने त्वं रोदसी नः सुमेके ॥५॥**
अच्छिद्रा । शर्म । जरितरिति । पुरूणि । देवान् । अच्छ ।
दीद्यानः । सु०मेधाः ॥ रथः । न । सस्निः । अभि । वक्षि ।
वाजम् । अग्ने । त्वम् । रोदसी इति । नः । सुमेके इति सु०मेके ॥५॥

**प्र पीपय वृषभ जिन्व वाजानग्ने त्वं रोदसी नः सुदोघे ।**
**देवेभिर्देव सुरुचा रुचानो मा नो मर्तस्य दुर्मतिः परि ष्ठात् ॥६॥**
प्र । पीपय । वृषभ । जिन्व । वाजान् । अग्ने । त्वम् ।
रोदसी इति । नः । सुदोघे इति सु०दोघे ॥ देवेभिः । देव ।
सु०रुचा । रुचानः । मा । नः । मर्तस्य । दुः२मतिः । परि । स्थात् ॥६॥

**ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।**
**सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥७॥ ( १५ )** [ ७९ ]
इळाम् । अग्ने । पुरु०दंसम् । सनिम् । गोः । शश्वत्०तमम् ।
हवमानाय । साध ॥ स्यात् । नः । सूनुः । तनयः । विजा०वा ।
अग्ने । सा । ते । सु०मतिः । भूतु । अस्मे इति ॥७॥

## ( १६ )

६ कात्य उत्कीलः। अग्निः। प्रगाथः ( = १, ३, ५ बृहती, २, ४, ६ सतो बृहती )

**अयमग्निः सुवीर्यस्येशे महः सौभगस्य ।**
**राय ऽईशे स्वपत्यस्य गोमत ऽईशे वृत्रहथानाम् ॥१॥**
अयम् । अग्निः । सु०वीर्यस्य । ईशे । महः ।
सौभगस्य ॥ रायः । ईशे । सु०अपत्यस्य ।
गो०मतः । ईशे । वृत्र०हथानाम् ॥१॥

**इमं नरो मरुतः सश्चता वृधं यस्मिन्रायः शेवृधासः ।**
**अभि ये सन्ति पृतनासु दूढ्यो विश्वाहा शत्रुमादभुः ॥२॥**
इमम् । नरः । मरुतः । सश्चत । वृधम् । यस्मिन् ।
रायः । शेऽवृधासः ॥ अभि । ये । सन्ति । पृतनासु ।
दुःऽध्यः । विश्वाहा । शत्रुम् । आऽदभुः ॥२॥

**स त्वं नो रायः शिशीहि मीढ्वो ऽअग्ने सुवीर्यस्य ।**
**तुविद्युम्न वर्षिष्ठस्य प्रजावतोऽनमीवस्य शुष्मिणः ॥३॥**
सः । त्वम् । नः । रायः । शिशीहि । मीढ्वः ।
अग्ने । सुऽवीर्यस्य ॥ तुविऽद्युम्न । वर्षिष्ठस्य ।
प्रजाऽवतः । अनमीवस्य । शुष्मिणः ॥३॥

**चक्रियो विश्वा भुवनाभि सासहिश्चक्रिर्देवेष्वा दुवः ।**
**आ देवेषु यतत ऽआ सुवीर्य ऽआ शंस ऽउत नृणाम् ॥४॥**
चक्रिः । यः । विश्वा । भुवना । अभि । ससहिः ।
चक्रिः । देवेषु । आ । दुवः ॥ आ । देवेषु । यतते ।
आ । सुऽवीर्ये । आ । शंसे । उत । नृणाम् ॥४॥

**मा नो ऽअग्नेऽमतये मावीरतायै रीरधः ।**
**मागोतायै सहसस्पुत्र मा निदेऽप द्वेषांस्या कृधि ॥५॥**
मा । नः । अग्ने । अमतये । मा । अवीरतायै ।
रीरधः ॥ मा । अगोतायै । सहसः । पुत्र । मा ।
निदे । अप । द्वेषांसि । आ । कृधि ॥५॥

**शग्धि वाजस्य सुभग प्रजावतोऽग्ने बृहतो ऽअध्वरे ।**
**सं राया भूयसा सृज मयोभुना तुविद्युम्न यशस्वता ॥६॥ ( १६ )** [ ८५ ]

शग्धि । वाजस्य । सु०भग । प्रजा०वतः । अग्ने ।
बृहतः । अध्वरे ॥ सम् । राया । भूयसा । सृज ।
मयः२भुना । तुवि०द्युम्न । यशस्वता ॥६॥

# ( १७ )

५ कतो वैश्वामित्रः । अग्निः । त्रिष्टुप् ।

समिध्यमानः प्रथमानु धर्मा समक्तुभिरज्यते विश्ववारः ।
शोचिष्केशो घृतनिर्णिक्पावकः सुयज्ञो ऽअग्निर्यजथाय देवान् ॥१॥
सम्०इध्यमानः । प्रथमा । अनु । धर्म । सम् । अक्तु०भिः ।
अज्यते । विश्व०वारः॥ शोचिः२केशः । घृत०निर्निक् ।
पावकः । सु०यज्ञः । अग्निः । यजथाय । देवान् ॥१॥

जो होत्रमग्ने पृथिव्या यथा दिवो जातवेदश्चिकित्वान् ।
न हविषा यक्षि देवान्मनुष्वद्यज्ञं प्र तिरेममद्य ॥२॥
यथा । अयजः । होत्रम् । अग्ने । पृथिव्याः । यथा । दिवः ।
जात०वेदः । चिकित्वान् ॥ एव । अनेन । हविषा । यक्षि ।
देवान् । मनुष्वत् । यज्ञम् । प्र । तिर । इमम् । अद्य ॥२॥

त्रीण्यायूंषि तव जातवेदस्तिस्र ऽआजानीरुषसस्ते ऽअग्ने ।
ताभिर्देवानामवो यक्षि विद्वानथा भव यजमानाय शं योः ॥३॥
त्रीणि । आयूंषि । तव । जात०वेदः । तिस्रः । आ०जानीः ।
उषसः । ते । अग्ने ॥ ताभिः । देवानाम् । अवः । यक्षि ।
विद्वान् । अथ । भव । यजमानाय । शम् । योः ॥३॥

अग्निं सुदीतिं सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः ।
त्वां दूतमरतिं हव्यवाहं देवा ऽअकृण्वन्नमृतस्य नाभिम् ॥४॥

अग्निम् । सु०दीतिम् । सु०दृशम् । गृणन्तः । नमस्यामः । त्वा ।
ईड्यम् । जात०वेदः ॥ त्वाम् । दूतम् । अरतिम् । हव्य०वाहम् ।
देवाः । अकृण्वन् । अमृतस्य । नाभिम् ॥४॥

यस्त्वद्धोता पूर्वो ऽअग्ने यजीयान्द्विता च सत्ता स्वधया च शंभुः ।
तस्यानु धर्म प्र यजा चिकित्वोऽथ नो धा ऽअध्वरं देववीतौ ॥५॥ (१७) [९०]
यः । त्वत् । होता । पूर्वः । अग्ने । यजीयान् । द्विता । च ।
सत्ता । स्वधया । च । शम्०भुः ॥ तस्य । अनु । धर्म । प्र ।
यज । चिकित्वः । अथ । नः । धाः । अध्वरम् । देव०वीतौ ॥५॥

# (१८)

५ कतो वैश्वामित्रः । अग्नि । त्रिष्टुप् ।

भवा नो ऽअग्ने सुमना ऽउपेतौ सखेव सख्ये पितरेव साधुः ।
पुरुद्रुहो हि क्षितयो जनानां प्रति प्रतीचीर्दहतादरातीः ॥१॥
भव । नः । अग्ने । सु०मनाः । उप०इतौ । सखाऽइव ।
सख्ये । पितराऽइव । साधुः ॥ पुरु०द्रुहः । हि । क्षितयः ।
जनानाम् । प्रति । प्रतीचीः । दहतात् । अरातीः ॥१॥

तपो ष्वग्ने ऽअन्तराँ ऽअमित्रान्तपा शंसमररुषः परस्य ।
तपो वसो चिकितानो ऽअचित्तान्वि ते तिष्ठन्तामजरा ऽअयासः ॥२॥
तपो इति । सु । अग्ने । अन्तरान् । अमित्रान् । तप । शंसम् ।
अररुषः । परस्य ॥ तपो इति । वसो इति । चिकितानः ।
अचित्तान् । वि । ते । तिष्ठन्ताम् । अजराः । अयासः ॥२॥

इध्मेनाग्न ऽइच्छमानो घृतेन जुहोमि हव्यं तरसे बलाय ।
यावदीशे ब्रह्मणा वन्दमान ऽइमां धियं शतसेयाय देवीम् ॥३॥

इध्मेन॑ । अग्ने॑ । इच्छमा॑नः । घृतेन॑ । जुहोमि॑ ।
हव्यम् । तर॑से । बला॑य ॥ याव॑त् । ईशे॑ । ब्रह्म॑णा ।
वन्द॑मानः । इमाम् । धिय॑म् । शत॰सेया॑य । देवीम् ॥३॥

उच्छोचिषा॑ सहसस्पुत्र स्तुतो बृहद्वयः॑ शशमानेषु धेहि ।
रेवद॑ग्ने विश्वामि॑त्रेषु शं योर्म॑र्मृज्मा ते॑ तन्वं१ भूरि कृत्वः॑ ॥४॥
उत् । शोचिषा॑ । सहसः । पुत्र । स्तुतः । बृहत् । वयः॑ ।
शशमानेषु । धेहि ॥ रेवत् । अग्ने । विश्वामि॑त्रेषु । शम् ।
योः । मर्मृज्म । ते । तन्व॑म् । भूरि॑ । कृत्वः॑ ॥४॥

कृधि रत्नं॑ सुसनितर्धना॑नां स घेद॑ग्ने भवसि यत्समि॑द्धः ।
स्तोतुर्दु॑रोणे सुभग॑स्य रेवत्सृप्रा करस्ना॑ दधिषे वपूं॑षि ॥५॥ (१८) [ ९५ ]
कृधि । रत्न॑म् । सु॰सनितः । धना॑नाम् । सः । घ । इत् ।
अग्ने । भवसि । यत् । सम्॰इद्धः ॥ स्तोतुः । दुरोणे ।
सु॰भग॑स्य । रेवत् । सृप्रा । करस्ना॑ । दधिषे । वपूं॑षि ॥५॥

## ( १९ )

५ गाधी कौशिकः। अग्निः। त्रिष्टुप् ।

अग्निं होता॑रं प्र वृणे मियेधे गृत्सं॑ कविं वि॑श्वविदममू॑रम् ।
स नो॑ यक्षद्देवता॑ता यजी॑यात्राये वाजा॑य वनते मघानि॑ ॥१॥
अग्निम् । होता॑रम् । प्र । वृणे । मियेधे॑ । गृत्स॑म् । कविम् ।
विश्व॰विद॑म् । अमू॑रम् ॥ सः । नः । यक्षत् । देव॰ता॑ता ।
यजी॑यान् । राये । वाजा॑य । वनते । मघानि॑ ॥१॥

प्र ते॑ ऽअग्ने हविष्म॑तीमियर्म्यच्छा॑ सुद्युम्नां रातिनीं॑ घृताचीम् ।
प्रदक्षिणिद्देवता॑तिमुराणः सं रातिभिर्वसुभिर्यज्ञम॑श्रेत् ॥२॥

प्र । ते । अग्ने । हविष्मतीम् । इयर्मि । अच्छ । सुऽद्युम्नाम् ।
रातिनीम् । घृताचीम् ॥ प्रऽदक्षिणित् । देवऽतातिम् । उराणः ।
सम् । रातिऽभिः । वसुऽभिः । यज्ञम् । अश्रेत् ॥२॥

**स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः ।**
**अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः ॥३॥**
सः । तेजीयसा । मनसा । त्वाऽऊतः । उत । शिक्ष ।
सुऽअपत्यस्य । शिक्षोः ॥ अग्ने । रायः । नृऽतमस्य ।
प्रऽभूतौ । भूयाम । ते । सुऽस्तुतयः । च । वस्वः ॥३॥

**भूरीणि हि त्वे दधिरे अनीकाग्ने देवस्य यज्यवो जनासः ।**
**स आ वह देवतातिं यविष्ठ शर्धो यदद्य दिव्यं यजासि ॥४॥**
भूरीणि । हि । त्वे इति । दधिरे । अनीका । अग्ने । देवस्य ।
यज्यवः । जनासः ॥ सः । आ । वह । देवऽतातिम् । यविष्ठ ।
शर्धः । यत् । अद्य । दिव्यम् । यजासि ॥४॥

**यत्त्वा होतारमनजन्मियेधे निषादयन्तो यजथाय देवाः ।**
**स त्वं नो अग्नेऽवितेह बोध्यधि श्रवांसि धेहि नस्तनूषु ॥५॥ ( १९ ) [ १०० ]**
यत् । त्वा । होतारम् । अनजन् । मियेधे । निऽसादयन्तः ।
यजथाय । देवाः ॥ सः । त्वम् । नः । अग्ने । अविता ।
इह । बोधि । अधि । श्रवांसि । धेहि । नः । तनूषु ॥५॥

# ( २० )

**५ गाथी कौशिकः। अग्निः, १, ५ विश्वे देवाः। त्रिष्टुप् ।**

**अग्निमुषसमश्विना दधिक्रां व्युष्टिषु हवते वह्निरुक्थैः ।**
**सुज्योतिषो नः शृण्वन्तु देवाः सजोषसो अध्वरं वावशानाः ॥१॥**

अग्निम् । उषसम् । अश्विना । दधि॰क्राम् । वि॰उष्टिषु ।
हवते । वह्निः । उक्थैः ॥ सु॰ज्योतिषः । नः । शृण्वन्तु ।
देवाः । स॰जोषसः । अध्वरम् । वावशानाः ॥१॥

**अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऽऋतजात पूर्वीः ।**
**तिस्र ऽउ ते तन्वो देववातास्ताभिर्नः पाहि गिरो ऽअप्रयुच्छन् ॥२॥**
अग्ने । त्री । ते । वाजिना । त्री । सध॰स्था । तिस्रः । ते ।
जिह्वाः । ऋत॰जात । पूर्वीः ॥ तिस्रः । ऊँ इति । ते । तन्वः ।
देव॰वाताः । ताभिः । नः । पाहि । गिरः । अप्र॰युच्छन् ॥२॥

**अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य नाम ।**
**याश्च माया मायिनां विश्वमिन्व त्वे पूर्वीः संदधुः पृष्टबन्धो ॥३॥**
अग्ने । भूरीणि । तव । जात॰वेदः । देव । स्वधा॰वः ।
अमृतस्य । नाम ॥ याः । च । माया । मायिनाम् । विश्वम्॰इन्व ।
त्वे इति । पूर्वीः । सम्॰दधुः । पृष्टबन्धो इति पृष्ट॰बन्धो ॥३॥

**अग्निर्नेता भगइव क्षितीनां दैवीनां देव ऽऋतुपा ऽऋतावा ।**
**स वृत्रहा सनयो विश्ववेदाः पर्षद्विश्वाति दुरिता गृणन्तम् ॥४॥**
अग्निः । नेता । भगः॰इव । क्षितीनाम् । दैवीनाम् । देवः ।
ऋतु॰पाः । ऋत॰वा ॥ सः । वृत्र॰हा । सनयः । विश्व॰वेदाः ।
पर्षत् । विश्वा । अति । दुः॰इता । गृणन्तम् ॥४॥

**दधिक्रामग्निमुषसं च देवीं बृहस्पतिं सवितारं च देवम् ।**
**अश्विना मित्रावरुणा भगं च वसूंरुद्राँ ऽआदित्याँ ऽइह हुवे ॥५॥ ( २० ) [ १०५ ]**
दधि॰क्राम् । अग्निम् । उषसम् । च । देवीम् । बृहस्पतिम् ।
सवितारम् । च । देवम् ॥ अश्विना । मित्रावरुणा । भगम् ।
च । वसून् । रुद्रान् । आदित्यान् । इह । हुवे ॥५॥

# ( २१ )

५ गाथी कौशिकः। अग्निः। १ त्रिष्टुप्, २-३ अनुष्टुप्, ४ विराड्रूपा, ५ सतो बृहती।

इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व ।
स्तोकानामग्ने मेदसो घृतस्य होतः प्राशान प्रथमो निषद्य ॥१॥
इमम् । नः । यज्ञम् । अमृतेषु । धेहि । इमा । हव्या ।
जात०वेदः । जुषस्व ॥ स्तोकानाम् । अग्ने । मेदसः ।
घृतस्य । होतरिति । प्र । अशान । प्रथमः । नि०सद्य ॥१॥

घृतवन्तः पावक ते स्तोकाः श्चोतन्ति मेदसः ।
स्वधर्मन्देववीतये श्रेष्ठं नो धेहि वार्यम् ॥२॥
घृत०वन्तः । पावक । ते । स्तोकाः । श्चोतन्ति । मेदसः ॥
स्व०धर्मन् । देव०वीतये । श्रेष्ठम् । नः । धेहि । वार्यम् ॥२॥

तुभ्यं स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्य ।
ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भव ॥३॥
तुभ्यम् । स्तोकाः । घृत०श्चुतः । अग्ने । विप्राय । सन्त्य ॥
ऋषिः । श्रेष्ठः । सम् । इध्यसे । यज्ञस्य । प्र०अविता । भव ॥३॥

तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो ऽअग्ने मेदसो घृतस्य ।
कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर ॥४॥
तुभ्यम् । श्चोतन्ति । अध्रिगो इत्यध्रि०गो । शची०वः ।
स्तोकासः । अग्ने । मेदसः । घृतस्य ॥ कवि०शस्तः ।
बृहता । भानुना । आ । अगाः । हव्या । जुषस्व । मेधिर ॥४॥

ओजिष्ठं ते मध्यतो मेद ऽउद्भृतं प्र ते वयं ददामहे ।
श्चोतन्ति ते वसो स्तोका ऽअधि त्वचि प्रति तान्देवशो विहि ॥५॥ ( २१ ) [ ११० ]

ओजिष्ठम् । ते । मध्यतः । मेदः । उत्ऽभृतम् । प्र । ते ।
वयम् । ददामहे ॥ श्चोतन्ति । ते । वसो इति । स्तोकाः ।
अधि । त्वचि । प्रति । तान् । देवऽशः । विहि ॥५॥

## ( २२ )

५ गाथी कौशिकः। अग्निः, ४ पुरीष्या अग्नयः। त्रिष्टुप्, ४ अनुष्टुप् ।

**अयं सो ऽअग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः ।**
**सहस्रिणं वाजमत्यं न सप्तिं ससवान्त्सन्त्स्तूयसे जातवेदः ॥१॥**
अयम् । सः । अग्निः । यस्मिन् । सोमम् । इन्द्रः । सुतम् ।
दधे । जठरे । वावशानः ॥ सहस्रिणम् । वाजम् । अत्यम् ।
न । सप्तिम् । ससऽवान् । सन् । स्तूयसे । जातऽवेदः ॥१॥

**अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र ।**
**येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ॥२॥**
अग्ने । यत् । ते । दिवि । वर्चः । पृथिव्याम् । यत् । ओषधीषु ।
अप्ऽसु । आ । यजत्र ॥ येन । अन्तरिक्षम् । उरु । आऽततन्थ ।
त्वेषः । सः । भानुः । अर्णवः । नृऽचक्षाः ॥२॥

**अग्ने दिवो ऽअर्णमच्छा जिगास्यच्छा देवाँ ऽऊचिषे धिष्ण्या ये ।**
**या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्त ऽआपः ॥३॥**
अग्ने । दिवः । अर्णम् । अच्छ । जिगासि । अच्छ । देवान् ।
ऊचिषे । धिष्ण्याः । ये ॥ याः । रोचने । परस्तात् । सूर्यस्य ।
याः । च । अवस्तात् । उपऽतिष्ठन्ते । आपः ॥३॥

**पुरीष्यासो ऽअग्नयः प्रावणेभिः सजोषसः ।**
**जुषन्तां यज्ञमद्रुहोऽनमीवा ऽइषो महीः ॥४॥**

पुरीष्यासः । अग्नयः । प्रवणेभिः । स०जोषसः ॥
जुषन्ताम् । यज्ञम् । अद्रुहः । अनमीवाः । इषः । महीः ॥४॥

**इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।**
**स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥५॥ ( २२ ) [ ११५ ]**
इळाम् । अग्ने । पुरु०दंसम् । सनिम् । गोः । शश्वत्०तमम् ।
हवमानाय । साध ॥ स्यात् । नः । सूनुः । तनयः । विजा०वा ।
अग्ने । सा । ते । सु०मतिः । भूतु । अस्मे इति ॥५॥

# ( २३ )

**५ देवश्रवा देववातश्च भारतौ। अग्निः। त्रिष्टुप्, ३ सतोबृहती।**

**निर्मथितः सुधित ऽआ सधस्थे युवा कविरध्वरस्य प्रणेता ।**
**जूर्यत्स्वग्निरजरो वनेष्वत्रा दधे ऽअमृतं जातवेदाः ॥१॥**
निः२मथितः । सु०धितः । आ । सध०स्थे । युवा ।
कविः । अध्वरस्य । प्र०नेता ॥ जूर्यत्०सु । अग्निः ।
अजरः । वनेषु । अत्र । दधे । अमृतम् । जात०वेदाः ॥१॥

**अमन्थिष्टां भारता रेवदग्निं देवश्रवा देववातः सुदक्षम् ।**
**अग्ने वि पश्य बृहताभि रायेषां नो नेता भवतादनु द्यून् ॥२॥**
अमन्थिष्टाम् । भारता । रेवत् । अग्निम् । देव०श्रवाः ।
देव०वातः । सु०दक्षम् ॥ अग्ने । वि । पश्य । बृहता ।
अभि । राया । इषाम् । नः । नेता । भवतात् । अनु । द्यून् ॥२॥

**दश क्षिपः पूर्व्यं सीमजीजनन्त्सुजातं मातृषु प्रियम् ।**
**अग्निं स्तुहि दैववातं देवश्रवो यो जनानामसद्वशी ॥३॥**

दर्श । क्षिपः । पूर्व्यम् । सीम् । अजीजनन् । सु०जातम् ।
मातृषु । प्रियम् ॥ अग्निम् । स्तुहि । दैव०वातम् ।
देव०श्रवः । यः । जनानाम् । असत् । वशी ॥३॥

नि त्वा दधे वर ऽआ पृथिव्या ऽइळायास्पदे सुदिनत्वे ऽअह्नाम् ।
दृषद्वत्यां मानुष ऽआपयायां सरस्वत्यां रेवदग्ने दिदीहि ॥४॥
नि । त्वा । दधे । वरे । आ । पृथिव्याः । इळायाः ।
पदे । सुदिन०त्वे । अह्नाम् ॥ दृषत्०वत्याम् । मानुषे ।
आपयायाम् । सरस्वत्याम् । रेवत् । अग्ने । दिदीहि ॥४॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥५॥ (२३) [१२०]
इळाम् । अग्ने । पुरु०दंसम् । सनिम् । गोः । शश्वत्०तमम् ।
हवमानाय । साध ॥ स्यात् । नः । सूनुः । तनयः । विजा०वा ।
अग्ने । सा । ते । सु०मतिः । भूतु । अस्मे इति ॥५॥

## (२४)

५ गाथिनो विश्वामित्रः। अग्निः। गायत्री, १ अनुष्टुप् ।

अग्ने सहस्व पृतना ऽअभिमातीरपास्य ।
दुष्टरस्तरन्नरातीर्वर्चो धा यज्ञवाहसे ॥१॥
अग्ने । सहस्व । पृतनाः । अभि०मातीः । अप । अस्य ॥
दुस्तरः । तरन् । अरातीः । वर्चः । धाः । यज्ञ०वाहसे ॥१॥

अग्न ऽइळा समिध्यसे वीतिहोत्रो ऽअमर्त्यः ।
जुषस्व सू नो ऽअध्वरम् ॥२॥
अग्ने । इळा । सम् । इध्यसे । वीति०होत्रः । अमर्त्यः ॥
जुषस्व । सु । नः । अध्वरम् ॥२॥

अग्ने द्युम्नेन जागृवे सहसः सूनवाहुत ।
एदं बर्हिः सदो मम ॥३॥
अग्ने । द्युम्नेन । जागृवे । सहसः । सूनो इति । आ०हुत ॥
आ । इदम् । बर्हिः । सदः । मम ॥३॥

अग्ने विश्वेभिरग्निभिर्देवेभिर्महया गिरः ।
यज्ञेषु य उ चायवः ॥४॥
अग्ने । विश्वेभिः । अग्नि०भिः । देवेभिः । महय । गिरः ॥
यज्ञेषु । ये । ऊँ इति । चायवः ॥४॥

अग्ने दा दाशुषे रयिं वीरवन्तं परीणसम् ।
शिशीहि नः सूनुमतः ॥५॥ ( २४ ) [ १२५ ]
अग्ने । दाः । दाशुषे । रयिम् । वीर०वन्तम् । परीणसम् ॥
शिशीहि । नः । सूनु०मतः ॥५॥

# ( २५ )

५ गाथिनो विश्वामित्रः। अग्निः। ४ अग्नीन्द्रौ। विराट्।

अग्ने दिवः सूनुरसि प्रचेतास्तना पृथिव्या उत विश्ववेदाः ।
ऋधग्देवाँ इह यजा चिकित्वः ॥१॥
अग्ने । दिवः । सूनुः । असि । प्र०चेताः । तना । पृथिव्याः । उत । विश्व०वेदाः ॥
ऋधक् । देवान् । इह । यज । चिकित्वः ॥१॥

अग्निः सनोति वीर्याणि विद्वान्त्सनोति वाजममृताय भूषन् ।
स नो देवाँ एह वहा पुरुक्षो ॥२॥
अग्निः । सनोति । वीर्याणि । विद्वान् । सनोति । वाजम् । अमृताय । भूषन् ॥
सः । नः । देवान् । आ । इह । वह । पुरुक्षो इति पुरु०क्षो ॥२॥

**अग्निर्द्यावापृथिवी विश्वजन्ये ऽआ भाति देवी ऽअमृते ऽअमूरः ।**
**क्षयन्वाजैः पुरुश्चन्द्रो नमोभिः ॥३॥**
अग्निः । द्यावापृथिवी इति । विश्वजन्ये इति विश्व०जन्ये ।
आ । भाति । देवी इति । अमृते इति । अमूरः ॥
क्षयन् । वाजैः । पुरु०चन्द्रः । नमः२भिः ॥३॥

**अग्न ऽइन्द्रश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोप यातम् ।**
**अमर्धन्ता सोमपेयाय देवा ॥४॥**
अग्ने । इन्द्रः । च । दाशुषः । दुरोणे ।
सुत०वतः । यज्ञम् । इह । उप । यातम् ॥
अमर्धन्ता । सोम०पेयाय । देवा ॥४॥

**अग्ने ऽअपां समिध्यसे दुरोणे नित्यः सूनो सहसो जातवेदः ।**
**सधस्थानि महयमान ऽऊती ॥५॥ ( २५ )** [ १३० ]
अग्ने । अपाम् । सम् । इध्यसे । दुरोणे ।
नित्यः । सूनो इति । सहसः । जात०वेदः ॥
सध०स्थानि । महयमानः । ऊती ॥५॥

# ( २६ )

**९ गाथिनो विश्वामित्रः, ७ आत्मा। १-३ वैश्वानरोऽग्निः, ४-६ मरुतः, ७-८ आत्मा (अग्निर्वा), ९ विश्वामित्रोपाध्यायः । १-६ जगती, ७-९ त्रिष्टुप् ।**

**वैश्वानरं मनसाग्निं निचाय्या हविष्मन्तो ऽअनुषत्यं स्वर्विदम् ।**
**सुदानुं देवं रथिरं वसूयवो गीर्भी रण्वं कुशिकासो हवामहे ॥१॥**
वैश्वानरम् । मनसा । अग्निम् । नि०चाय्य । हविष्मन्तः ।
अनु०सत्यम् । स्वः२विदम् ॥ सु०दानुम् । देवम् । रथिरम् ।
वसु०यवः । गीः२भिः । रण्वम् । कुशिकासः । हवामहे ॥१॥

**तं शुभ्रमग्निमवसे हवामहे वैश्वानरं मातरिश्वानमुक्थ्यम् ।**
**बृहस्पतिं मनुषो देवतातये विप्रं श्रोतारमतिथिं रघुष्यदम् ॥२॥**
तम् । शुभ्रम् । अग्निम् । अवसे । हवामहे । वैश्वानरम् ।
मातरिश्वानम् । उक्थ्यम् ॥ बृहस्पतिम् । मनुषः ।
देव०तातये । विप्रम् । श्रोतारम् । अतिथिम् । रघु०स्यदम् ॥२॥

**अश्वो न क्रन्दञ्जनिभिः समिध्यते वैश्वानरः कुशिकेभिर्युगेयुगे ।**
**स नो ऽअग्निः सुवीर्यं स्वश्व्यं दधातु रत्नममृतेषु जागृविः ॥३॥**
अश्वः । न । क्रन्दन् । जनि०भिः । सम् । इध्यते । वैश्वानरः ।
कुशिकेभिः । युगे०युगे ॥ सः । नः । अग्निः । सु०वीर्यम् ।
सु०अश्व्यम् । दधातु । रत्नम् । अमृतेषु । जागृविः ॥३॥

**प्र यन्तु वाजास्तविषीभिरग्नयः शुभे संमिश्लाः पृषतीरयुक्षत ।**
**बृहदुक्षो मरुतो विश्ववेदसः प्र वेपयन्ति पर्वताँ ऽअदाभ्याः ॥४॥**
प्र । यन्तु । वाजाः । तविषीभिः । अग्नयः । शुभे ।
सम्०मिश्लाः । पृषतीः । अयुक्षत ॥ बृहत्०उक्षः । मरुतः ।
विश्व०वेदसः । प्र । वेपयन्ति । पर्वतान् । अदाभ्याः ॥४॥

**अग्निश्रियो मरुतो विश्वकृष्टय ऽआ त्वेषमुग्रमव ऽईमहे वयम् ।**
**ते स्वानिनो रुद्रिया वर्षनिर्णिजः सिंहा न हेषक्रतवः सुदानवः ॥५॥ ( २६ )**
अग्नि०श्रियः । मरुतः । विश्व०कृष्टयः । आ । त्वेषम् ।
उग्रम् । अवः । ईमहे । वयम् ॥ ते । स्वानिनः । रुद्रियाः ।
वर्ष०निर्निजः । सिंहाः । न । हेष०क्रतवः । सु०दानवः ॥५॥

**व्रातंव्रातं गणंगणं सुशस्तिभिरग्नेर्भामं मरुतामोज ऽईमहे ।**
**पृषदश्वासो ऽअनवभ्रराधसो गन्तारो यज्ञं विदथेषु धीराः ॥६॥**

व्रातम्०व्रातम् । गणम्०गणम् । सुशस्ति०भिः । अग्नेः । भामम् ।
मरुताम् । ओजः । ईमहे ॥ पृषत्०अश्वासः । अनवभ्र०राधसः ।
गन्तारः । यज्ञम् । विदथेषु । धीराः ॥६॥

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं मऽआसन् ।
अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥७॥
अग्निः । अस्मि । जन्मना । जात०वेदाः । घृतम् । मे ।
चक्षुः । अमृतम् । मे । आसन् ॥ अर्कः । त्रि०धातुः ।
रजसः । वि०मानः । अजस्रः । घर्मः । हविः । अस्मि । नाम ॥७॥

त्रिभिः पवित्रैरपुपोद्ध्यर्१कं हृदा मतिं ज्योतिरनु प्रजानन् ।
वर्षिष्ठं रत्नमकृत स्वधाभिरादिद्द्यावापृथिवी पर्यपश्यत् ॥८॥
। पवित्रैः । अपुपोत् । हि । अर्कम् । हृदा । मतिम् ।
। अनु । प्र०जानन् ॥ वर्षिष्ठम् । रत्नम् । अकृत ।
: । आत् । इत् । द्यावापृथिवी इति । परि । अपश्यत् ॥८॥

शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम् ।
मेळिं मदन्तं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचम् ॥९॥ ( २७ ) [ १३९ ]
शत०धारम् । उत्सम् । अक्षीयमाणम् । विपः२चितम् ।
पितरम् । वक्त्वानाम् ॥ मेळिम् । मदन्तम् । पित्रोः ।
उप०स्थे । तम् । रोदसी इति । पिपृतम् । सत्य०वाचम् ॥९॥

## ( २७ )

१५ गाथिनो विश्वामित्रः। अग्निः, १ ऋतवो वा। गायत्री ।

प्र वो वाजा ऽअभिद्यवो हविष्मन्तो घृताच्या ।
देवाञ्जिगाति सुम्नयुः ॥१॥

प्र । वः । वाजाः । अभि०द्यवः । हविष्मन्तः । घृताच्या ॥
देवान् । जिगाति । सुम्नयुः ॥१॥

**ईळे ऽअग्निं विपश्चितं गिरा यज्ञस्य साधनम् ।**
**श्रुष्टीवानं धितावानम् ॥२॥**
ईळे । अग्निम् । विपःऽचितम् । गिरा । यज्ञस्य । साधनम् ॥
श्रुष्टी०वानम् । धित०वानम् ॥२॥

**अग्ने शकेम ते वयं यमं देवस्य वाजिनः ।**
**अति द्वेषांसि तरेम ॥३॥**
अग्ने । शकेम । ते । वयम् । यमम् । देवस्य । वाजिनः ॥
अति । द्वेषांसि । तरेम ॥३॥

**समिध्यमानो ऽअध्वरे ऽग्निः पावक ऽईड्यः ।**
**शोचिष्केशस्तमीमहे ॥४॥**
सम्०इध्यमानः । अध्वरे । अग्निः । पावकः । ईड्यः ॥
शोचिःऽकेशः । तम् । ईमहे ॥४॥

**पृथुपाजा ऽअमर्त्त्यो घृतनिर्णिक्स्वाहुतः ।**
**अग्निर्यज्ञस्य हव्यवाट् ॥५॥ ( २८ )**
पृथु०पाजाः । अमर्त्त्यः । घृत०निर्निक् । सु०आहुतः ॥
अग्निः । यज्ञस्य । हव्य०वाट् ॥५॥

**तं सबाधो यतस्रुच ऽइत्था धिया यज्ञवन्तः ।**
**आ चक्रुरग्निमूतये ॥६॥**

तम् । स॰बाधः । यत॰स्रुचः । इत्था । धिया । यज्ञ॰वन्तः ॥
आ । चक्रुः । अग्निम् । ऊतये ॥६॥

होता देवो ऽअमर्त्यः पुरस्तादेति मायया ।
विदथानि प्रचोदयन् ॥७॥
होता । देवः । अमर्त्यः । पुरस्तात् । एति । मायया ॥
विदथानि । प्र॰चोदयन् ॥७॥

वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते ।
विप्रो यज्ञस्य साधनः ॥८॥
वाजी । वाजेषु । धीयते । अध्वरेषु । प्र । नीयते ॥
विप्रः । यज्ञस्य । साधनः ॥८॥

धिया चक्रे वरेण्यो भूतानां गर्भमा दधे ।
दक्षस्य पितरं तना ॥९॥
धिया । चक्रे । वरेण्यः । भूतानाम् । गर्भम् । आ । दधे ॥
दक्षस्य । पितरम् । तना ॥९॥

नि त्वा दधे वरेण्यं दक्षस्येळा सहस्कृत ।
अग्ने सुदीतिमुशिजम् ॥१०॥ ( २९ )
नि । त्वा । दधे । वरेण्यम् । दक्षस्य । इळा । सहः॰कृत ॥
अग्ने । सु॰दीतिम् । उशिजम् ॥१०॥

अग्निं यन्तुरमप्तुरमृतस्य योगे वनुषः ।
विप्रा वाजैः समिन्धते ॥११॥

अग्निम् । यन्तुरम् । अप्ऽतुरम् । ऋतस्य । योगे । वनुषः ॥
विप्राः । वाजैः । सम् । इन्धते ॥११॥

**ऊर्जो नपातमध्वरे दीदिवांसमुप द्यवि ।**
**अग्निमीळे कविक्रतुम् ॥१२॥**
ऊर्जः । नपातम् । अध्वरे । दीदिऽवांसम् । उप । द्यवि ॥
अग्निम् । ईळे । कविऽक्रतुम् ॥१२॥

**ईळेन्यो नमस्यस्तिरस्तमांसि दर्शतः ।**
**समग्निरिध्यते वृषा ॥१३॥**
ईळेन्यः । नमस्यः । तिरः । तमांसि । दर्शतः ॥
सम् । अग्निः । इध्यते । वृषा ॥१३॥

**वृषो ऽअग्निः समिध्यतेऽश्वो न देववाहनः ।**
**तं हविष्मन्त ऽईळते ॥१४॥**
वृषो इति । अग्निः । सम् । इध्यते । अश्वः । न । देवऽवाहनः ॥
तम् । हविष्मन्तः । ईळते ॥१४॥

**वृषणं त्वा वयं वृषन्वृषणः समिधीमहि ।**
**अग्ने दीद्यतं बृहत् ॥१५॥ (३०)** [१५४]
वृषणम् । त्वा । वयम् । वृषन् । वृषणः । सम् । इधीमहि ॥
अग्ने । दीद्यतम् । बृहत् ॥१५॥

# (२८)

**६ गाथिनो विश्वामित्रः। अग्निः। १-२, ६ गायत्री, ३ उष्णिक्, ४ त्रिष्टुप्, ५ जगती।**
**अग्ने जुषस्व नो हविः पुरोळाशं जातवेदः ।**
**प्रातःसावे धियावसो ॥१॥**

अग्ने । जुषस्व । नः । हविः । पुरोळाशम् । जात०वेदः ॥
प्रातः२सावे । धियावसो इति धिया०वसो ॥१॥

**पुरोळा ऽअग्ने पचतस्तुभ्यं वा घा परिष्कृतः ।**
**तं जुषस्व यविष्ठ्य ॥२॥**

पुरोळाः । अग्ने । पचतः । तुभ्यम् । वा । घ । परि०कृतः ॥
तम् । जुषस्व । यविष्ठ्य ॥२॥

**अग्ने वीहि पुरोळाशमाहुतं तिरोअह्न्यम् ।**
**सहसः सूनुरस्यध्वरे हितः ॥३॥**

अग्ने । वीहि । पुरोळाशम् । आ०हुतम् । तिरः२अह्न्यम् ॥
सहसः । सूनुः । असि । अध्वरे । हितः ॥३॥

**दिने सवने जातवेदः पुरोळाशमिह कवे जुषस्व ।**
**यह्वस्य तव भागधेयं न प्र मिनन्ति विदथेषु धीराः ॥४॥**

न्दिने । सवने । जात०वेदः । पुरोळाशम् ।
इह । कवे । जुषस्व ॥ अग्ने । यह्वस्य । तव ।
भाग०धेयम् । न । प्र । मिनन्ति । विदथेषु । धीराः ॥४॥

**अग्ने तृतीये सवने हि कानिषः पुरोळाशं सहसः सूनवाहुतम् ।**
**अथा देवेष्वध्वरं विपन्यया धा रत्नवन्तममृतेषु जागृविम् ॥५॥**

अग्ने । तृतीये । सवने । हि । कानिषः । पुरोळाशम् । सहसः ।
सूनो इति । आ०हुतम् ॥ अथ । देवेषु । अध्वरम् । विपन्यया ।
धाः । रत्न०वन्तम् । अमृतेषु । जागृविम् ॥५॥

**अग्ने वृधान ऽआहुतिं पुरोळाशं जातवेदः ।**
**जुषस्व तिरोअह्न्यम् ॥६॥ ( ३१ )** [ १६० ]

अग्ने । वृधानः । आऽहुतिम् । पुरोळाशम् ।
जातऽवेदः ॥ जुषस्व । तिरःऽअह्न्यम् ॥६॥

# ( २९ )

**१६ गाथिनो विश्वामित्रः । अग्निः, ५ ऋत्विजो वा । त्रिष्टुप्, १, ४, १०, १२ अनुष्टुप्, ६, ११, १४, १५ जगती ।**

**अस्तीदमधिमन्थनमस्ति प्रजननं कृतम् ।**
**एतां विश्पत्नीमा भराग्निं मन्थाम पूर्वथा ॥१॥**
अस्ति । इदम् । अधिऽमन्थनम् । अस्ति । प्रऽजननम् । कृतम् ॥
एताम् । विश्पत्नीम् । आ । भर । अग्निम् । मन्थाम । पूर्वऽथा ॥१॥

**अरण्योर्निहितो जातवेदा गर्भइव सुधितो गर्भिणीषु ।**
**दिवेदिव ऽईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥२॥**
अरण्योः । निऽहितः । जातऽवेदाः । गर्भःऽइव ।
सुऽधितः । गर्भिणीषु ॥ दिवेऽदिवे । ईड्यः ।
जागृवत्ऽभिः । हविष्मत्ऽभिः । मनुष्येभिः । अग्निः ॥२॥

**उत्तानायामव भरा चिकित्वान्त्सद्यः प्रवीता वृषणं जजान ।**
**अरुषस्तूपो रुशदस्य पाज ऽइळायास्पुत्रो वयुनेऽजनिष्ट ॥३॥**
उत्तानायाम् । अव । भर । चिकित्वान् । सद्यः ।
प्रऽवीता । वृषणम् । जजान ॥ अरुषऽस्तूपः । रुशत् ।
अस्य । पाजः । इळायाः । पुत्रः । वयुने । अजनिष्ट ॥३॥

**इळायास्त्वा पदे वयं नाभा पृथिव्या ऽअधि ।**
**जातवेदो नि धीमह्यग्ने हव्याय वोळ्हवे ॥४॥**
इळायाः । त्वा । पदे । वयम् । नाभा । पृथिव्याः । अधि ॥
जातऽवेदः । नि । धीमहि । अग्ने । हव्याय । वोळ्हवे ॥४॥

मन्थता नरः कविमद्वयन्तं प्रचेतसममृतं सुप्रतीकम् ।
यज्ञस्य केतुं प्रथमं पुरस्तादग्निं नरो जनयता सुशेवम् ॥५॥ (३२)
मन्थत । नरः । कविम् । अद्वयन्तम् । प्र०चेतसम् ।
अमृतम् । सु०प्रतीकम् ॥ यज्ञस्य । केतुम् । प्रथमम् ।
पुरस्तात् । अग्निम् । नरः । जनयत । सु०शेवम् ॥५॥

यदी मन्थन्ति बाहुभिर्वि रोचतेऽश्वो न वाज्यरुषो वनेष्वा ।
चित्रो न यामन्नश्विनोरनिवृतः परि वृणक्त्यश्मनस्तृणा दहन् ॥६॥
यदि । मन्थन्ति । बाहु०भिः । वि । रोचते । अश्वः । न । वाजी ।
अरुषः । वनेषु । आ ॥ चित्रः । न । यामन् । अश्विनोः ।
अनि०वृतः । परि । वृणक्ति । अश्मनः । तृणा । दहन् ॥६॥

जातो ऽअग्नी रोचते चेकितानो वाजी विप्रः कविशस्तः सुदानुः ।
यं देवास ऽईड्यं विश्वविदं हव्यवाहमदधुरध्वरेषु ॥७॥
जातः । अग्निः । रोचते । चेकितानः । वाजी । विप्रः ।
कवि०शस्तः । सु०दानुः ॥ यम् । देवासः । ईड्यम् ।
विश्व०विदम् । हव्य०वाहम् । अदधुः । अध्वरेषु ॥७॥

सीद होतः स्व ऽउ लोके चिकित्वान्सादया यज्ञं सुकृतस्य योनौ ।
देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥८॥
सीद । होतरिति । स्वे । ऊँ इति । लोके । चिकित्वान् ।
सादय । यज्ञम् । सु०कृतस्य । योनौ ॥ देव०अवीः । देवान् ।
हविषा । यजासि । अग्ने । बृहत् । यजमाने । वयः । धाः ॥८॥

कृणोत धूमं वृषणं सखायोऽस्रेधन्त ऽइतन वाजमच्छ ।
अयमग्निः पृतनाषाट् सुवीरो येन देवासो ऽअसहन्त दस्यून् ॥९॥

कृणोत । धूमम् । वृषणम् । सखायः । अस्रेधन्तः ।
इतन । वाजम् । अच्छ ॥ अयम् । अग्निः । पृतनाषाट् ।
सु०वीरः । येन । देवासः । असहन्त । दस्यून् ॥९॥

**अयं ते योनिर्ऋत्वियो यतो जातो ऽअरोचथाः ।**
**तं जानन्नग्न ऽआ सीदाथा नो वर्द्धया गिरः ॥१०॥ ( ३३ )**
अयम् । ते । योनिः । ऋत्वियः । यतः । जातः । अरोचथाः ॥
तम् । जानन् । अग्ने । आ । सीद । अथ । नः । वर्द्धय । गिरः ॥१०॥

**तनूनपादुच्यते गर्भ ऽआसुरो नराशंसो भवति यद्विजायते ।**
**मातरिश्वा यदमिमीत मातरि वातस्य सर्गो ऽअभवत्सरीमणि ॥११॥**
तनू३नपात् । उच्यते । गर्भः । आसुरः । नराशंसः । भवति ।
यत् । वि०जायते ॥ मातरिश्वा । यत् । अमिमीत । मातरि ।
वातस्य । सर्गः । अभवत् । सरीमणि ॥११॥

**सुनिर्मथा निर्मथितः सुनिधा निहितः कविः ।**
**अग्ने स्वध्वरा कृणु देवान्देवयते यज ॥१२॥**
सुनिः२मथा । निः२मथितः । सु०निधा । नि०हितः । कविः ॥
अग्ने । सु०अध्वरा । कृणु । देवान् । देव०यते । यज ॥१२॥

**अजीजनन्नमृतं मर्त्त्यासोऽस्रेमाणं तरणिं वीळुजम्भम् ।**
**दश स्वसारो ऽअग्रुवः समीचीः पुमांसं जातमभि सं रभन्ते ॥१३॥**
अजीजनन् । अमृतम् । मर्त्त्यासः । अस्रेमाणम् । तरणिम् ।
वीळु०जम्भम् ॥ दश । स्वसारः । अग्रुवः । सम्०ईचीः ।
पुमांसम् । जातम् । अभि । सम् । रभन्ते ॥१३॥

**प्र सप्तहोता सनकादरोचत मातुरुपस्थे यदशोचदूधनि ।**
**न नि मिषति सुरणो दिवेदिवे यदसुरस्य जठरादजायत ॥१४॥**
प्र । सप्त०होता । सनकात् । अरोचत । मातुः । उप०स्थे ।
यत् । अशोचत् । ऊधनि ॥ न । नि । मिषति । सु०रणः ।
दिवे०दिवे । यत् । असुरस्य । जठरात् । अजायत ॥१४॥

**अमित्रायुधो मरुतामिव प्रयाः प्रथमजा ब्रह्मणो विश्वमिद्विदुः ।**
**द्युम्नवद्ब्रह्म कुशिकास ऽएरिर ऽएकएको दमे ऽअग्निं समीधिरे ॥१५॥**
अमित्र०युधः । मरुताम्ऽइव । प्र०याः । प्रथम०जाः । ब्रह्मणः ।
विश्वम् । इत् । विदुः ॥ द्युम्न०वत् । ब्रह्म । कुशिकासः । आ ।
ईरिरे । एकः२एकः । दमे । अग्निम् । सम् । ईधिरे ॥१५॥

**यदद्य त्वा प्रयति यज्ञे ऽअस्मिन्होतश्चिकित्वोऽवृणीमहीह ।**
**ध्रुवमया ध्रुवमुताशमिष्ठाः प्रजानन्विद्वाँ ऽउप याहि सोमम् ॥१६॥ ( ३४ ) [ १७६ ]**
यत् । अद्य । त्वा । प्र०यति । यज्ञे । अस्मिन् । होतरिति ।
चिकित्वः । अवृणीमहि । इह ॥ ध्रुवम् । अयाः । ध्रुवम् ।
उत । अशमिष्ठाः । प्र०जानन् । विद्वान् । उप । याहि । सोमम् ॥१६॥

॥ इति तृतीयाष्टके प्रथमोऽध्यायः ॥१॥

# प्रथमाध्यायस्य मन्त्रवर्गानुक्रमणी

प्र य आरुः ॥१॥
उतो पितृभ्यां ॥२॥
अञ्जन्ति त्वाम. ॥३॥
यान् वो नरो ॥४॥
सखायस्त्वा ॥ ५॥
तं त्वा मर्त्ता ॥६॥
त्वामग्ने मनीषिणः ॥७॥
अग्निं वर्द्धन्तु ॥८॥
अग्निर्होता पुरोहितो ॥९॥
साह्वान् विश्वा ॥१०॥
इन्द्राग्नी आ गतं ॥११॥
इन्द्राग्नी नवतिं ॥१२॥
प्र वो देवायाग्नये ॥१३॥
आ होता मन्द्रो ॥१४॥
वि पाजसा पृथुना ॥१५॥
अयमग्निः सुवीर्य. ॥१६॥
समिध्यमानः प्रथमा. ॥१७॥
भवा नो अग्ने ॥१८॥
अग्निं होतारं ॥१९॥
अग्निमुषसम. ॥२०॥
इमं नो यज्ञम. ॥२१॥
अयं सो अग्नि. ॥२२॥
निर्मथितः सुधित ॥२३॥
अग्ने सहस्व ॥२४॥
अग्ने दिवः सूनु. ॥२५॥
वैश्वानरं मनसा. ॥२६॥
व्रातंव्रातं गणंगणं ॥२७॥
प्र वो वाजा ॥२८॥
तं सबाधो यतस्रुच ॥२९॥
अग्निं यन्तुरम. ॥३०॥
अग्ने जुषस्व नो ॥३१॥
अस्तीदमधिमन्थन ॥३२॥
यदी मन्थन्ति ॥३३॥
तनूनपादुच्यते ॥३४॥

**॥ इति शाङ्खायनसंहितायां तृतीयाष्टके प्रथमोऽध्यायः ॥**
**(प्रथमाध्याये वर्गाः ३४, सूक्तानि २३, ऋचः १७६)**

# ॥ तृतीयाष्टके द्वितीयोऽध्यायः॥

अथ द्वितीयोऽध्यायः॥२॥ वर्गाः १-२६ ] [ तृतीयमण्डले सूक्तानि ३०-३९

( ३० ) [ अथ तृतीयोऽनुवाकः॥३॥सू.३०-३८

२२ गाथिनो विश्वामित्रः । इन्द्रः । त्रिष्टुप् ।

इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमं दधति प्रयांसि ।
तितिक्षन्ते ऽअभिशस्तिं जनानामिन्द्र त्वदा कश्चन हि प्रकेतः ॥१॥
इच्छन्ति । त्वा । सोम्यासः । सखायः । सुन्वन्ति । सोमम् ।
दधति । प्रयांसि ॥ तितिक्षन्ते । अभि॰शस्तिम् । जनानाम् ।
इन्द्र । त्वत् । आ । कः । चन । हि । प्र॰केतः ॥१॥

न ते दूरे परमा चिद्रजांस्या तु प्र याहि हरिवो हरिभ्याम् ।
स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाणः समिधाने ऽअग्नौ ॥२॥
न । ते । दूरे । परमा । चित् । रजांसि । आ । तु । प्र ।
याहि । हरि॰वः । हरि॰भ्याम् ॥ स्थिराय । वृष्णे । सवना ।
कृता । इमा । युक्ताः । ग्रावाणः । सम्॰इधाने । अग्नौ ॥२॥

इन्द्रः सुशिप्रो मघवा तरुत्रो महाव्रातस्तुविकूर्मिर्ऋघावान् ।
यदुग्रो धा बाधितो मर्त्येषु क्व१ त्या ते वृषभ वीर्याणि ॥३॥
इन्द्रः । सु॰शिप्रः । मघ॰वा । तरुत्रः । महा॰व्रातः ।
तुवि॰कूर्मिः । ऋघावान् ॥ यत् । उग्रः । धाः । बाधितः ।
मर्त्येषु । क्व । त्या । ते । वृषभ । वीर्याणि ॥३॥

त्वं हि ष्मा च्यावयन्नच्युतान्येको वृत्रा चरसि जिघ्नमानः ।
तव द्यावापृथिवी पर्वतासोऽनु व्रताय निमितेव तस्थुः ॥४॥

त्वम् । हि । स्म । च्यावयन् । अच्युतानि । एकः ।
वृत्रा । चरसि । जिघ्नमानः ॥ तव । द्यावापृथिवी इति ।
पर्वतासः । अनु । व्रताय । निमिताऽइव । तस्थुः ॥४॥

**उताभये पुरुहूत श्रवोभिरेको दृळहमवदो वृत्रहा सन् ।**
**इमे चिदिन्द्र रोदसी ऽअपारे यत्संगृभ्णा मघवन्काशिरित्ते ॥५॥ ( १ )**
उत । अभये । पुरुऽहूत । श्रवःऽभिः । एकः । दृळहम् ।
अवदः । वृत्रऽहा । सन् ॥ इमे इति । चित् । इन्द्र । रोदसी इति ।
अपारे इति । यत् । सम्ऽगृभ्णाः । मघवन् । काशिः । इत् । ते ॥५॥

**प्र सू त ऽइन्द्र प्रवता हरिभ्यां प्र ते वज्रः प्रमृणन्नेतु शत्रून् ।**
**जहि प्रतीचो ऽअनूचः पराचो विश्वं सत्यं कृणुहि विष्टमस्तु ॥६॥**
प्र । सु । ते । इन्द्र । प्रऽवता । हरिऽभ्याम् । प्र । ते । वज्रः ।
प्रऽमृणन् । एतु । शत्रून् ॥ जहि । प्रतीचः । अनूचः । पराचः ।
विश्वम् । सत्यम् । कृणुहि । विष्टम् । अस्तु ॥६॥

**यस्मै धायुरदधा मर्त्त्यायाभक्तं चिद्भजते गेह्यं१ सः ।**
**भद्रा त ऽइन्द्र सुमतिर्घृताची सहस्रदाना पुरुहूत रातिः ॥७॥**
यस्मै । धायुः । अदधाः । मर्त्त्याय । अभक्तम् । चित् ।
भजते । गेह्यम् । सः ॥ भद्रा । ते । इन्द्र । सुऽमतिः ।
घृताची । सहस्रऽदाना । पुरुऽहूत । रातिः ॥७॥

**सहदानुं पुरुहूत क्षियन्तमहस्तमिन्द्र सं पिणक्कुणारुम् ।**
**अभि वृत्रं वर्द्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ॥८॥**
सहऽदानुम् । पुरुऽहूत । क्षियन्तम् । अहस्तम् । इन्द्र ।
सम् । पिणक् । कुणारुम् ॥ अभि । वृत्रम् । वर्द्धमानम् ।
पियारुम् । अपादम् । इन्द्र । तवसा । जघन्थ ॥८॥

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम ॥५॥ (११) [ ३६८ ]
मरुत्वन्तम् । वृषभम् । ववृधानम् । अकव०अरिम् ।
दिव्यम् । शासम् । इन्द्रम् ॥ विश्व०सहम् । अवसे ।
नूतनाय । उग्रम् । सहः२दाम् । इह । तम् । हुवेम ॥५॥

## ( ४८ )

५ गाथिनो विश्वामित्रः । इन्द्रः । त्रिष्टुप् ।

सद्यो ह जातो वृषभः कनीनः प्रभर्तुमावदन्धसः सुतस्य ।
साधोः पिब प्रतिकामं यथा ते रसाशिरः प्रथमं सोम्यस्य ॥१॥
सद्यः । ह । जातः । वृषभः । कनीनः । प्र०भर्तुम् ।
आवत् । अन्धसः । सुतस्य ॥ साधोः । पिब । प्रति०कामम् ।
यथा । ते । रस०आशिरः । प्रथमम् । सोम्यस्य ॥१॥

यज्जायथास्तदहरस्य कामेंऽशोः पीयूषमपिबो गिरिष्ठाम् ।
तं ते माता परि योषा जनित्री महः पितुर्दम ऽआसिञ्चदग्रे ॥२॥
यत् । जायथाः । तत् । अहः । अस्य । कामे । अंशोः । पीयूषम् ।
अपिबः । गिरि०स्थाम् ॥ तम् । ते । माता । परि । योषा ।
जनित्री । महः । पितुः । दमे । आ । असिञ्चत् । अग्रे ॥२॥

उपस्थाय मातरमन्नमैट्ट तिग्ममपश्यदभि सोममूधः ।
प्रयावयन्नचरद्गृत्सो ऽअन्यान्महानि चक्रे पुरुधप्रतीकः ॥३॥
उप०स्थाय । मातरम् । अन्नम् । ऐट्ट । तिग्मम् । अपश्यत् ।
अभि । सोमम् । ऊधः ॥ प्र०यवयन् । अचरत् । गृत्सः ।
अन्यान् । महानि । चक्रे । पुरुध०प्रतीकः ॥३॥

**उग्रस्तुराषाळभिभूत्योजा यथावशं तन्वं चक्र एषः ।**
**त्वष्टारमिन्द्रो जनुषाभिभूयामुष्या सोममपिबच्चमूषु ॥४॥**
उग्रः । तुराषाट् । अभिभूति०ओजाः । यथा०वशम् ।
तन्वम् । चक्रे । एषः ॥ त्वष्टारम् । इन्द्रः । जनुषा ।
अभि०भूय । आ०मुष्य । सोमम् । अपिबत् । चमूषु ॥४॥

**शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।**
**शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥५॥ ( १२ ) [ ३७३ ]**
शुनम् । हुवेम । मघ०वानम् । इन्द्रम् । अस्मिन् । भरे ।
नृ०तमम् । वाज०सातौ ॥ शृण्वन्तम् । उग्रम् । ऊतये ।
समत्०सु । घ्नन्तम् । वृत्राणि । सम्०जितम् । धनानाम् ॥५॥

## ( ४९ )

५ गाथिनो विश्वामित्रः । इन्द्रः । त्रिष्टुप् ।

**शंसा महामिन्द्रं यस्मिन्विश्वा आ कृष्टयः सोमपाः काममव्यन् ।**
**यं सुक्रतुं धिषणे विभ्वतष्टं घनं वृत्राणां जनयन्त देवाः ॥१॥**
शंस । महाम् । इन्द्रम् । यस्मिन् । विश्वाः । आ । कृष्टयः ।
सोम०पाः । कामम् । अव्यन् ॥ यम् । सु०क्रतुम् । धिषणे इति ।
विभ्व०तष्टम् । घनम् । वृत्राणाम् । जनयन्त । देवाः ॥१॥

**यं नु नकिः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठाम् ।**
**इनतमः सत्वभिर्यो ह शूषैः पृथुज्रया अमिनादायुर्दस्योः ॥२॥**
यम् । नु । नकिः । पृतनासु । स्व०राजम् । द्विता । तरति ।
नृ०तमम् । हरि०स्थाम् ॥ इन०तमः । सत्व०भिः । यः ।
ह । शूषैः । पृथु०ज्रयाः । अमिनात् । आयुः । दस्योः ॥२॥

**सहावा पृत्सु तरणिर्नार्वा व्यानशी रोदसी मेहनावान् ।**
**भगो न कारे हव्यो मतीनां पितेव चारुः सुहवो वयोधाः ॥३॥**

सहऽवा । पृत्ऽसु । तरणिः । न । अर्वा । विऽआनशी इति ।
रोदसी इति । मेहनाऽवान् ॥ भगः । न । कारे । हव्यः ।
मतीनाम् । पिताऽइव । चारुः । सुऽहवः । वयःऽधाः ॥३॥

**धर्त्ता दिवो रजसस्पृष्ट ऽऊर्ध्वो रथो न वायुर्वसुभिर्नियुत्वान् ।**
**क्षपां वस्ता जनिता सूर्यस्य विभक्ता भागं धिषणेव वाजम् ॥४॥**

धर्त्ता । दिवः । रजसः । पृष्टः । ऊर्ध्वः । रथः । न ।
वायुः । वसुऽभिः । नियुत्वान् ॥ क्षपाम् । वस्ता । जनिता ।
सूर्यस्य । विऽभक्ता । भागम् । धिषणाऽइव । वाजम् ॥४॥

**शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।**
**शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥५॥ ( १३ ) [ ३७८ ]**

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे ।
नृऽतमम् । वाजऽसातौ ॥ शृण्वन्तम् । उग्रम् । ऊतये ।
समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥५॥

## ( ५० )

५ गाथिनो विश्वामित्रः । इन्द्रः । त्रिष्टुप् ।

**इन्द्रः स्वाहा पिबतु यस्य सोम ऽआगत्या तुम्रो वृषभो मरुत्वान् ।**
**ओरुव्यचाः पृणतामेभिरन्नैरास्य हविस्तन्वः१ः काममृध्याः ॥१॥**

इन्द्रः । स्वाहा । पिबतु । यस्य । सोमः । आऽगत्य । तुम्रः ।
वृषभः । मरुत्वान् ॥ आ । उरुऽव्यचाः । पृणताम् । एभिः ।
अन्नैः । आ । अस्य । हविः । तन्वः । कामम् । ऋध्याः ॥१॥

**आ ते सपर्यू जवसे युनज्मि ययोरनु प्रदिवः श्रुष्टिमावः ।**
**इह त्वा धेयुर्हरयः सुशिप्र पिबा त्वस्य सुषुतस्य चारोः ॥२॥**
आ । ते । सपर्यू इति । जवसे । युनज्मि । ययोः । अनु ।
प्र०दिवः । श्रुष्टिम् । आवः ॥ इह । त्वा । धेयुः । हरयः ।
सु०शिप्र । पिब । तु । अस्य । सु०सुतस्य । चारोः ॥२॥

**गोभिर्मिमिक्षुं दधिरे सुपारमिन्द्रं ज्यैष्ठ्याय धायसे गृणानाः ।**
**मन्दानः सोमं पपिवाँ ऽऋजीषिन्त्समस्मभ्यं पुरुधा गा ऽइषण्य ॥३॥**
गोभिः । मिमिक्षुम् । दधिरे । सु०पारम् । इन्द्रम् । ज्यैष्ठ्याय ।
धायसे । गृणानाः ॥ मन्दानः । सोमम् । पपि०वान् ।
ऋजीषिन् । सम् । अस्मभ्यम् । पुरुधा । गाः । इषण्य ॥३॥

**इमं कामं मन्दया गोभिरश्वैश्चन्द्रवता राधसा पप्रथश्च ।**
**स्वर्यवो मतिभिस्तुभ्यं विप्रा ऽइन्द्राय वाहः कुशिकासो ऽअक्रन् ॥४॥**
इमम् । कामम् । मन्दय । गोभिः । अश्वैः । चन्द्र०वता ।
राधसा । पप्रथः । च ॥ स्वः२यवः । मति०भिः । तुभ्यम् ।
विप्राः । इन्द्राय । वाहः । कुशिकासः । अक्रन् ॥४॥

**शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।**
**शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥५॥ ( १४ ) [ ३८३ ]**
शुनम् । हुवेम । मघ०वानम् । इन्द्रम् । अस्मिन् । भरे ।
नृ०तमम् । वाज०सातौ ॥ शृण्वन्तम् । उग्रम् । ऊतये ।
समत्०सु । घ्नन्तम् । वृत्राणि । सम्०जितम् । धनानाम् ॥५॥

# ( ५१ )

१२ गाथिनो विश्वामित्रः । इन्द्रः । त्रिष्टुप् , १-३ जगती, १०-१२ गायत्री ।

**चर्षणीधृतं मघवानमुक्थ्य१मिन्द्रं गिरो बृहतीरभ्यनूषत ।**

**वावृधानं पुरुहूतं सुवृक्तिभिरमर्त्यं जरमाणं दिवेदिवे ॥१॥**

चर्षणि०धृतम् । मघ०वानम् । उक्थ्यम् । इन्द्रम् । गिरः ।

बृहतीः । अभि । अनूषत ॥ ववृधानम् । पुरु०हूतम् ।

सुवृक्ति०भिः । अमर्त्यम् । जरमाणम् । दिवे०दिवे ॥१॥

**शतक्रतुमर्णवं शाकिनं नरं गिरो म ऽइन्द्रमुप यन्ति विश्वतः ।**

**वाजसनिं पूर्भिदं तूर्णिमप्तुरं धामसाचमभिषाचं स्वर्विदम् ॥२॥**

शत०क्रतुम् । अर्णवम् । शाकिनम् । नरम् । गिरः । मे । इन्द्रम् । उप ।

यन्ति । विश्वतः ॥ वाज०सनिम् । पूः२भिदम् । तूर्णिम् ।

अप्०तुरम् । धाम०साचम् । अभि०साचम् । स्वः२विदम् ॥२॥

**आकरे वसोर्जरिता पनस्यतेऽनेहसः स्तुभ ऽइन्द्रो दुवस्यति ।**

**विवस्वतः सदन ऽआ हि पिप्रिये सत्रासाहमभिमातिहनं स्तुहि ॥३॥**

आ०करे । वसोः । जरिता । पनस्यते । अनेहसः । स्तुभः ।

इन्द्रः । दुवस्यति ॥ विवस्वतः । सदने । आ । हि ।

पिप्रिये । सत्रा०सहम् । अभिमाति०हनम् । स्तुहि ॥३॥

**नृणामु त्वा नृतमं गीर्भिरुक्थैरभि प्र वीरमर्चता सबाधः ।**

**सं सहसे पुरुमायो जिहीते नमो ऽअस्य प्रदिव ऽएक ऽईशे ॥४॥**

नृणाम् । ऊँ इति । त्वा । नृ०तमम् । गीः२भिः । उक्थैः । अभि ।

प्र । वीरम् । अर्चत । स०बाधः ॥ सम् । सहसे । पुरु०मायः ।

जिहीते । नमः । अस्य । प्र०दिवः । एकः । ईशे ॥४॥

**पूर्वीरस्य निष्षिधो मर्त्येषु पुरू वसूनि पृथिवी बिभर्ति ।**

**इन्द्राय द्याव ऽओषधीरुतापो रयिं रक्षन्ति जीरयो वनानि ॥५॥ ( १५ )**

पूर्वीः । अस्य । निःऽसिधः । मर्त्येषु । पुरु । वसूनि ।

पृथिवी । बिभर्ति ॥ इन्द्राय । द्यावः । ओषधीः । उत ।

आपः । रयिम् । रक्षन्ति । जीरयः । वनानि ॥५॥

**तुभ्यं ब्रह्माणि गिर ऽइन्द्र तुभ्यं सत्रा दधिरे हरिवो जुषस्व ।**

**बोध्यापिरवसो नूतनस्य सखे वसो जरितृभ्यो वयो धाः ॥६॥**

तुभ्यम् । ब्रह्माणि । गिरः । इन्द्र । तुभ्यम् । सत्रा । दधिरे ।

हरिऽवः । जुषस्व ॥ बोधि । आपिः । अवसः । नूतनस्य ।

सखे । वसो इति । जरितृऽभ्यः । वयः । धाः ॥६॥

**इन्द्र मरुत्व ऽइह पाहि सोमं यथा शार्याते ऽअपिबः सुतस्य ।**

**तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः ॥७॥**

इन्द्र । मरुत्वः । इह । पाहि । सोमम् । यथा । शार्याते ।

अपिबः । सुतस्य ॥ तव । प्रऽनीती । तव । शूर ।

शर्मन् । आ । विवासन्ति । कवयः । सुऽयज्ञाः ॥७॥

**स वावशान ऽइह पाहि सोमं मरुद्भिरिन्द्र सखिभिः सुतं नः ।**

**जातं यत्त्वा परि देवा ऽअभूषन्महे भराय पुरुहूत विश्वे ॥८॥**

सः । वावशानः । इह । पाहि । सोमम् । मरुत्ऽभिः । इन्द्र ।

सखिऽभिः । सुतम् । नः ॥ जातम् । यत् । त्वा । परि ।

देवाः । अभूषन् । महे । भराय । पुरुऽहूत । विश्वे ॥८॥

**अप्तूर्ये मरुत ऽआपिरेषोऽमन्दन्निन्द्रमनु दातिवाराः ।**

**तेभिः साकं पिबतु वृत्रखादः सुतं सोमं दाशुषः स्वे सधस्थे ॥९॥**

अप्०तूर्ये । मरुतः । आपिः । एषः । अमन्दन् । इन्द्रम् ।
अनु । दातिं०वाराः ॥ तेभिः । साकम् । पिबतु ।
वृत्र०खादः । सुतम् । सोमम् । दाशुषः । स्वे । सध०स्थे ॥९॥

इदं ह्यन्वोजसा सुतं राधानां पते ।
पिबा त्वस्य गिर्वणः ॥१०॥
इदम् । हि । अनु । ओजसा । सुतम् ।
राधानाम् । पते ॥ पिब । तु । अस्य । गिर्वणः ॥१०॥

यस्ते ऽअनु स्वधामसत्सुते नि यच्छ तन्वम् ।
स त्वा ममत्तु सोम्यम् ॥११॥
यः । ते । अनु । स्वधाम् । असत् । सुते । नि ।
यच्छ । तन्वम् ॥ सः । त्वा । ममत्तु । सोम्यम् ॥११॥

प्र ते ऽअश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः ।
प्र बाहू शूर राधसे ॥१२॥ ( १६ ) [ ३९५ ]
प्र । ते । अश्नोतु । कुक्ष्योः । प्र । इन्द्र ।
ब्रह्मणा । शिरः ॥ प्र । बाहू इति । शूर । राधसे ॥१२॥

## ( ५२ )

८ गाथिनो विश्वामित्रः । इन्द्रः । गायत्री, ५, ७-८ त्रिष्टुप्, ६ जगती ।

धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् ।
इन्द्र प्रातर्जुषस्व नः ॥१॥
धाना०वन्तम् । करम्भिणम् । अपूप०वन्तम् ।
उक्थिनम् ॥ इन्द्र । प्रातः । जुषस्व । नः ॥१॥

**पुरोळाशं पचत्यं जुषस्वेन्द्रा गुरस्व च ।**

**तुभ्यं हव्यानि सिस्रते ॥२॥**

पुरोळाशम् । पचत्यम् । जुषस्व । इन्द्र । आ ।

गुरस्व । च ॥ तुभ्यम् । हव्यानि । सिस्रते ॥२॥

**पुरोळाशं च नो घसो जोषयासे गिरश्च नः ।**

**वधूयुरिव योषणाम् ॥३॥**

पुरोळाशम् । च । नः । घसः । जोषयासे ।

गिरः । च । नः ॥ वधूयुःऽइव । योषणाम् ॥३॥

**पुरोळाशं सनश्रुत प्रातःसावे जुषस्व नः ।**

**इन्द्र क्रतुर्हि ते बृहन् ॥४॥**

पुरोळाशम् । सन०श्रुत । प्रातः२सावे ।

जुषस्व । नः ॥ इन्द्र । क्रतुः । हि । ते । बृहन् ॥४॥

**माध्यंदिनस्य सवनस्य धानाः पुरोळाशमिन्द्र कृष्वेह चारुम् ।**

**प्र यत्स्तोता जरिता तूर्ण्यर्थो वृषायमाण ऽउप गीर्भिरीट्टे ॥५॥ (१७)**

माध्यन्दिनस्य । सवनस्य । धानाः । पुरोळाशम् । इन्द्र ।

कृष्व । इह । चारुम् ॥ प्र । यत् । स्तोता । जरिता ।

तूर्णि०अर्थः । वृष०यमाणः । उप । गीः२भिः । ईट्टे ॥५॥

**तृतीये धानाः सवने पुरुष्टुत पुरोळाशमाहुतं मामहस्व नः ।**

**ऋभुमन्तं वाजवन्तं त्वा कवे प्रयस्वन्त ऽउप शिक्षेम धीति०भिः ॥६॥**

तृतीये । धानाः । सवने । पुरु०स्तुत । पुरोळाशम् ।

आ०हुतम् । ममहस्व । नः ॥ ऋभु०मन्तम् । वाज०वन्तम् ।

त्वा । कवे । प्रयस्वन्तः । उप । शिक्षेम । धीति०भिः ॥६॥

**पूषण्वते॑ ते चकृमा क॒र॒म्भं हरि॑वते॒ हर्य॑श्वाय धा॒नाः ।**

**अ॒पू॒पम॑द्धि॒ सग॑णो म॒रुद्भि॑ः सोम॑ पिब वृ॒त्रहा शू॑र वि॒द्वान् ॥७॥**

पू॒षण्ऽवते॑ । ते॒ । च॒कृ॒म । क॒र॒म्भम् । हरि॑ऽवते ।
हरि॑ऽअश्वाय । धा॒नाः ॥ अ॒पू॒पम् । अ॒द्धि॒ । सऽग॑णः ।
म॒रुत्ऽभिः॑ । सोम॑म् । पि॒ब॒ । वृ॒त्र॒ऽहा । शू॒र॒ । वि॒द्वान् ॥७॥

**प्रति॑ धा॒ना भ॑रत॒ तूय॑मस्मै पुरो॒ळाश॑ वी॒रत॑माय नृ॒णाम् ।**

**दि॒वेदि॑वे स॒दृशी॑रिन्द्र॒ तुभ्यं॒ वर्द्ध॑न्तु त्वा सोम॒पेया॑य धृष्णो ॥८॥ (१८)　[४०३]**

प्रति॑ । धा॒नाः । भ॒र॒त॒ । तूय॑म् । अ॒स्मै॒ । पु॒रो॒ळाश॑म् ।
वी॒र॒ऽत॑माय । नृ॒णाम् ॥ दि॒वेऽदि॑वे । स॒ऽदृशीः॑ । इ॒न्द्र॒ ।
तुभ्य॑म् । वर्द्ध॑न्तु । त्वा॒ । सो॒म॒ऽपेया॑य । धृ॒ष्णो॒ इति॑ ॥८॥

# ( ५३ )

**२४ गाथिनो विश्वामित्रः । इन्द्रः, १ इन्द्रापर्वतौ, १५, १६ वाक् ( ससर्परी ), १७-२० रथाङ्गानि, २१-२४ अभिशापः । त्रिष्टुप्, १०, १६ जगती, १३ गायत्री, १२, २०, २२ अनुष्टुप्, १८ बृहती**

**इन्द्रा॑पर्वता बृ॒हता॑ रथे॑न वा॒मीरिष॒ ऽआ व॑हतं सु॒वीराः॑ ।**

**वी॒तं ह॒व्यान्य॑ध्व॒रेषु॑ देवा॒ वर्द्धे॑थां गी॒र्भिरि॒ळया॑ मद॑न्ता ॥१॥**

इन्द्रा॑पर्वता । बृ॒ह॒ता । रथे॑न । वा॒मीः । इष॑ः । आ ।
व॒ह॒त॒म् ॥ सु॒ऽवीराः॑ ॥ वी॒त॒म् । ह॒व्यानि॑ । अ॒ध्व॒रेषु॑ ।
दे॒वा॒ । वर्द्धे॑थाम् । गी॒ःऽभिः । इ॒ळया॑ । मद॑न्ता ॥१॥

**तिष्ठा॒ सु क॑ मघ॒वन्मा परा॑ गाः॒ सोम॑स्य॒ नु त्वा॒ सुषु॑तस्य यक्षि ।**

**पि॒तुर्न पु॒त्रः सिच॒मा र॑भे त॒ ऽइन्द्र॒ स्वादि॑ष्ठया गि॒रा श॑चीवः ॥२॥**

तिष्ठ॑ । सु । क॒म् । म॒घ॒ऽव॒न् । मा । परा॑ । गाः॒ । सोम॑स्य ।
नु । त्वा॒ । सु॒ऽसु॑तस्य । य॒क्षि॒ ॥ पि॒तु॒ः । न । पु॒त्रः । सिच॑म् ।
आ । र॒भे॒ । ते॒ । इन्द्र॑ । स्वादि॑ष्ठया । गि॒रा । श॒ची॒ऽव॒ः ॥२॥

**शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् ।**
**एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थमिन्द्राय शस्तम् ॥३॥**
शंसाव । अध्वर्यो इति । प्रति । मे । गृणीहि । इन्द्राय । वाहः ।
कृणवाव । जुष्टम् ॥ आ । इदम् । बर्हिः । यजमानस्य । सीद ।
अथ । च । भूत् । उक्थम् । इन्द्राय । शस्तम् ॥३॥

**जायेदस्तं मघवन्त्सेदु योनिस्तदित्त्वा युक्ता हरयो वहन्तु ।**
**यदा कदा च सुनवाम सोममग्निष्ट्वा दूतो धन्वात्यच्छ ॥४॥**
जाया । इत् । अस्तम् । मघ०वन् । सा । इत् । ऊँ इति । योनिः ।
तत् । इत् । त्वा । युक्ताः । हरयः । वहन्तु ॥ यदा । कदा । च ।
सुनवाम । सोमम् । अग्निः । त्वा । दूतः । धन्वाति । अच्छ ॥४॥

**परा याहि मघवन्ना च याहीन्द्र भ्रातरुभयत्रा ते ऽअर्थम् ।**
**यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो रासभस्य ॥५॥ ( १९ )**
परा । याहि । मघ०वन् । आ । च । याहि । इन्द्र ।
भ्रातः । उभयत्र । ते । अर्थम् ॥ यत्र । रथस्य । बृहतः ।
नि०धानम् । वि०मोचनम् । वाजिनः । रासभस्य ॥५॥

**अपाः सोममस्तमिन्द्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते ।**
**यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥६॥**
अपाः । सोमम् । अस्तम् । इन्द्र । प्र । याहि । कल्याणीः ।
जाया । सु०रणम् । गृहे । ते ॥ यत्र । रथस्य । बृहतः ।
नि०धानम् । वि०मोचनम् । वाजिनः । दक्षिणा०वत् ॥६॥

**इमे भोजा ऽअङ्गिरसो विरूपा दिवस्पुत्रासो ऽअसुरस्य वीराः ।**
**विश्वामित्राय ददतो मघानि सहस्रसावे प्र तिरन्त ऽआयुः ॥७॥**

इमे । भोजाः । अङ्गिरसः । वि०रूपाः । दिवः ।
पुत्रासः । असुरस्य । वीराः ॥ विश्वामित्राय । ददतः ।
मघानि । सहस्र०सावे । प्र । तिरन्ते । आयुः ॥७॥

**रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं१ परि स्वाम् ।**
**त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऽऋतावा ॥८॥**
रूपम्०रूपम् । मघ०वा । बोभवीति । मायाः । कृण्वानः ।
तन्वम् । परि । स्वाम् ॥ त्रिः । यत् । दिवः । परि । मुहूर्तम् ।
आ । अगात् । स्वैः । मन्त्रैः । अनृतु०पाः । ऋत०वा ॥८॥

**महाँ ऽऋषिर्देवजा देवजूतोऽस्तभ्नात्सिन्धुमर्णवं नृचक्षाः ।**
**विश्वामित्रो यदवहत्सुदासमप्रियायत कुशिकेभिरिन्द्रः ॥९॥**
महान् । ऋषिः । देव०जाः । देव०जूतः । अस्तभ्नात् । सिन्धुम् ।
अर्णवम् । नृ०चक्षाः ॥ विश्वामित्रः । यत् । अवहत् ।
सु०दासम् । अप्रियायत । कुशिकेभिः । इन्द्रः ॥९॥

**हंसाईव कृणुथ श्लोकमद्रिभिर्मदन्तो गीर्भिरध्वरे सुते सचा ।**
**देवेभिर्विप्रा ऽऋषयो नृचक्षसो वि पिबध्वं कुशिकाः सोम्यं मधु ॥१०॥ ( २० )**
हंसाःऽईव । कृणुथ । श्लोकम् । अद्रि०भिः । मदन्तः । गीः२भिः ।
अध्वरे । सुते । सचा ॥ देवेभिः । विप्राः । ऋषयः । नृ०चक्षसः ।
वि । पिबध्वम् । कुशिकाः । सोम्यम् । मधु ॥१०॥

**उप प्रेत कुशिकाश्चेतयध्वमश्वं राये प्र मुञ्चता सुदासः ।**
**राजा वृत्रं जङ्घनत्प्रागपागुदगथा यजाते वर ऽआ पृथिव्याः ॥११॥**
उप । प्र । इत । कुशिकाः । चेतयध्वम् । अश्वम् । राये । प्र ।
मुञ्चत । सु०दासः ॥ राजा । वृत्रम् । जङ्घनत् । प्राक् । अपाक् ।
उदक् । अथ । यजाते । वरे । आ । पृथिव्याः ॥११॥

**य ऽइमे रोदसी ऽउभे ऽअहमिन्द्रमतुष्टवम् ।**

**विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम् ॥१२॥**

यः । इमे इति । रोदसी इति । उभे इति । अहम् । इन्द्रम् । अतुस्तवम् ॥

विश्वामित्रस्य । रक्षति । ब्रह्म । इदम् । भारतम् । जनम् ॥१२॥

**विश्वामित्रा ऽअरासत ब्रह्मेन्द्राय वज्रिणे ।**

**करदिन्नः सुराधसः ॥१३॥**

विश्वामित्राः । अरासत । ब्रह्म । इन्द्राय । वज्रिणे ॥

करत् । इत् । नः । सु॰राधसः ॥१३॥

**किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् ।**

**आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः ॥१४॥**

किम् । ते । कृण्वन्ति । कीकटेषु । गावः । न । आ॰शिरन् ।

दुह्रे । न । तपन्ति । घर्मम् ॥ आ । नः । भर । प्र॰मगन्दस्य ।

वेदः । नैचा॰शाखम् । मघ॰वन् । रन्धय । नः ॥१४॥

**ससर्परीरमतिं बाधमाना बृहन्मिमाय जमदग्निदत्ता ।**

**आ सूर्यस्य दुहिता ततान श्रवो देवेष्वमृतमजुर्यम् ॥१५॥ ( २१ )**

ससर्परीः । अमतिम् । बाधमाना । बृहत् ।

मिमाय । जमदग्नि॰दत्ता ॥ आ । सूर्यस्य । दुहिता ।

ततान । श्रवः । देवेषु । अमृतम् । अजुर्यम् ॥१५॥

**ससर्परीरभरत्तूयमेभ्योऽधि श्रवः पाञ्चजन्यासु कृष्टिषु ।**

**सा पक्ष्या३ नव्यमायुर्दधाना यां मे पलस्तिजमदग्नयो ददुः ॥१६॥**

ससर्परीः । अभरत् । तूयम् । एभ्यः । अधि । श्रवः ।

पाञ्च॰जन्यासु । कृष्टिषु ॥ सा । पक्ष्या । नव्यम् । आयुः ।

दधाना । याम् । मे । पलस्ति॰जमदग्नयः । ददुः ॥१६॥

**स्थिरौ गावौ भवतां वीळुरक्षो मेषा वि वर्हि मा युगं वि शारि ।**
**इन्द्रः पातल्यै ददतां शरींतोररिष्टनेमे ऽअभि नः सचस्व ॥१७॥**
स्थिरौ । गावौ । भवताम् । वीळुः । अक्षः । मा । ईषा । वि ।
वर्हि । मा । युगम् । वि । शारि ॥ इन्द्रः । पातल्ये ३ इति ।
ददताम् । शरींतोः । अरिष्ट०नेमे । अभि । नः । सचस्व ॥१७॥

**बलं धेहि तनूषु नो बलमिन्द्रानळुत्सु नः ।**
**बलं तोकाय तनयाय जीवसे त्वं हि बलदा ऽअसि ॥१८॥**
बलम् । धेहि । तनूषु । नः । बलम् । इन्द्र । अनळुत्०सु । नः ॥
बलम् । तोकाय । तनयाय । जीवसे । त्वम् । हि । बल०दाः । असि ॥१८॥

**अभि व्ययस्व खदिरस्य सारमोजो धेहि स्पन्दने शिंशपायाम् ।**
**अक्ष वीळो वीळित वीळयस्व मा यामादस्मादव जीहिपो नः ॥१९॥**
अभि । व्ययस्व । खदिरस्य । सारम् । ओजः । धेहि ।
स्पन्दने । शिंशपायाम् ॥ अक्ष । वीळो इति । वीळित ।
वीळयस्व । मा । यामात् । अस्मात् । अव । जीहिपः । नः ॥१९॥

**अयमस्मान्वनस्पतिर्मा च हा मा च रीरिषत् ।**
**स्वस्त्या गृहेभ्य ऽआवसा ऽआ विमोचनात् ॥२०॥ ( २२ )**
अयम् । अस्मान् । वनस्पतिः । मा । च । हाः । मा । च । रिरिषत् ॥
स्वस्ति । आ । गृहेभ्यः । आ । अवसै । आ । वि०मोचनात् ॥२०॥

**इन्द्रोतिभिर्बहुलाभिर्नो ऽअद्य याच्छ्रेष्ठाभिर्मघवञ्छूर जिन्व ।**
**यो नो द्वेष्ट्यधरः सस्पदीष्ट यमु द्विष्मस्तमु प्राणो जहातु ॥२१॥**
इन्द्र । ऊति०भिः । बहुलाभिः । नः । अद्य । यात्०श्रेष्ठाभिः ।
मघ०वन् । शूर । जिन्व ॥ यः । नः । द्वेष्टि । अधरः । सः । पदीष्ट ।
यम् । ऊँ इति । द्विष्मः । तम् । ऊँ इति । प्राणः । जहातु ॥२१॥

परशुं चिद्वि तपति शिम्बलं चिद्वि वृश्चति ।
उखा चिदिन्द्र येषन्ती प्रयस्ता फेनमस्यति ॥२२॥
परशुम् । चित् । वि । तपति । शिम्बलम् । चित् । वि । वृश्चति ॥
उखा । चित् । इन्द्र । येषन्ती । प्र०यस्ता । फेनम् । अस्यति ॥२२॥

न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः ।
नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो ऽश्वान्नयन्ति ॥२३॥
न । सायकस्य । चिकिते । जनासः । लोधम् । नयन्ति ।
पशु । मन्यमानाः ॥ न । अवाजिनम् । वाजिना । हासयन्ति ।
न । गर्दभम् । पुरः । अश्वात् । नयन्ति ॥२३॥

इम ऽइन्द्र भरतस्य पुत्रा ऽअपपित्वं चिकितुर्न प्रपित्वम् ।
हिन्वन्त्यश्वमरणं न नित्यं ज्यावाजं परि णयन्त्याजौ ॥२४॥ (२३) [४२७]
इमे । इन्द्र । भरतस्य । पुत्राः । अप०पित्वम् । चिकितुः ।
न । प्र०पित्वम् ॥ हिन्वन्ति । अश्वम् । अरणम् । न ।
नित्यम् । ज्या०वाजम् । परि । नयन्ति । आजौ ॥२४॥

## (५४) [ अथ पञ्चमोऽनुवाकः ॥५॥ सू. ५४-६२

२२ प्रजापतिर्वैश्वामित्रः, प्रजापतिर्वाच्यो वा । विश्वे देवाः, त्रिष्टुप् ।

इमं महे विदथ्याय शूषं शश्वत्कृत्व ऽईड्याय प्र जभ्रुः ।
शृणोतु नो दम्येभिरनीकैः शृणोत्वग्निर्दिव्यैरजस्रः ॥१॥
इमम् । महे । विदथ्याय । शूषम् । शश्वत् । कृत्वः ।
ईड्याय । प्र । जभ्रुः ॥ शृणोतु । नः । दम्येभिः ।
अनीकैः । शृणोतु । अग्निः । दिव्यैः । अजस्रः ॥१॥

**महिं महे दिवे ऽअर्चा पृथिव्यै कामो म ऽइच्छञ्चरति प्रजानन् ।**
**ययोर्ह स्तोमे विदथेषु देवाः सपर्यवो मादयन्ते सचायोः ॥२॥**
महिं । महे । दिवे । अर्च । पृथिव्यै । कामः । मे ।
इच्छन् । चरति । प्र०जानन् ॥ ययोः । ह । स्तोमे ।
विदथेषु । देवाः । सपर्यवः । मादयन्ते । सचा । आयोः ॥२॥

**युवोर्ऋतं रोदसी सत्यमस्तु महे षु णः सुविताय प्र भूतम् ।**
**इदं दिवे नमो ऽअग्ने पृथिव्यै सपर्यामि प्रयसा यामि रत्नम् ॥३॥**
युवोः । ऋतम् । रोदसी इति । सत्यम् । अस्तु । महे । सु ।
नः । सु०वितायं । प्र । भूतम् ॥ इदम् । दिवे । नमः ।
अग्ने । पृथिव्यै । सपर्यामि । प्रयसा । यामि । रत्नम् ॥३॥

**उतो हि वां पूर्व्या ऽआविविद्र ऽऋतावरी रोदसी सत्यवाचः ।**
**नरश्चिद्वां समिथे शूरसातौ ववन्दिरे पृथिवि वेविदानाः ॥४॥**
उतो इति । हि । वाम् । पूर्व्याः । आ०विविद्रे । ऋतवरी इत्यृत०वरी ।
रोदसी इति । सत्य०वाचः ॥ नरः । चित् । वाम् । सम्०इथे ।
शूर०सातौ । ववन्दिरे । पृथिवि । वेविदानाः ॥४॥

**को ऽअद्धा वेद क ऽइह प्र वोचद्देवाँ ऽअच्छा पथ्या के समेति ।**
**ददृश्र ऽएषामवमा सदांसि परेषु या गुह्येषु व्रतेषु ॥५॥ ( २४ )**
कः । अद्धा । वेद । कः । इह । प्र । वोचत् । देवान् ।
अच्छ । पथ्या । का । सम् । एति ॥ ददृश्रे । एषाम् ।
अवमा । सदांसि । परेषु । या । गुह्येषु । व्रतेषु ॥५॥

**कविर्नृचक्षा ऽअभि षीमचष्ट ऽऋतस्य योना विघृते मदन्ती ।**
**नाना चक्राते सदनं यथा वेः समानेन क्रतुना संविदाने ॥६॥**

कविः । नृ॰चक्षाः । अभि । सीम् । अचष्ट । ऋतस्य । योना ।
विघृते इति वि॰घृते । मदन्ती इति ॥ नाना । चक्राते इति । सदनम् ।
यथा । वेः । समानेन । क्रतुना । संविदाने इति सम्॰विदाने ॥६॥

**समान्या वियुते दूरेअन्ते ध्रुवे पदे तस्थतुर्जागरूके ।**
**उत स्वसारा युवती भवन्ती ऽआदु ब्रुवाते मिथुनानि नाम ॥७॥**
समान्या । वियुते इति वि॰युते । दूरेअन्ते इति दूरे॰अन्ते । ध्रुवे ।
पदे । तस्थतुः । जागरूके इति ॥ उत । स्वसारा । युवती इति ।
भवन्ती इति । आत् । ॐ इति । ब्रुवाते इति । मिथुनानि । नाम ॥७॥

**विश्वेदेते जनिमा सं विविक्तो महो देवान्बिभ्रती न व्यथेते ।**
**एजद्ध्रुवं पत्यते विश्वमेकं चरत्पतत्रि विषुणं वि जातम् ॥८॥**
विश्वा । इत् । एते इति । जनिम । सम् । विविक्तः । महः ।
देवान् । बिभ्रती इति । न । व्यथेते इति ॥ एजत् । ध्रुवम् । पत्यते ।
विश्वम् । एकम् । चरत् । पतत्रि । विषुणम् । वि । जातम् ॥८॥

**सना पुराणमध्येम्यारान्महः पितुर्जनितुर्जामि तन्नः ।**
**देवासो यत्र पनितार ऽएवैरुरौ पथि व्युते तस्थुरन्तः ॥९॥**
सना । पुराणम् । अधि । एमि । आरात् । महः । पितुः ।
जनितुः । जामि । तत् । नः ॥ देवासः । यत्र । पनितारः ।
एवैः । उरौ । पथि । वि॰उते । तस्थुः । अन्तरिति ॥९॥

**इमं स्तोमं रोदसी प्र ब्रवीम्यृदूदराः शृणवन्नग्निजिह्वाः ।**
**मित्रः सम्राजो वरुणो युवान ऽआदित्यासः कवयः पप्रथानाः ॥१०॥ ( २५ )**
इमम् । स्तोमम् । रोदसी इति । प्र । ब्रवीमि । ऋदूदराः ।
शृणवन् । अग्नि॰जिह्वाः ॥ मित्रः । सम्॰राजः । वरुणः ।
युवानः । आदित्यासः । कवयः । पप्रथानाः ॥१०॥

**हिरण्यपाणिः सविता सुजिह्वस्त्रिरा दिवो विदथे पत्यमानः ।**
**देवेषु च सवितः श्लोकमश्रेरादस्मभ्यमा सुव सर्वतातिम् ॥११॥**
हिरण्य०पाणिः । सविता । सु०जिह्वः । त्रिः । आ । दिवः ।
विदथे । पत्यमानः ॥ देवेषु । च । सवितरिति । श्लोकम् ।
अश्रेः । आत् । अस्मभ्यम् । आ । सुव । सर्व०तातिम् ॥११॥

**सुकृत्सुपाणिः स्ववाँ ऽऋतावा देवस्त्वष्टावसे तानि नो धात् ।**
**पूषण्वन्त ऽऋभवो मादयध्वमूर्ध्वग्रावाणो ऽअध्वरमतष्ट ॥१२॥**
सु०कृत् । सु०पाणिः । स्व०वान् । ऋत०वा । देवः । त्वष्टा ।
अवसे । तानि । नः । धात् ॥ पूषण्०वन्तः । ऋभवः ।
मादयध्वम् । ऊर्ध्व०ग्रावाणः । अध्वरम् । अतष्ट ॥१२॥

**विद्युद्रथा मरुत ऽऋष्टिमन्तो दिवो मर्या ऽऋतजाता ऽअयासः ।**
**सरस्वती शृणवन्यज्ञियासो धाता रयिं सहवीरं तुरासः ॥१३॥**
विद्युत्०रथाः । मरुतः । ऋष्टि०मन्तः । दिवः । मर्याः ।
ऋत०जाताः । अयासः ॥ सरस्वती । शृणवन् । यज्ञियासः ।
धात । रयिम् । सह०वीरम् । तुरासः ॥१३॥

**विष्णुं स्तोमासः पुरुदस्ममर्का भगस्येव कारिणो यामनि ग्मन् ।**
**उरुक्रमः ककुहो यस्य पूर्वीर्न मर्द्धन्ति युवतयो जनित्रीः ॥१४॥**
विष्णुम् । स्तोमासः । पुरु०दस्मम् । अर्काः । भगस्यऽइव ।
कारिणः । यामनि । ग्मन् ॥ उरु०क्रमः । ककुहः । यस्य ।
पूर्वीः । न । मर्द्धन्ति । युवतयः । जनित्रीः ॥१४॥

**इन्द्रो विश्वैर्वीर्यैः पत्यमान ऽउभे ऽआ पप्रौ रोदसी महित्वा ।**
**पुरंदरो वृत्रहा धृष्णुषेणः संगृभ्या न ऽआ भरा भूरि पश्वः ॥१५॥ ( २६ )**

इन्द्रः । विश्वैः । वीर्यैः । पत्यमानः । उभे इति । आ । पप्रौ ।
रोदसी इति । महि॰त्वा ॥ पुरम्॰दरः । वृत्र॰हा । धृष्णु॰सेनः ।
सम्॰गृभ्य । नः । आ । भर । भूरि । पश्वः ॥१५॥

**नासत्या मे पितरा बन्धुपृच्छा सजात्यमश्विनोश्चारु नाम ।**
**युवं हि स्थो रयिदौ नो रयीणां दात्रं रक्षेथे ऽअकवैरदब्धा ॥१६॥**
नासत्या । मे । पितरा । बन्धु॰पृच्छा । स॰जात्यम् ।
अश्विनोः । चारु । नाम ॥ युवम् । हि । स्थः । रयि॰दौ ।
नः । रयीणाम् । दात्रम् । रक्षेथे इति । अकवैः । अदब्धा ॥१६॥

**महत्तद्वः कवयश्चारु नाम यद्ध देवा भवथ विश्व ऽइन्द्रे ।**
**सख ऽऋभुभिः पुरुहूत प्रियेभिरिमां धियं सातये तक्षता नः ॥१७॥**
महत् । तत् । वः । कवयः । चारु । नाम । यत् । ह । देवाः ।
भवथ । विश्वे । इन्द्रे ॥ सखा । ऋभु॰भिः । पुरु॰हूत ।
प्रियेभिः । इमाम् । धियम् । सातये । तक्षत । नः ॥१७॥

**अर्यमा णो ऽअदितिर्यज्ञियासोऽदब्धानि वरुणस्य व्रतानि ।**
**युयोत नो ऽअनपत्यानि गन्तोः प्रजावान्नः पशुमाँ ऽअस्तु गातुः ॥१८॥**
अर्यमा । नः । अदितिः । यज्ञियासः । अदब्धानि ।
वरुणस्य । व्रतानि ॥ युयोत । नः । अनपत्यानि ।
गन्तोः । प्रजा॰वान् । नः । पशु॰मान् । अस्तु । गातुः ॥१८॥

**देवानां दूतः पुरुध प्रसूतोऽनागान्नो वोचतु सर्वताता ।**
**शृणोतु नः पृथिवी द्यौरुतापः सूर्यो नक्षत्रैरुर्वऽन्तरिक्षम् ॥१९॥**
देवानाम् । दूतः । पुरुध । प्र॰सूतः । अनागान् । नः ।
वोचतु । सर्व॰ताता ॥ शृणोतु । नः । पृथिवी । द्यौः ।
उत । आपः । सूर्यः । नक्षत्रैः । उरु । अन्तरिक्षम् ॥१९॥

**शृण्वन्तु नो वृषणः पर्वतासो ध्रुवक्षेमास ऽइळया मदन्तः ।**
**आदित्यैर्नो ऽअदितिः शृणोतु यच्छन्तु नो मरुतः शर्म भद्रम् ॥२०॥**
शृण्वन्तु । नः । वृषणः । पर्वतासः । ध्रुव०क्षेमासः ।
इळया । मदन्तः ॥ आदित्यैः । नः । अदितिः । शृणोतु ।
यच्छन्तु । नः । मरुतः । शर्म । भद्रम् ॥२०॥

**सदा सुगः पितुमाँ ऽअस्तु पन्था मध्वा देवा ऽओषधीः सं पिपृक्त ।**
**भगो मे ऽअग्ने सख्ये न मृध्या ऽउद्रायो ऽअश्यां सदनं पुरुक्षोः ॥२१॥**
सदा । सु०गः । पितु०मान् । अस्तु । पन्था । मध्वा । देवाः ।
ओषधीः । सम् । पिपृक्त ॥ भगः । मे । अग्ने । सख्ये । न ।
मृध्याः । उत् । रायः । अश्याम् । सदनम् । पुरु०क्षोः ॥२१॥

**स्वदस्व हव्या समिषो दिदीह्यस्मद्र्यक्सं मिमीहि श्रवांसि ।**
**विश्वाँ ऽअग्ने पृत्सु ताञ्जेषि शत्रूनहा विश्वा सुमना दीदिही नः ॥२२॥ ( २७ ) [ ४४९ ]**
स्वदस्व । हव्या । सम् । इषः । दिदीहि । अस्मद्र्यक् । सम् ।
मिमीहि । श्रवांसि ॥ विश्वान् । अग्ने । पृत्०सु । तान् । जेषि ।
शत्रून् । अहा । विश्वा । सु०मनाः । दीदिहि । नः ॥२२॥

## ( ५५ )

२२ प्रजापतिर्वैश्वामित्रः, प्रजापतिर्वाच्यो वा । विश्वे देवाः । त्रिष्टुप् ।

**उषसः पूर्वा ऽअध यद्व्यूषुर्महद्वि जज्ञे ऽअक्षरं पदे गोः ।**
**व्रता देवानामुप नु प्रभूषन्महद्देवानामसुरत्वमेकम् ॥१॥**
उषसः । पूर्वाः । अध । यत् । वि०ऊषुः । महत् । वि ।
जज्ञे । अक्षरम् । पदे । गोः ॥ व्रता । देवानाम् । उप । नु ।
प्र०भूषन् । महत् । देवानाम् । असुर०त्वम् । एकम् ॥१॥

**मो षू णो ऽअत्र जुहुरन्त देवा मा पूर्वे ऽअग्ने पितरः पदज्ञाः ।**
**पुराण्योः सद्मनोः केतुरन्तर्महद्देवानामसुरत्वमेकम् ॥२॥**
मो इति । सु । नः । अत्र । जुहुरन्त । देवाः । मा । पूर्वे ।
अग्ने । पितरः । पद०ज्ञाः ॥ पुराण्योः । सद्मनोः । केतुः ।
अन्तः । महत् । देवानाम् । असुर०त्वम् । एकम् ॥२॥

**वि मे पुरुत्रा पतयन्ति कामाः शम्यच्छा दीद्ये पूर्व्याणि ।**
**समिद्धे ऽअग्नावृतमिद्वदेम महद्देवानामसुरत्वमेकम् ॥३॥**
वि । मे । पुरु०त्रा । पतयन्ति । कामाः । शमि । अच्छ ।
दीद्ये । पूर्व्याणि ॥ सम्०इद्धे । अग्नौ । ऋतम् । इत् ।
वदेम । महत् । देवानाम् । असुर०त्वम् । एकम् ॥३॥

**समानो राजा विभृतः पुरुत्रा शये शयासु प्रयुतो वनानु ।**
**अन्या वत्सं भरति क्षेति माता महद्देवानामसुरत्वमेकम् ॥४॥**
समानः । राजा । वि०भृतः । पुरु०त्रा । शये । शयासु ।
प्र०युतः । वना । अनु ॥ अन्या । वत्सम् । भरति । क्षेति ।
माता । महत् । देवानाम् । असुर०त्वम् । एकम् ॥४॥

**आक्षित्पूर्वास्वपरा ऽअनूरुत्सद्यो जातासु तरुणीष्वन्तः ।**
**अन्तर्वतीः सुवते ऽअप्रवीता महद्देवानामसुरत्वमेकम् ॥५॥ ( २८ )**
आ०क्षित् । पूर्वासु । अपराः । अनूरुत् । सद्यः । जातासु ।
तरुणीषु । अन्तरिति ॥ अन्तः०वतीः । सुवते । अप्र०वीताः ।
महत् । देवानाम् । असुर०त्वम् । एकम् ॥५॥

**शयुः परस्तादध नु द्विमाताबन्धनश्चरति वत्स ऽएकः ।**
**मित्रस्य ता वरुणस्य व्रतानि महद्देवानामसुरत्वमेकम् ॥६॥**

शयुः । परस्तात् । अध । नु । द्वि०माता । अबन्धनः ।
चरति । वत्सः । एकः ॥ मित्रस्य । ता । वरुणस्य ।
व्रतानि । महत् । देवानाम् । असुर०त्वम् । एकम् ॥६॥

**द्विमाता होता विदथेषु सम्राळन्वग्रं चरति क्षेति बुध्नः ।**
**प्र रण्यानि रण्यवाचो भरन्ते महद्देवानामसुरत्वमेकम् ॥७॥**
द्वि०माता । होता । विदथेषु । सम्०राट् । अनु । अग्रम् ।
चरति । क्षेति । बुध्नः ॥ प्र । रण्यानि । रण्य०वाचः ।
भरन्ते । महत् । देवानाम् । असुर०त्वम् । एकम् ॥७॥

**शूरस्येव युध्यतो ऽअन्तमस्य प्रतीचीनं ददृशे विश्वमायत् ।**
**अन्तर्मतिश्चरति निष्षिधं गोर्महद्देवानामसुरत्वमेकम् ॥८॥**
शूरस्यऽइव । युध्यतः । अन्तमस्य । प्रतीचीनम् । ददृशे ।
विश्वम् । आ०यत् ॥ अन्तः । मतिः । चरति । निः२सिधम् ।
गोः । महत् । देवानाम् । असुर०त्वम् । एकम् ॥८॥

**नि वेवेति पलितो दूत ऽआस्वन्तर्महाँश्चरति रोचनेन ।**
**वपूंषि बिभ्रदभि नो वि चष्टे महद्देवानामसुरत्वमेकम् ॥९॥**
नि । वेवेति । पलितः । दूतः । आसु । अन्तः । महान् ।
चरति । रोचनेन ॥ वपूंषि । बिभ्रत् । अभि । नः । वि ।
चष्टे । महत् । देवानाम् । असुर०त्वम् । एकम् ॥९॥

**विष्णुर्गोपाः परमं पाति पाथः प्रिया धामान्यमृता दधानः ।**
**अग्निष्टा विश्वा भुवनानि वेद महद्देवानामसुरत्वमेकम् ॥१०॥ (२९)**
विष्णुः । गोपाः । परमम् । पाति । पाथः । प्रिया । धामानि ।
अमृता । दधानः ॥ अग्निः । ता । विश्वा । भुवनानि ।
वेद । महत् । देवानाम् । असुर०त्वम् । एकम् ॥१०॥

नाना॑ चक्राते य॒म्या॒ ३ वपूं॑षि॒ तयो॒॑र॒न्यद्रोच॑ते कृ॒ष्णम॒न्यत् ।
श्यावी॑ च॒ यदरु॑षी च॒ स्वसा॑रौ म॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥११॥
नाना॑ । च॒क्रा॒ते इति॑ । य॒म्या॑ । वपूं॑षि । तयो॑: । अ॒न्यत् ।
रोच॑ते । कृ॒ष्णम् । अ॒न्यत् ॥ श्यावी॑ । च॒ । यत् । अरु॑षी ।
च॒ । स्वसा॑रौ । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒०त्वम् । एक॑म् ॥११॥

मा॒ता च॒ यत्र॑ दुहि॒ता च॑ धे॒नू स॑बर्दु॒घे॑ धा॒पये॑ते समी॒ची ।
ऋ॒तस्य॒ ते सद॑सीळे ऽअ॒न्तर्म॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥१२॥
मा॒ता । च॒ । यत्र॑ । दु॒हि॒ता । च॒ । धे॒नू इति॑ । स॒ब॒र्दु॒घे इति॑ स॒ब॒:२दु॒घे॑ ।
धा॒पये॑ते॒ इति॑ । स॒मी॒ची इति॑ स॒म्०ई॒ची ॥ ऋ॒तस्य॑ । ते॒ इति॑। सद॑सि ।
ई॒ळे॒ । अ॒न्त: । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒०त्वम् । एक॑म् ॥१२॥

अ॒न्यस्या॑ व॒त्सं रि॑ह॒ती मि॑मा॒य कया॑ भु॒वा नि द॑धे धे॒नुरूध॑: ।
ऋ॒तस्य॒ सा पय॑सापिन्वतेळा॑ म॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥१३॥
अ॒न्यस्या॑: । व॒त्सम् । मि॒मा॒य॒ । कया॑ । भु॒वा । नि ।
द॒धे॒ । धे॒नु: । ऊध॑: ॥ ऋ॒तस्य॑ । सा । पय॑सा । अ॒पि॒न्व॒त॒ ।
इळा॑ । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒०त्वम् । एक॑म् ॥१३॥

पद्या॑ वस्ते पु॒रु॒रूपा॒ वपूं॑ष्यू॒र्ध्वा त॑स्थौ॒ त्र्यविं॒ रेरि॑हाणा ।
ऋ॒तस्य॒ सद्म॒ वि च॑रामि वि॒द्वान्म॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥१४॥
पद्या॑ । व॒स्ते॒ । पु॒रु॒०रूपा॑ । वपूं॑षि । ऊ॒र्ध्वा । त॒स्थौ॒ ।
त्रि॒०अवि॑म् । रेरि॑हाणा ॥ ऋ॒तस्य॑ । सद्म॑ । वि । च॒रा॒मि॒ ।
वि॒द्वान् । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒०त्वम् । एक॑म् ॥१४॥

प॒दे इ॑व॒ निहि॑ते द॒स्मे ऽअ॒न्तस्तयो॑र॒न्यद्गुह्य॑मा॒वि॒र॒न्यत् ।
स॒ध्री॒ची॒ना प॒थ्या॒३ सा विषू॑ची म॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥१५॥ (३०)

पदे इवेति पदेऽइव । निहिते इति नि०हिते । दस्मे । अन्तरिति ।
तयोः । अन्यत् । गुह्यम् । आविः । अन्यत् ॥ सध्रीचीना । पथ्या ।
सा । विषूची । महत् । देवानाम् । असुर०त्वम् । एकम् ॥१५॥

**आ धेनवो धुनयन्तामशिश्वीः सबर्दुघाः शशया ऽअप्रदुग्धाः ।**
**नव्यानव्या युवतयो भवन्तीर्महद्देवानामसुरत्वमेकम् ॥१६॥**
आ । धेनवः । धुनयन्ताम् । अशिश्वीः । सबः२दुघाः ।
शशयाः । अप्र०दुग्धाः ॥ नव्याः२नव्याः । युवतयः ।
भवन्तीः । महत् । देवानाम् । असुर०त्वम् । एकम् ॥१६॥

**यदन्यासु वृषभो रोरवीति सो ऽअन्यस्मिन्यूथे नि दधाति रेतः ।**
**स हि क्षपावान्त्स भगः स राजा महद्देवानामसुरत्वमेकम् ॥१७॥**
यत् । अन्यासु । वृषभः । रोरवीति । सः । अन्यस्मिन् । यूथे ।
नि । दधाति । रेतः ॥ सः । हि । क्षपा०वान् । सः । भगः ।
सः । राजा । महत् । देवानाम् । असुर०त्वम् । एकम् ॥१७॥

**वीरस्य नु स्वश्व्यं जनासः प्र नु वोचाम विदुरस्य देवाः ।**
**षोळ्हा युक्ताः पञ्चपञ्चा वहन्ति महद्देवानामसुरत्वमेकम् ॥१८॥**
वीरस्य । नु । सु०अश्व्यम् । जनासः । प्र । नु । वोचाम ।
विदुः । अस्य । देवाः ॥ षोळ्हा । युक्ताः । पञ्च०पञ्च ।
आ । वहन्ति । महत् । देवानाम् । असुर०त्वम् । एकम् ॥१८॥

**देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान ।**
**इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम् ॥१९॥**
देवः । त्वष्टा । सविता । विश्व०रूपः । पुपोष । प्र०जाः ।
पुरुधा । जजान ॥ इमा । च । विश्वा । भुवनानि ।
अस्य । महत् । देवानाम् । असुर०त्वम् । एकम् ॥१९॥

**मही समैरच्चम्वा समीची ऽउभे ते ऽअस्य वसुना न्यृष्टे ।**
**शृण्वे वीरो विन्दमानो वसूनि महद्देवानामसुरत्वमेकम् ॥२०॥**

मही इति । सम् । ऐरत् । चम्वा । समीची इति सम्०ईची । उभे इति ।
ते इति । अस्य । वसुना । न्यृष्टे इति नि०ऋष्टे ॥ शृण्वे । वीरः ।
विन्दमानः । वसूनि । महत् । देवानाम् । असुर०त्वम् । एकम् ॥२०॥

**इमां च नः पृथिवीं विश्वधाया ऽउप क्षेति हितमित्रो न राजा ।**
**पुरःसदः शर्मसदो न वीरा महद्देवानामसुरत्वमेकम् ॥२१॥**

इमाम् । च । नः । पृथिवीम् । विश्व०धायाः । उप । क्षेति ।
हित०मित्रः । न । राजा ॥ पुरः२सदः । शर्म०सदः । न ।
वीराः । महत् । देवानाम् । असुर०त्वम् । एकम् ॥२१॥

**निष्षिध्वरीस्त ऽओषधीरुतापो रयिं त ऽइन्द्र पृथिवी बिभर्ति ।**
**सखायस्ते वामभाजः स्याम महद्देवानामसुरत्वमेकम् ॥२२॥ ( ३१ ) [ ४७१ ]**

निः२सिध्वरीः । ते । ओषधीः । उत । आपः । रयिम् । ते ।
इन्द्र । पृथिवी । बिभर्ति ॥ सखायः । ते । वाम०भाजः ।
स्याम । महत् । देवानाम् । असुर०त्वम् । एकम् ॥२२॥

॥ इति तृतीयाष्टके तृतीयोऽध्यायः ॥ ३ ॥

# तृतीयाध्यायस्य मन्त्रवर्गानुक्रमणी

इन्द्रं त्वा वृषभं ॥१॥
गिर्वणः पाहि नः ॥२॥
आ तू न इन्द्र ॥३॥
स मन्दस्वा ॥४॥
उप नः सुतमा ॥ ५॥
विद्मा हि त्वा ॥६॥
आ याह्यर्वाङुप ॥७॥
अयं ते अस्तु ॥८॥
आ मन्द्रैरिन्द्र ॥९॥
युध्मस्य ते ॥१०॥
मरुत्वाँ इन्द्र ॥११॥
सद्यो ह जातो ॥१२॥
शंसा महामिन्द्रं ॥१३॥
इन्द्रः स्वाहा पिबतु ॥१४॥
चर्षणीधृतं ॥१५॥
तुभ्यं ब्रह्माणि गिर ॥१६॥
धानावन्तं करम्भिणं ॥१७॥
तृतीये धानाः ॥१८॥
इन्द्रापर्वता ॥१९॥
अपाः सोममस्त ॥२०॥
उप प्रेत कुशिका ॥२१॥
ससर्परीरभरत् ॥२२॥
इन्द्रोतिभिर्बहुलाभिः ॥२३॥
इमं महे विदथ्याय ॥२४॥
कविर्नृचक्षा ॥२५॥
हिरण्यपाणिः सविता ॥२६॥
नासत्या मे पितरा ॥२७॥
उषसः पूर्वा अध ॥२८॥
शयुः परस्तादध ॥२९॥
नाना चक्राते ॥३०॥
आ धेनवो धुनयन्ता ॥३१॥

॥ इति शाङ्खायनसंहितायां तृतीयाष्टके तृतीयोऽध्यायः ॥
( तृतीयाध्याये वर्गाः ३१, सूक्तानि १६, ऋचः १५८ )

# ॥ तृतीयाष्टके चतुर्थोऽध्यायः॥

अथ चतुर्थोऽध्यायः॥४॥ वर्गाः १-२५ ] [ तृतीयमण्डले सूक्तानि ५६-६२

[ चतुर्थमण्डले सूक्तानि १-४

## ( ५६ )

८ प्रजापतिर्वैश्वामित्रः, प्रजापतिर्वाच्यो वा । विश्वे देवाः । त्रिष्टुप् ।

न ता मिनन्ति मायिनो न धीरा व्रता देवानां प्रथमा ध्रुवाणि ।
न रोदसी अद्रुहा वेद्याभिर्न पर्वता निनमे तस्थिवांसः ॥१॥
न । ता । मिनन्ति । मायिनः । न । धीराः । व्रता । देवानाम् ।
प्रथमा । ध्रुवाणि ॥ न । रोदसी इति । अद्रुहा । वेद्याभिः ।
न । पर्वताः । नि०नमे । तस्थि०वांसः ॥१॥

षड्भाराँ एको अचरन्बिभर्त्यृतं वर्षिष्ठमुप गाव आगुः ।
तिस्रो महीरुपरास्तस्थुरत्या गुहा द्वे निहिते दर्श्येका ॥२॥
षट् । भारान् । एकः । अचरन् । बिभर्ति । ऋतम् । वर्षिष्ठम् ।
उप । गावः । आ । अगुः ॥ तिस्रः । महीः । उपराः । तस्थुः ।
अत्याः । गुहा । द्वे इति । निहिते इति नि०हिते । दर्शि । एका ॥२॥

त्रिपाजस्यो वृषभो विश्वरूप उत त्र्युधा पुरुध प्रजावान् ।
त्र्यनीकः पत्यते माहिनावान्त्स रेतोधा वृषभः शश्वतीनाम् ॥३॥
त्रि०पाजस्यः । वृषभः । विश्व०रूपः । उत । त्रि०उधा ।
पुरुध । प्रजा०वान् ॥ त्रि०अनीकः । पत्यते । माहिन०वान् ।
सः । रेतः२धा । वृषभः । शश्वतीनाम् ॥३॥

अभीक आसां पदवीरबोध्यादित्यानामह्वे चारु नाम ।
आपश्चिदस्मा अरमन्त देवीः पृथग्व्रजन्तीः परि षीमवृञ्जन् ॥४॥

अभीके । आसाम् । पद॰वीः । अबोधि । आदित्यानाम् ।
अह्वे । चारु । नाम ॥ आपः । चित् । अस्मै । अरमन्त ।
देवीः । पृथक् । व्रजन्तीः । परि । सीम् । अवृञ्जन् ॥४॥

**त्री षधस्था सिन्धवस्त्रिः कवीनामुत त्रिमाता विदथेषु सम्राट् ।**
**ऋतावरीर्योषणास्तिस्रो ऽअप्यास्त्रिरा दिवो विदथे पत्यमानाः ॥५॥**
त्री । सध॰स्था । सिन्धवः । त्रिः । कवीनाम् । उत ।
त्रि॰माता । विदथेषु । सम्॰राट् ॥ ऋत॰वरीः । योषणाः ।
तिस्रः । अप्याः । त्रिः । आ । दिवः । विदथे । पत्यमानाः ॥५॥

**त्रिरा दिवः सवितर्वार्याणि दिवेदिव ऽआ सुव त्रिर्नो ऽअह्नः ।**
**त्रिधातु राय ऽआ सुवा वसूनि भग त्रातर्धिषणे सातये धाः ॥६॥**
त्रिः । आ । दिवः । सवितः । वार्याणि । दिवे॰दिवे । आ ।
सुव । त्रिः । नः । अह्नः ॥ त्रि॰धातु । रायः । आ । सुव ।
वसूनि । भग । त्रातः । धिषणे । सातये । धाः ॥६॥

**त्रिरा दिवः सविता सोषवीति राजाना मित्रावरुणा सुपाणी ।**
**आपश्चिदस्य रोदसी चिदुर्वी रत्नं भिक्षन्त सवितुः सवाय ॥७॥**
त्रिः । आ । दिवः । सविता । सोसवीति । राजाना । मित्रावरुणा ।
सुपाणी इति सु॰पाणी ॥ आपः । चित् । अस्य । रोदसी इति ।
चित् । उर्वी इति । रत्नम् । भिक्षन्त । सवितुः । सवाय ॥७॥

**त्रिरुत्तमा दूणशा रोचनानि त्रयो राजन्त्यसुरस्य वीराः ।**
**ऋतावान ऽइषिरा दूळभासस्त्रिरा दिवो विदथे सन्तु देवाः ॥८॥ ( १ ) [ ४७९ ]**
त्रिः । उत्॰तमा । दुः॰रनशा । रोचनानि । त्रयः । राजन्ति ।
असुरस्य । वीराः ॥ ऋत॰वानः । इषिराः । दुः॰रदभासः ।
त्रिः । आ । दिवः । विदथे । सन्तु । देवाः ॥८॥

# ( ५७ )

६ गाथिनो विश्वामित्रः । विश्वे देवाः । त्रिष्टुप् ।

**प्र मे विविक्वाँ अविदन्मनीषां धेनुं चरन्तीं प्रयुतामगोपाम् ।**

**सद्यश्चिद्या दुदुहे भूरि धासेरिन्द्रस्तदग्निः पनितारो अस्याः ॥१॥**

प्र । मे । विविक्वान् । अविदत् । मनीषाम् । धेनुम् । चरन्तीम् ।

प्र०युताम् । अगोपाम् ॥ सद्यः । चित् । या । दुदुहे । भूरि ।

धासेः । इन्द्रः । तत् । अग्निः । पनितारः । अस्याः ॥१॥

**इन्द्रः सु पूषा वृषणा सुहस्ता दिवो न प्रीताः शशयं दुदुह्रे ।**

**विश्वे यदस्यां रणयन्त देवाः प्र वोऽत्र वसवः सुम्नमश्याम् ॥२॥**

इन्द्रः । सु । पूषा । वृषणा । सु०हस्ता । दिवः । न । प्रीताः ।

शशयम् । दुदुह्रे ॥ विश्वे । यत् । अस्याम् । रणयन्त ।

देवाः । प्र । वः । अत्र । वसवः । सुम्नम् । अश्याम् ॥२॥

**या जामयो वृष्ण इच्छन्ति शक्तिं नमस्यन्तीर्जानते गर्भमस्मिन् ।**

**अच्छा पुत्रं धेनवो वावशाना महश्चरन्ति बिभ्रतं वपूंषि ॥३॥**

याः । जामयः । वृष्णे । इच्छन्ति । शक्तिम् । नमस्यन्तीः ।

जानते । गर्भम् । अस्मिन् ॥ अच्छ । पुत्रम् । धेनवः ।

वावशानाः । महः । चरन्ति । बिभ्रतम् । वपूंषि ॥३॥

**अच्छा विवक्मि रोदसी सुमेके ग्राव्णो युजानो अध्वरे मनीषा ।**

**इमा उ ते मनवे भूरिवारा ऊर्ध्वा भवन्ति दर्शता यजत्राः ॥४॥**

अच्छ । विवक्मि । रोदसी इति । सुमेके इति सु०मेके । ग्राव्णः ।

युजानः । अध्वरे । मनीषा ॥ इमाः । ऊँ इति । ते । मनवे ।

भूरि०वाराः । ऊर्ध्वाः । भवन्ति । दर्शताः । यजत्राः ॥४॥

**या ते जिह्वा मधुमती सुमेधा ऽअग्ने देवेषूच्यत ऽउरूची ।**
**तयेह विश्वाँ ऽअवसे यजत्राना सादय पायया चा मधूनि ॥५॥**
या । ते । जिह्वा । मधु॰मती । सु॰मेधाः । अग्ने ।
देवेषु । उच्यते । उरूची ॥ तया । इह । विश्वान् ।
अवसे । यजत्रान् । आ । सादय । पायय । च । मधूनि ॥५॥

**या ते ऽअग्ने पर्वतस्येव धारासश्चन्ती पीपयद्देव चित्रा ।**
**तामस्मभ्यं प्रमतिं जातवेदो वसो रास्व सुमतिं विश्वजन्याम् ॥६॥ (२) [४८५]**
या । ते । अग्ने । पर्वतस्यऽइव । धारा । असश्चन्ती ।
पीपयत् । देव । चित्रा ॥ ताम् । अस्मभ्यम् । प्र॰मतिम् ।
जात॰वेदः । वसो इति । रास्व । सु॰मतिम् । विश्व॰जन्याम् ॥६॥

## (५८)

९ गाथिनो विश्वामित्रः । अश्विनौ । त्रिष्टुप् ।

**धेनुः प्रत्नस्य काम्यं दुहानान्तः पुत्रश्चरति दक्षिणायाः ।**
**आ द्योतनिं वहति शुभ्रयामोषसः स्तोमो ऽअश्विनावजीगः ॥१॥**
धेनुः । प्रत्नस्य । काम्यम् । दुहाना । अन्तरिति । पुत्रः ।
चरति । दक्षिणायाः ॥ आ । द्योतनिम् । वहति ।
शुभ्र॰यामा । उषसः । स्तोमः । अश्विनौ । अजीगरिति ॥१॥

**सुयुग्वहन्ति प्रति वामृतेनोर्ध्वा भवन्ति पितरेव मेधाः ।**
**जरेथामस्मद्वि पणेर्मनीषां युवोरवश्चकृमा यातमर्वाक् ॥२॥**
सु॰युक् । वहन्ति । प्रति । वाम् । ऋतेन । ऊर्ध्वा । भवन्ति ।
पितराऽइव । मेधाः ॥ जरेथाम् । अस्मत् । वि । पणेः ।
मनीषाम् । युवोः । अवः । चकृम । आ । यातम् । अर्वाक् ॥२॥

सुयुग्भिरश्वैः सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।
किमङ्ग वां प्रत्यवर्त्तिं गमिष्ठाहुर्विप्रासो ऽअश्विना पुराजाः ॥३॥
सुयुक्०भिः । अश्वैः । सु०वृता । रथेन । दस्रौ । इमम् ।
शृणुतम् । श्लोकम् । अद्रेः ॥ किम् । अङ्ग । वाम् । प्रति ।
अवर्त्तिम् । गमिष्ठा । आहुः । विप्रासः । अश्विना । पुरा०जाः ॥३॥

आ मन्येथामा गतं कच्चिदेवैर्विश्वे जनासो ऽअश्विना हवन्ते ।
इमा हि वां गोऋजीका मधूनि प्र मित्रासो न ददुरुस्रो ऽअग्रे ॥४॥
आ । मन्येथाम् । आ । गतम् । कत् । चित् । एवैः । विश्वे ।
जनासः । अश्विना । हवन्ते ॥ इमा । हि । वाम् । गो०ऋजीका ।
मधूनि । प्र । मित्रासः । न । ददुः । उस्रः । अग्रे ॥४॥

तिरः पुरू चिदश्विना रजांस्याङ्गूषो वां मघवाना जनेषु ।
एह यातं पथिभिर्देवयानैर्दस्राविमे वां निधयो मधूनाम् ॥५॥ ( ३ )
तिरः । पुरु । चित् । अश्विना । रजांसि । आङ्गूषः ।
वाम् । मघ०वाना । जनेषु ॥ आ । इह । यातम् । पथि०भिः ।
देव०यानैः । दस्रौ । इमे । वाम् । नि०धयः । मधूनाम् ॥५॥

पुराणमोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्याम् ।
पुनः कृण्वानाः सख्या शिवानि मध्वा मदेम सह नू समानाः ॥६॥
पुराणम् । ओकः । सख्यम् । शिवम् । वाम् । युवोः । नरा ।
द्रविणम् । जह्नाव्याम् ॥ पुनरिति । कृण्वानाः । सख्या ।
शिवानि । मध्वा । मदेम । सह । नु । समानाः ॥६॥

अश्विना वायुना युवं सुदक्षा नियुद्भिश्च सजोषसा युवाना ।
नासत्या तिरोअह्न्यं जुषाणा सोमं पिबतमस्रिधा सुदानू ॥७॥

अश्विना । वायुना । युवम् । सु०दक्षा । नियुत्०भिः । च ।
स०जोषसा । युवाना ॥ नासत्या । तिरः२अह्न्यम् । जुषाणा ।
सोमम् । पिबतम् । अस्रिधा । सुदानू इति सु०दानू ॥७॥

**अश्विना परि वामिषः पुरूचीरीयुर्गीर्भिर्यतमाना ऽअमृध्राः ।**
**रथो ह वामृतजा ऽअद्रिजूतः परि द्यावापृथिवी याति सद्यः ॥८॥**
अश्विना । परि । वाम् । इषः । पुरूचीः । ईयुः । गीः२भिः ।
यतमानाः । अमृध्राः ॥ रथः । ह । वाम् । ऋत०जाः ।
अद्रि०जूतः । परि । द्यावापृथिवी इति । याति । सद्यः ॥८॥

**अश्विना मधुषुत्तमो युवाकुः सोमस्तं पातमा गतं दुरोणे ।**
**रथो ह वां भूरि वर्पः करिक्रत्सुतावतो निष्कृतमागमिष्ठः ॥९॥ (४) [४९४]**
अश्विना । मधुसुत्०तमः । युवाकुः । सोमः । तम् । पातम् ।
आ । गतम् । दुरोणे ॥ रथः । ह । वाम् । भूरि । वर्पः ।
करिक्रत् । सुत०वतः । निः२कृतम् । आ०गमिष्ठः ॥९॥

## ( ५९ )

**९ गाथिनो विश्वामित्रः । मित्रः । त्रिष्टुप् , ६-९ गायत्री ।**

**मित्रो जनान्यातयति ब्रवाणो मित्रो दाधार पृथिवीमुत द्याम् ।**
**मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥१॥**
मित्रः । जनान् । यातयति । ब्रवाणः । मित्रः । दाधार ।
पृथिवीम् । उत । द्याम् ॥ मित्रः । कृष्टीः । अनि०मिषा ।
अभि । चष्टे । मित्राय । हव्यम् । घृत०वत् । जुहोत ॥१॥

**प्र स मित्र मर्तो ऽअस्तु प्रयस्वान्यस्त ऽआदित्य शिक्षति व्रतेन ।**
**न हन्यते न जीयते त्वोतो नैनमंहो ऽअश्नोत्यन्तितो न दूरात् ॥२॥**

प्र । सः । मित्र । मर्त्तः । अस्तु । प्रयस्वान् । यः । ते । आदित्य ।
शिक्षति । व्रतेन ॥ न । हन्यते । न । जीयते । त्वा०ऊतः । न ।
एनम् । अंहः । अश्नोति । अन्तितः । न । दूरात् ॥२॥

**अनमीवास ऽइळया मदन्तो मितज्ञवो वरिमन्ना पृथिव्याः ।**
**आदित्यस्य व्रतमुपक्षियन्तो वयं मित्रस्य सुमतौ स्याम ॥३॥**
अनमीवासः । इळया । मदन्तः । मित०ज्ञवः । वरिमन् ।
आ । पृथिव्याः ॥ आदित्यस्य । व्रतम् । उप०क्षियन्तः ।
वयम् । मित्रस्य । सु०मतौ । स्याम ॥३॥

**अयं मित्रो नमस्यः सुशेवो राजा सुक्षत्रो ऽअजनिष्ट वेधाः ।**
**तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥४॥**
अयम् । मित्रः । नमस्यः । सु०शेवः । राजा । सु०क्षत्रः ।
अजनिष्ट । वेधाः ॥ तस्य । वयम् । सु०मतौ ।
यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥४॥

**महाँ ऽआदित्यो नमसोपसद्यो यातयज्जनो गृणते सुशेवः ।**
**तस्मा ऽएतत्पन्यतमाय जुष्टमग्नौ मित्राय हविरा जुहोत ॥५॥ (५)**
महान् । आदित्यः । नमसा । उप०सद्यः । यातयत्०जनः ।
गृणते । सु०शेवः ॥ तस्मै । एतत् । पन्य०तमाय ।
जुष्टम् । अग्नौ । मित्राय । हविः । आ । जुहोत ॥५॥

**मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि ।**
**द्युम्नं चित्रश्रवस्तमम् ॥६॥**
मित्रस्य । चर्षणि०धृतः । अवः । देवस्य । सानसि ॥
द्युम्नम् । चित्रश्रवः२तमम् ॥६॥

**अभि यो महिना दिवं मित्रो बभूव सप्रथाः ।**
**अभि श्रवोभिः पृथिवीम् ॥७॥**
अभि । यः । महिना । दिवम् । मित्रः । बभूव । स॰प्रथाः ॥
अभि । श्रवः२भिः । पृथिवीम् ॥७॥

**मित्राय पञ्च येमिरे जना ऽअभिष्टिशवसे ।**
**स देवान्विश्वान्बिभर्ति ॥८॥**
मित्राय । पञ्च । येमिरे । जनाः । अभिष्टि॰शवसे ॥
सः । देवान् । विश्वान् । बिभर्ति ॥८॥

**मित्रो देवेष्वायुषु जनाय वृक्तबर्हिषे ।**
**इष ऽइष्टव्रता ऽअकः ॥९॥ ( ६ )** [ ५०३ ]
मित्रः । देवेषु । आयुषु । जनाय । वृक्त॰बर्हिषे ॥
इषः । इष्ट॰व्रताः । अकरित्यकः ॥९॥

## ( ६० )

**७ गाथिनो विश्वामित्रः । ऋभवः ५-७ इन्द्र ऋभवश्च । जगती ।**

**इहेह वो मनसा बन्धुता नर ऽउशिजो जग्मुरभि तानि वेदसा ।**
**याभिर्मायाभिः प्रतिजूतिवर्पसः सौधन्वना यज्ञियं भागमानश ॥१॥**
इह॰इह । वः । मनसा । बन्धुता । नरः । उशिजः । जग्मुः ।
अभि । तानि । वेदसा ॥ याभिः । मायाभिः । प्रतिजूति॰वर्पसः ।
सौधन्वनाः । यज्ञियम् । भगम् । आनश ॥१॥

**याभिः शचीभिश्चमसाँ ऽअपिंशत यया धिया गामरिणीत चर्मणः ।**
**येन हरी मनसा निरतक्षत तेन देवत्वमृभवः समानश ॥२॥**

याभिः । शचीभिः । चमसान् । अपिंशत । यया । धिया ।
गाम् । अरिणीत । चर्मणः ॥ येन । हरी इति । मनसा ।
निः२अतक्षत । तेन । देव०त्वम् । ऋभवः । सम् । आनश ॥२॥

**इन्द्रस्य सख्यमृभवः समानशुर्मनोर्नपातो ऽअपसो दधन्विरे ।**
**सौधन्वनासो ऽअमृतत्वमेरिरे विष्ट्वी शमीभिः सुकृतः सुकृत्यया ॥३॥**
इन्द्रस्य । सख्यम् । ऋभवः । सम् । आनशुः । मनोः ।
नपातः । अपसः । दधन्विरे ॥ सौधन्वनासः । अमृत०त्वम् ।
आ । ईरिरे । विष्ट्वी । शमीभिः । सु०कृतः । सु०कृत्यया ॥३॥

**इन्द्रेण याथ सरथं सुते सचाँ ऽअथो वशानां भवथा सह श्रिया ।**
**न वः प्रतिमै सुकृतानि वाघतः सौधन्वना ऽऋभवो वीर्याणि च ॥४॥**
इन्द्रेण । याथ । स०रथम् । सुते । सचा । अथो इति । वशानाम् ।
भवथ । सह । श्रिया ॥ न । वः । प्रति०मै । सु०कृतानि ।
वाघतः । सौधन्वनाः । ऋभवः । वीर्याणि । च ॥४॥

**इन्द्र ऽऋभुभिर्वाजवद्भिः समुक्षितं सुतं सोममा वृषस्वा गभस्त्योः ।**
**धियेषितो मघवन्दाशुषो गृहे सौधन्वनेभिः सह मत्स्वा नृभिः ॥५॥**
इन्द्र । ऋभु०भिः । वाजवत्०भिः । सम्०उक्षितम् । सुतम् ।
सोमम् । आ । वृषस्व । गभस्त्योः ॥ धिया । इषितः । मघ०वन् ।
दाशुषः । गृहे । सौधन्वनेभिः । सह । मत्स्व । नृ०भिः ॥५॥

**इन्द्र ऽऋभुमान्वाजवान्मत्स्वेह नोऽस्मिन्त्सवने शच्या पुरुष्टुत ।**
**इमानि तुभ्यं स्वसराणि येमिरे व्रता देवानां मनुषश्च धर्मभिः ॥६॥**
इन्द्र । ऋभु०मान् । वाज०वान् । मत्स्व । इह । नः । अस्मिन् ।
सवने । शच्या । पुरु०स्तुत ॥ इमानि । तुभ्यम् । स्वसराणि ।
येमिरे । व्रता । देवानाम् । मनुषः । च । धर्म०भिः ॥६॥

इन्द्र॑ ऽऋ॒भुभि॑र्वा॒जिभि॑र्वा॒जय॑न्नि॒ह स्तोम॑ जरि॒तुरुप॑ याहि य॒ज्ञिय॑म् ।
श॒तं केते॑भिरिषि॒रेभि॑रा॒यवे॑ स॒हस्र॑णीथो ऽअध्व॒रस्य॒ होम॑नि ॥७॥ (७) [५१०]
इन्द्र॑ । ऋ॒भु०भिः॑ । वा॒जि०भिः॑ । वा॒जय॑न् । इ॒ह । स्तोम॑म् ।
ज॒रि॒तुः । उप॑ । या॒हि॒ । य॒ज्ञिय॑म् ॥ श॒तम् । केते॑भिः । इ॒षि॒रेभिः॑ ।
आ॒यवे॑ । स॒हस्र॑०नीथः । अ॒ध्व॒रस्य॑ । होम॑नि ॥७॥

## ( ६१ )

७ गाथिनो विश्वामित्रः । उषाः । त्रिष्टुप् ।

उषो॒ वाजे॑न वाजिनि॒ प्रचे॑ता॒ः स्तोम॑ जुषस्व गृण॒तो म॑घोनि ।
पु॒राणी दे॑वि युव॒तिः पुर॑न्धि॒रनु॑ व्र॒तं च॑रसि विश्ववारे ॥१॥
उष॑ः । वाजे॑न । वा॒जि॒नि॒ । प्र०चे॑ताः । स्तोम॑म् । जु॒ष॒स्व॒ ।
गृ॒णतः । म॒घो॒नि॒ ॥ पु॒राणी । दे॒वि॒ । यु॒वतिः ।
पुर॑म्०धिः ।अनु॑ । व्र॒तम् । च॒र॒सि॒ । वि॒श्व॒०वा॒रे॒ ॥१॥

उषो॑ दे॒व्यम॑र्त्त्या॒ वि भा॑हि च॒न्द्रर॑था सू॒नृता॑ ऽई॒रय॑न्ती ।
आ त्वा॑ वहन्तु सु॒यमा॑सो॒ ऽअश्वा॒ हिर॑ण्यवर्णां पृथु॒पाज॑सो॒ ये ॥२॥
उष॑ः । दे॒वि॒ । अम॑र्त्त्या । वि । भा॒हि॒ । च॒न्द्र०र॑था ।
सू॒नृता॑ः । ई॒रय॑न्ती ॥ आ । त्वा॒ । व॒ह॒न्तु॒ । सु॒०यमा॑सः ।
अश्वा॑ः । हिर॑ण्य०वर्णाम् । पृ॒थु॒०पाज॑सः । ये ॥२॥

उष॑ः प्रती॒ची भुव॑नानि॒ विश्वो॒र्ध्वा ति॑ष्ठस्य॒मृत॑स्य के॒तुः ।
स॒मा॒नमर्थ॑ चरणी॒यमा॑ना च॒क्रमि॑व नव्य॒स्या व॑वृत्स्व ॥३॥
उष॑ः । प्र॒ती॒ची । भुव॑नानि । विश्वा॑ । ऊ॒र्ध्वा ।
ति॒ष्ठ॒सि॒ । अ॒मृत॑स्य । के॒तुः ॥ स॒मा॒नम् । अर्थ॑म् ।
च॒र॒णी॒यमा॑ना । च॒क्रम्ऽइ॑व । न॒व्य॒सि॒ । आ । व॒वृ॒त्स्व॒ ॥३॥

**अव स्यूमैव चिन्वती मघोन्युषा याति स्वसरस्य पत्नी ।**
**स्वर्जनन्ती सुभगा सुदंसा ऽआन्ताद्दिवः पप्रथ ऽआ पृथिव्याः ॥४॥**
अव । स्यूमऽइव । चिन्वती । मघोनी । उषाः । याति ।
स्वसरस्य । पत्नी ॥ स्वः । जनन्ती । सु०भगा । सु०दंसाः ।
आ । अन्तात् । दिवः । पप्रथे । आ । पृथिव्याः ॥४॥

**अच्छा वो देवीमुषसं विभातीं प्र वो भरध्वं नमसा सुवृक्तिम् ।**
**ऊर्ध्वं मधुधा दिवि पाजो ऽअश्रेत्प्र रोचना रुरुचे रण्वसंदृक् ॥५॥**
अच्छ । वः । देवीम् । उषसम् । वि०भातीम् । प्र । वः ।
भरध्वम् । नमसा । सु०वृक्तिम् ॥ ऊर्ध्वम् । मधुधा । दिवि ।
पाजः । अश्रेत् । प्र । रोचना । रुरुचे । रण्व०सन्दृक् ॥५॥

**ऋतावरी दिवो ऽअर्कैरबोध्या रेवती रोदसी चित्रमस्थात् ।**
**आयतीमग्न ऽउषसं विभातीं वाममेषि द्रविणं भिक्षमाणः ॥६॥**
ऋत०वरी । दिवः । अर्कैः । अबोधि । आ । रेवती । रोदसी इति ।
चित्रम् । अस्थात् ॥ आ०यतीम् । अग्ने । उषसम् ।
वि०भातीम् । वामम् । एषि । द्रविणम् । भिक्षमाणः ॥६॥

**ऋतस्य बुध्न ऽउषसामिषण्यन्वृषा मही रोदसी ऽआ विवेश ।**
**मही मित्रस्य वरुणस्य माया चन्द्रेव भानुं वि दधे पुरुत्रा ॥७॥ ( ८ ) [ ५१७ ]**
ऋतस्य । बुध्ने । उषसाम् । इषण्यन् । वृषा । मही इति ।
रोदसी इति । आ । विवेश ॥ मही । मित्रस्य । वरुणस्य ।
माया । चन्द्राऽइव । भानुम् । वि । दधे । पुरु०त्रा ॥७॥

# ( ६२ )

१८ गाथिनो विश्वामित्रः, १६-१८ जमदग्निर्वा । १-३ इन्द्रावरुणौ, ४-६ बृहस्पतिः, ७-९ पूषा, १०-१२ सविता, १३-१५ सोमः, १६-१८ मित्रावरुणौ । गायत्री, १-३ त्रिष्टुप् ।

**इमा ऽउ वां भृमयो मन्यमाना युवावते न तुज्या ऽअभूवन् ।**

**क्व१ त्यदिन्द्रावरुणा यशो वां येन स्मा सिनं भरथः सखिभ्यः ॥१॥**

इमाः । ऊँ इति । वाम् । भृमयः । मन्यमानाः । युवा०वते ।
न । तुज्याः । अभूवन् ॥ क्व । त्यत् । इन्द्रावरुणा । यशः ।
वाम् । येन । स्म । सिनम् । भरथः । सखि०भ्यः ॥१॥

**अयमु वां पुरुतमो रयीयञ्छश्वत्तममवसे जोहवीति ।**

**सजोषाविन्द्रावरुणा मरुद्भिर्दिवा पृथिव्या शृणुतं हवं मे ॥२॥**

अयम् । ऊँ इति । वाम् । पुरु०तमः । रयि०यन् । शश्वत्०तमम् ।
अवसे । जोहवीति ॥ स०जोषौ । इन्द्रावरुणा । मरुत्०भिः ।
दिवा । पृथिव्या । शृणुतम् । हवम् । मे ॥२॥

**अस्मे तदिन्द्रावरुणा वसु ष्यादस्मे रयिर्मरुतः सर्ववीरः ।**

**अस्मान्वरूत्रीः शरणैरवन्त्वस्मान्होत्रा भारती दक्षिणाभिः ॥३॥**

अस्मे इति । तत् । इन्द्रावरुणा । वसु । स्यात् । अस्मे इति ।
रयिः । मरुतः । सर्व०वीरः ॥ अस्मान् । वरूत्रीः । शरणैः ।
अवन्तु । अस्मान् । होत्रा । भारती । दक्षिणाभिः ॥३॥

**बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य ।**

**रास्व रत्नानि दाशुषे ॥४॥**

बृहस्पते । जुषस्व । नः । हव्यानि । विश्व०देव्य ॥
रास्व । रत्नानि । दाशुषे ॥४॥

**शुचिमर्कैर्बृहस्पतिमध्वरेषु नमस्यत ।**

**अनाम्योज ऽआ चके ॥५॥ ( ९ )**

शुचिम् । अर्कैः । बृहस्पतिम् । अध्वरेषु । नमस्यत ॥
अनामि । ओजः । आ । चके ॥५॥

**वृषभं चर्षणीनां विश्वरूपमदाभ्यम् ।**

**बृहस्पतिं वरेण्यम् ॥६॥**

वृषभम् । चर्षणीनाम् । विश्व०रूपम् । अदाभ्यम् ॥
बृहस्पतिम् । वरेण्यम् ॥६॥

**इयं ते पूषन्नाघृणे सुष्टुतिर्देव नव्यसी ।**

**अस्माभिस्तुभ्यं शस्यते ॥७॥**

इयम् । ते । पूषन् । आघृणे । सु०स्तुतिः । देव । नव्यसी ॥
अस्माभिः । तुभ्यम् । शस्यते ॥७॥

**तां जुषस्व गिरं मम वाजयन्तीमवा धियम् ।**

**वधूयुरिव योषणाम् ॥८॥**

ताम् । जुषस्व । गिरम् । मम । वाज०यन्तीम् । अव । धियम् ॥
वधूयुःऽइव । योषणाम् ॥८॥

**यो विश्वाभि विपश्यति भुवना सं च पश्यति ।**

**स नः पूषाविता भुवत् ॥९॥**

यः । विश्वा । अभि । वि०पश्यति । भुवना ।
सम् । च । पश्यति ॥ सः । नः । पूषा । अविता । भुवत् ॥९॥

**तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।**

**धियो यो नः प्रचोदयात् ॥१०॥ ( १० )**

तत् । सवितुः । वरेण्यम् । भर्गः । देवस्य । धीमहि ॥
धियः । यः । नः । प्र०चोदयात् ॥१०॥

**देवस्य सवितुर्वयं वाजयन्तः पुरंध्या ।**
**भर्गस्य रातिमीमहे ॥११॥**
देवस्य । सवितुः । वयम् । वाज०यन्तः । पुरम्०ध्या ॥
भर्गस्य । रातिम् । ईमहे ॥११॥

**देवं नरः सवितारं विप्रा यज्ञैः सुवृक्तिभिः ।**
**नमस्यन्ति धियेषिताः ॥१२॥**
देवम् । नरः । सवितारम् । विप्राः । यज्ञैः । सुवृक्ति०भिः ॥
नमस्यन्ति । धिया । इषिताः ॥१२॥

**सोमो जिगाति गातुविद्देवानामेति निष्कृतम् ।**
**ऋतस्य योनिमासदम् ॥१३॥**
सोमः । जिगाति । गातु०वित् । देवानाम् । एति । निः२कृतम् ॥
ऋतस्य । योनिम् । आ०सदम् ॥१३॥

**सोमो ऽअस्मभ्यं द्विपदे चतुष्पदे च पशवे ।**
**अनमीवा ऽइषस्करत् ॥१४॥**
सोमः । अस्मभ्यम् । द्वि०पदे । चतुः२पदे । च । पशवे ॥
अनमीवाः । इषः । करत् ॥१४॥

**अस्माकमायुर्वर्द्धयन्नभिमातीः सहमानः ।**
**सोमः सधस्थमासदत् ॥१५॥**
अस्माकम् । आयुः । वर्द्धयन् । अभि०मातीः । सहमानः ॥
सोमः । सध०स्थम् । आ । असदत् ॥१५॥

**आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।**

**मध्वा रजांसि सुक्रतू ॥१६॥**

आ । नः । मित्रावरुणा । घृतैः । गव्यूतिम् । उक्षतम् ॥

मध्वा । रजांसि । सुक्रतू इति सु०क्रतू ॥१६॥

**उरुशंसा नमोवृधा मह्ना दक्षस्य राजथः ।**

**द्राघिष्ठाभिः शुचिव्रता ॥१७॥**

उरु०शंसा । नमः२वृधा । मह्ना । दक्षस्य । राजथः ॥

द्राघिष्ठाभिः । शुचि०व्रता ॥१७॥

**गृणाना जमदग्निना योनावृतस्य सीदतम् ।**

**पातं सोममृतावृधा ॥१८॥ ( ११ )** **[ ५३५ ]**

गृणाना । जमत्०अग्निना । योनौ । ऋतस्य । सीदतम् ॥

पातम् । सोमम् । ऋत०वृधा ॥१८॥

**॥ इति तृतीयं मण्डलम् ॥**

# ॥ अथ चतुर्थ मण्डलम् ॥

## ( १ ) [ अथ प्रथमोऽनुवाकः ॥१॥ सूक्तानि १-१०

२० वामदेवो गौतमः। अग्निः, २-५ अग्नीवरुणौ वा। त्रिष्टुप्, १ अष्टिः, २ अतिजगती, ३ धृतिः।

**त्वां ह्यग्ने सदमित्समन्यवो देवासो देवमरतिं न्येरिर ऽइति क्रत्वा न्येरिरे ।**
**अमर्त्त्यं यजत मर्त्त्येष्वा देवमादेवं जनत प्रचेतसं विश्वमादेवं जनत प्रचेतसम् ॥१॥**

त्वाम् । हि । अग्ने । सदम् । इत् । स०मन्यवः । देवासः । देवम् । अरतिम् ।
नि०एरिरे । इति । क्रत्वा । नि०एरिरे ॥ अमर्त्त्यम् । यजत । मर्त्येषु । आ । देवम् ।
आ०देवम् । जनत । प्र०चेतसम् । विश्वम् । आ०देवम् । जनत । प्र०चेतसम् ॥१॥

**स भ्रातरं वरुणमग्न ऽआ ववृत्स्व देवाँ ऽअच्छा सुमती यज्ञवनसं ज्येष्ठं यज्ञवनसम् ।**
**ऋतावानमादित्यं चर्षणीधृतं राजानं चर्षणीधृतम् ॥२॥**

सः । भ्रातरम् । वरुणम् । अग्ने । आ । ववृत्स्व । देवान् । अच्छ ।
सु०मती । यज्ञ०वनसम् । ज्येष्ठम् । यज्ञ०वनसम् ॥ ऋत०वानम् ।
आदित्यम् । चर्षणि०धृतम् । राजानम् । चर्षणि०धृतम् ॥२॥

**सखे सखायमभ्या ववृत्स्वाशुं न चक्रं रथ्येव रंह्यास्मभ्यं दस्म रंह्या ।**
**अग्ने मृळीकं वरुणे सचा विदो मरुत्सु विश्वभानुषु ।**
**तोकाय तुजे शुशुचान शं कृध्यस्मभ्यं दस्म शं कृधि ॥३॥**

सखे । सखायम् । अभि । आ । ववृत्स्व । आशुम् । न । चक्रम् । रथ्याऽइव ।
रंह्या अस्मभ्यम् । दस्म । रंह्या ॥ अग्ने । मृळीकम् । वरुणे । सचा । विदः । मरुत्०सु ।
विश्व०भानुषु । तोकाय । तुजे । शुशुचान । शम् । कृधि । अस्मभ्यम् । दस्म । शम् । कृधि ॥३॥

**त्वं नो ऽअग्ने वरुणस्य विद्वान्देवस्य हेळोऽव यासिसीष्ठाः ।**
**यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत् ॥४॥**

त्वम् । नः । अग्ने । वरुणस्य । विद्वान् । देवस्य । हेळः ।
अव । यासिसीष्ठाः ॥ यजिष्ठः । वह्नि॰तमः । शोशुचानः ।
विश्वा । द्वेषांसि । प्र । मुमुग्धि । अस्मत् ॥४॥

**स त्वं नो ऽअग्नेऽवमो भवोती नेदिष्ठो ऽअस्या ऽउषसो व्युष्टौ ।**
**अव यक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो न ऽएधि ॥५॥ ( १२ )**
सः । त्वम् । नः । अग्ने । अवमः । भव । ऊती । नेदिष्ठः ।
अस्याः । उषसः । वि॰उष्टौ ॥ अव । यक्ष्व । नः । वरुणम् ।
रराणः । वीहि । मृळीकम् । सु॰हवः । नः । एधि ॥५॥

**अस्य श्रेष्ठा सुभगस्य संदृग्देवस्य चित्रतमा मर्त्त्येषु ।**
**शुचि घृतं न तप्तमघ्न्यायाः स्पार्हा देवस्य मंहनेव धेनोः ॥६॥**
अस्य । श्रेष्ठा । सु॰भगस्य । सम्॰दृक् । देवस्य ।
चित्र॰तमा । मर्त्त्येषु ॥ शुचि । घृतम् । न । तप्तम् ।
अघ्न्यायाः । स्पार्हा । देवस्य । मंहनाऽइव । धेनोः ॥६॥

**त्रिरस्य ता परमा सन्ति सत्या स्पार्हा देवस्य जनिमान्यग्नेः ।**
**अनन्ते ऽअन्तः परिवीत ऽआगाच्छुचिः शुक्रो ऽअर्यो रोरुचानः ॥७॥**
त्रिः । अस्य । ता । परमा । सन्ति । सत्या । स्पार्हा ।
देवस्य । जनिमानि । अग्नेः ॥ अनन्ते । अन्तरिति । परि॰वीतः ।
आ । अगात् । शुचिः । शुक्रः । अर्यः । रोरुचानः ॥७॥

**स दूतो विश्वेदभि वष्टि सद्मा होता हिरण्यरथो रंसुजिह्वः ।**
**रोहिदश्वो वपुष्यो विभावा सदा रण्वः पितुमतीव संसत् ॥८॥**
सः । दूतः । विश्वा । इत् । अभि । वष्टि । सद्म । होता ।
हिरण्य॰रथः । रम्॰सुजिह्वः ॥ रोहित्॰अश्वः । वपुष्यः ।
विभा॰वा । सदा । रण्वः । पितुमतीऽइव । सम्॰सत् ॥८॥

स चैतयन्मनुषो यज्ञबन्धुः प्र तं मह्या रशनया नयन्ति ।
स क्षेत्यस्य दुर्यासु साधन्देवो मर्त्तस्य सधनित्वमाप ॥९॥
सः । चेतयत् । मनुषः । यज्ञ०बन्धुः । प्र । तम् । मह्या ।
रशनया । नयन्ति ॥ सः । क्षेति । अस्य । दुर्यासु ।
साधन् । देवः । मर्त्तस्य । सधनि०त्वम् । आप ॥९॥

स तू नो ऽअग्निर्नयतु प्रजानन्नच्छा रत्नं देवभक्तं यदस्य ।
धिया यद्विश्वे ऽअमृता ऽअकृण्वन्द्यौष्पिता जनिता सत्यमुक्षन् ॥१०॥ ( १३ )
सः । तु । नः । अग्निः । नयतु । प्र०जानन् । अच्छ । रत्नम् ।
देव०भक्तम् । यत् । अस्य ॥ धिया । यत् । विश्वे । अमृताः ।
अकृण्वन् । द्यौः । पिता । जनिता । सत्यम् । उक्षन् ॥१०॥
स जायत प्रथमः पस्त्यासु महो बुध्ने रजसो ऽअस्य योनौ ।
अपादशीर्षा गुहमानो ऽअन्तायोयुवानो वृषभस्य नीळे ॥११॥
सः । जायत । प्रथमः । पस्त्यासु । महः । बुध्ने ।
रजसः । अस्य । योनौ ॥ अपात् । अशीर्षा । गुहमानः ।
अन्ता । आ०योयुवानः । वृषभस्य । नीळे ॥११॥

प्र शर्द्ध ऽआर्त्त प्रथमं विपन्याँ ऽऋतस्य योना वृषभस्य नीळे ।
स्पार्हो युवा वपुष्यो विभावा सप्त प्रियासोऽजनयन्त वृष्णे ॥१२॥
प्र । शर्द्धः । आर्त्त । प्रथमम् । वि०पन्या । ऋतस्य ।
योना । वृषभस्य । नीळे ॥ स्पार्हः । युवा । वपुष्यः ।
विभा०वा । सप्त । प्रियासः । अजनयन्त । वृष्णे ॥१२॥

अस्माकमत्र पितरो मनुष्या ऽअभि प्र सेदुर्ऋतमाशुषाणाः ।
अश्मव्रजाः सुदुघा वव्रे ऽअन्तरुदुस्रा ऽआजन्नुषसो हुवानाः ॥१३॥

अस्माकम् । अत्र । पितरः । मनुष्याः । अभि । प्र । सेदुः ।
ऋतम् । आशुषाणाः ॥ अश्म०व्रजाः । सु०दुघाः । वव्रे ।
अन्तः । उत् । उस्राः । आजन् । उषसः । हुवानाः ॥१३॥

**ते मर्मृजत ददृवांसो ऽअद्रिं तदेषामन्ये ऽअभितो वि वोचन् ।**
**पश्वयन्त्रासो ऽअभि कारमर्चन्विदन्त ज्योतिश्चकृपन्त धीभिः ॥१४॥**
ते । मर्मृजत । ददृ०वांसः । अद्रिम् । तत् । एषाम् । अन्ये ।
अभितः । वि । वोचन् ॥ पश्व०यन्त्रासः । अभि । कारम् ।
अर्चन् । विदन्त । ज्योतिः । चकृपन्त । धीभिः ॥१४॥

**ते गव्यता मनसा दृध्रमुब्धं गा येमानं परि षन्तमद्रिम् ।**
**दृळ्हं नरो वचसा दैव्येन व्रजं गोमन्तमुशिजो वि वव्रुः ॥१५॥ (१४)**
ते । गव्यता । मनसा । दृध्रम् । उब्धम् । गाः । येमानम् ।
परि । सन्तम् । अद्रिम् ॥ दृळ्हम् । नरः । वचसा । दैव्येन ।
व्रजम् । गो०मन्तम् । उशिजः । वि । वव्रुरिति वव्रुः ॥१५॥

**ते मन्वत प्रथमं नाम धेनोस्त्रिः सप्त मातुः परमाणि विन्दन् ।**
**तज्जानतीरभ्यनूषत व्रा ऽआविर्भुवदरुणीर्यशसा गोः ॥१६॥**
ते । मन्वत । प्रथमम् । नाम । धेनोः । त्रिः । सप्त । मातुः ।
परमाणि । विन्दन् ॥ तत् । जानतीः । अभि । अनूषत । व्राः ।
आविः । भुवत् । अरुणीः । यशसा । गोः ॥१६॥

**नेशत्तमो दुधितं रोचत द्यौरुद्देव्या ऽउषसो भानुरर्त्त ।**
**आ सूर्यो बृहतस्तिष्ठदज्राँ ऽऋजु मर्त्तेषु वृजिना च पश्यन् ॥१७॥**
नेशत् । तमः । दुधितम् । रोचत । द्यौः । उत् । देव्याः ।
उषसः । भानुः । अर्त्त ॥ आ । सूर्यः । बृहतः । तिष्ठत् ।
अज्रान् । ऋजु । मर्त्तेषु । वृजिना । च । पश्यन् ॥१७॥

**आदित्पश्चा बुबुधाना व्यख्यन्नादिद्रत्नं धारयन्त द्युभक्तम् ।**
**विश्वे विश्वासु दुर्यासु देवा मित्र धिये वरुण सत्यमस्तु ॥१८॥**
आत् । इत् । पश्चा । बुबुधानाः । वि । अख्यन् । आत् । इत् ।
रत्नम् । धारयन्त । द्यु०भक्तम् ॥ विश्वे । विश्वासु । दुर्यासु ।
देवाः । मित्र । धिये । वरुण । सत्यम् । अस्तु ॥१८॥

**अच्छा वोचेय शुशुचानमग्निं होतारं विश्वभरसं यजिष्ठम् ।**
**शुच्यूधो ऽअतृणन्न गवामन्धो न पूतं परिषिक्तमंशोः ॥१९॥**
अच्छ । वोचेय । शुशुचानम् । अग्निम् । होतारम् ।
विश्व०भरसम् । यजिष्ठम् ॥ शुचि । ऊधः । अतृणत् । न ।
गवाम् । अन्धः । न । पूतम् । परि०सिक्तम् । अंशोः ॥१९॥
**विश्वेषामदितिर्यज्ञियानां विश्वेषामतिथिर्मानुषाणाम् ।**
**अग्निर्देवानामव ऽआवृणानः सुमृळीको भवतु जातवेदाः ॥२०॥ ( १५ ) [ ५५५ ]**
विश्वेषाम् । अदितिः । यज्ञियानाम् । विश्वेषाम् ।
अतिथिः । मानुषाणाम् ॥ अग्निः । देवानाम् । अवः ।
आ०वृणानः । सु०मृळीकः । भवतु । जात०वेदाः ॥२०॥

# ( २ )

२० वामदेवो गौतमः । अग्निः । त्रिष्टुप् ।

**यो मर्त्येष्वमृत ऽऋतावा देवो देवेष्वरतिर्निधायि ।**
**होता यजिष्ठो मह्ना शुचध्यै हव्यैरग्निर्मनुष ऽईरयध्यै ॥१॥**
यः । मर्त्येषु । अमृतः । ऋत०वा । देवः । देवेषु ।
अरतिः । नि०धायि ॥ होता । यजिष्ठः । मह्ना ।
शुचध्यै । हव्यैः । अग्निः । मनुषः । ईरयध्यै ॥१॥

इह त्वं सूनो सहसो नो ऽअद्य जातो जाताँ ऽउभयाँ ऽअन्तरग्ने ।
दूत ऽईयसे युयुजान ऽऋष्व ऽऋजुमुष्कान्वृषणः शुक्राँश्च ॥२॥
इह । त्वम् । सूनो इति । सहसः । नः । अद्य । जातः ।
जातान् । उभयान् । अन्तः । अग्ने ॥ दूतः । ईयसे ।
युयुजानः । ऋष्व । ऋजु०मुष्कान् । वृषणः । शुक्रान् । च ॥२॥

अत्या वृधस्नू रोहिता घृतस्नू ऽऋतस्य मन्ये मनसा जविष्ठा ।
अन्तरीयसे ऽअरुषा युजानो युष्माँश्च देवान्विश ऽआ च मर्त्तान् ॥३॥
अत्या । वृधस्नू इति वृध०स्नू । रोहिता । घृतस्नू इति घृत०स्नू ।
ऋतस्य । मन्ये । मनसा । जविष्ठा ॥ अन्तः । ईयसे । अरुषा ।
युजानः । युष्मान् । च । देवान् । विशः । आ । च । मर्त्तान् ॥३॥

अर्यमणं वरुणं मित्रमेषामिन्द्राविष्णू मरुतो ऽअश्विनोत ।
स्वश्वो ऽअग्ने सुरथः सुराधा ऽएदु वह सुहविषे जनाय ॥४॥
अर्यमणम् । वरुणम् । मित्रम् । एषाम् । इन्द्राविष्णू इति ।
मरुतः । अश्विना । उत ॥ सु०अश्वः । अग्ने । सु०रथः ।
सु०राधाः । आ । इत् । ऊँ इति । वह । सु०हविषे । जनाय ॥४॥

गोमाँ ऽअग्नेऽविमाँ ऽअश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः ।
इळावाँ ऽएषो ऽअसुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावान् ॥५॥ ( १६ )
गो०मान् । अग्ने । अवि०मान् । अश्वी । यज्ञः । नृवत्०सखा ।
सदम् । इत् । अप्र०मृष्यः ॥ इळा०वान् । एषः । असुर ।
प्रजा०वान् । दीर्घः । रयिः । पृथु०बुध्नः । सभा०वान् ॥५॥

यस्त ऽइध्मं जभरत्सिष्विदानो मूर्द्धानं वा ततपते त्वाया ।
भुवस्तस्य स्वतवाँः पायुरग्ने विश्वस्मात्सीमघायत ऽउरुष्य ॥६॥

यः । ते । इध्मम् । जभरत् । सिष्विदानः । मूर्द्धानम् । वा ।
ततपते । त्वा०या ॥ भुवः । तस्य । स्व०तवान् । पायुः ।
अग्ने । विश्वस्मात् । सीम् । अघ०यतः । उरुष्य ॥६॥

**यस्ते भरादन्नियते चिदन्नं निशिषन्मन्द्रमतिथिमुदीरत् ।**
**आ देवयुरिनधते दुरोणे तस्मिन्रयिर्ध्रुवो ऽअस्तु दास्वान् ॥७॥**
यः । ते । भरात् । अन्नि०यते । चित् । अन्नम् । नि०शिषत् ।
मन्द्रम् । अतिथिम् । उत्०ईरत् ॥ आ । देव०युः । इनधते ।
दुरोणे । तस्मिन् । रयिः । ध्रुवः । अस्तु । दास्वान् ॥७॥

**यस्त्वा दोषा य ऽउषसि प्रशंसात्प्रियं वा त्वा कृणवते हविष्मान् ।**
**अश्वो न स्वे दम ऽआ हेम्यावान्तमंहसः पीपरो दाश्वांसम् ॥८॥**
यः । त्वा । दोषा । यः । उषसि । प्र०शंसात् । प्रियम् । वा ।
त्वा । कृणवते । हविष्मान् ॥ अश्वः । न । स्वे । दमे । आ ।
हेम्या०वान् । तम् । अंहसः । पीपरः । दाश्वांसम् ॥८॥

**यस्तुभ्यमग्ने ऽअमृताय दाशद्दुवस्त्वे कृणवते यतस्रुक् ।**
**न स राया शशमानो वि योषन्नैनमंहः परि वरदघायोः ॥९॥**
यः । तुभ्यम् । अग्ने । अमृताय । दाशत् । दुवः । त्वे इति ।
कृणवते । यत०स्रुक् ॥ न । सः । राया । शशमानः । वि ।
योषत् । न । एनम् । अंहः । परि । वरत् । अघ०योः ॥९॥

**यस्य त्वमग्ने ऽअध्वरं जुजोषो देवो मर्त्तस्य सुधितं रराणः ।**
**प्रीतेदसद्धोत्रा सा यविष्ठासाम यस्य विधतो वृधासः ॥१०॥ (१७)**
यस्य । त्वम् । अग्ने । अध्वरम् । जुजोषः । देवः । मर्त्तस्य ।
सु०धितम् । रराणः ॥ प्रीता । इत् । असत् । होत्रा । सा ।
यविष्ठ । असाम । यस्य । विधतः । वृधासः ॥१०॥

**चित्तिमचित्तिं चिनवद्वि विद्वान्पृष्ठेव वीता वृजिना च मर्त्तान् ।**
**राये च नः स्वपत्याय देव दितिं च रास्वादितिमुरुष्य ॥११॥**
चित्तिम् । अचित्तिम् । चिनवत् । वि । विद्वान् । पृष्ठाऽइव । वीता ।
वृजिना । च । मर्त्तान् ॥ राये । च । नः । सु०अपत्याय ।
देव । दितिम् । च । रास्व । अदितिम् । उरुष्य ॥११॥

**कविं शशासुः कवयोऽदब्धा निधारयन्तो दुर्यास्वायोः ।**
**अतस्त्वं दृश्याँ ऽअग्न ऽएतान्पड्भिः पश्येरद्भुताँ ऽअर्य ऽएवैः ॥१२॥**
कविम् । शशासुः । कवयः । अदब्धाः । नि०धारयन्तः ।
दुर्यासु । आयोः ॥ अतः । त्वम् । दृश्यान् । अग्ने ।
एतान् । पट्०भिः । पश्येः । अद्भुतान् । अर्यः । एवैः ॥१२॥

**त्वमग्ने वाघते सुप्रणीतिः सुतसोमाय विधते यविष्ठ ।**
**रत्नं भर शशमानाय घृष्वे पृथु श्चन्द्रमवसे चर्षणिप्राः ॥१३॥**
त्वम् । अग्ने । वाघते । सु०प्रनीतिः । सुत०सोमाय ।
विधते । यविष्ठ ॥ रत्नम् । भर । शशमानाय ।
घृष्वे । पृथु । चन्द्रम् । अवसे । चर्षणि०प्राः ॥१३॥

**अधा ह यद्वयमग्ने त्वाया पड्भिर्हस्तेभिश्चकृमा तनूभिः ।**
**रथं न क्रन्तो ऽअपसा भुरिजोर्ऋतं येमुः सुध्य ऽआशुषाणाः ॥१४॥**
अध । ह । यत् । वयम् । अग्ने । त्वा०या । पट्०भिः ।
हस्तेभिः । चकृम । तनूभिः ॥ रथम् । न । क्रन्तः । अपसा ।
भुरिजोः । ऋतम् । येमुः । सु०ध्यः । आशुषाणाः ॥१४॥

**अधा मातुरुषसः सप्त विप्रा जायेमहि प्रथमा वेधसो नॄन् ।**
**दिवस्पुत्रा ऽअङ्गिरसो भवेमाद्रिं रुजेम धनिनं शुचन्तः ॥१५॥ (१८)**

अध॑ । मा॒तुः । उ॒षसः॑ । स॒प्त । विप्राः॑ । जायेमहि ।
प्र॒थ॒माः । वे॒धसः॑ । नॄन् ॥ दि॒वः । पु॒त्राः । अङ्गि॑रसः ।
भ॒वे॒म । अद्रि॑म् । रु॒जे॒म । ध॒निन॑म् । शु॒चन्तः॑ ॥१५॥

**अधा॒ यथा॑ नः पि॒तरः॒ परा॑सः प्र॒त्नासो॑ ऽअग्न ऽऋ॒तमा॑शुषा॒णाः ।**
**शुचीद॑य॒न्दीधि॑तिमुक्थ॒शासः॒ क्षामा॑ भि॒न्दन्तो॑ ऽअरु॒णीरप॑ व्रन् ॥१६॥**
अध॑ । यथा॑ । न॒ः । पि॒तरः॑ । परा॑सः । प्र॒त्नासः॑ । अ॒ग्ने॒ ।
ऋ॒तम् । आ॒शु॒षा॒णाः ॥ शुचि॑ । इत् । अ॒य॒न् । दीधि॑तिम् ।
उ॒क्थ॒ऽशासः । क्षामा॑ । भि॒न्दन्तः॑ । अ॒रु॒णीः । अप॑ । व्र॒न् ॥१६॥

**सु॒कर्मा॑णः सु॒रुचो॑ देव॒यन्तोऽयो॒ न दे॒वा जनि॑मा॒ धम॑न्तः ।**
**शु॒चन्तो॑ ऽअ॒ग्निं व॑वृ॒धन्त॒ ऽइन्द्र॑मू॒र्वं गव्यं॑ परि॒षद॑न्तो ऽअग्मन् ॥१७॥**
सु॒ऽकर्मा॑णः । सु॒ऽरुचः॑ । दे॒व॒ऽयन्तः॑ । अयः॑ । न । दे॒वाः ।
जनि॑म । धम॑न्तः ॥ शु॒चन्तः॑ । अ॒ग्निम् । व॒वृ॒धन्तः॑ ।
इन्द्र॑म् । ऊ॒र्वम् । गव्य॑म् । प॒रि॒ऽसद॑न्तः । अ॒ग्म॒न् ॥१७॥

**आ यू॒थेव॑ क्षु॒मति॑ प॒श्वो ऽअ॑ख्यद्दे॒वानां॒ यज्जनि॒मान्त्यु॑ग्र ।**
**मर्ता॑नां चिदु॒र्वशी॑रकृप्रन्वृ॒धे चि॑द॒र्य ऽउप॑रस्या॒योः ॥१८॥**
आ । यू॒थाऽइ॑व । क्षु॒ऽमति॑ । प॒श्वः । अ॒ख्य॒त् । दे॒वाना॑म् ।
यत् । ज॒नि॒म । अन्ति॑ । उ॒ग्र ॥ मर्ता॑नाम् । चि॒त् । उ॒र्वशीः॑ ।
अ॒कृ॒प्र॒न् । वृ॒धे । चि॒त् । अ॒र्यः । उप॑रस्य । आ॒योः ॥१८॥

**अक॑र्म ते॒ स्वप॑सो ऽअभूम ऽऋ॒तम॑वस्रन्नु॒षसो॑ विभा॒तीः ।**
**अनू॑नम॒ग्निं पु॑रु॒धा सु॑श्च॒न्द्रं दे॒वस्य॒ मर्मृ॑जत॒श्चारु॒ चक्षुः॑ ॥१९॥**
अक॑र्म । ते॒ । सु॒ऽअप॑सः । अ॒भू॒म । ऋ॒तम् । अ॒व॒स्र॒न् ।
उ॒षसः॑ । वि॒ऽभा॒तीः ॥ अनू॑नम् । अ॒ग्निम् । पु॒रु॒धा ।
सु॒ऽच॒न्द्रम् । दे॒वस्य॑ । मर्मृ॑जतः । चारु॑ । चक्षुः॑ ॥१९॥

**एता तैं ऽअग्न ऽउचथानि वेधोऽवोचाम कवये ता जुषस्व ।**
**उच्छोचस्व कृणुहि वस्यसो नो महो रायः पुरुवार प्र यन्धि ॥२०॥ ( १९ ) [ ५७५ ]**

एता । ते । अग्ने । उचथानि । वेधः । अवोचाम । कवये ।
ता । जुषस्व ॥ उत् । शोचस्व । कृणुहि । वस्यसः ।
नः । महः । रायः । पुरु०वार । प्र । यन्धि ॥२०॥

## ( ३ )

१६ वामदेवो गौतमः । अग्निः, १ रुद्रः । त्रिष्टुप् ।

**आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः ।**
**अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥१॥**

आ । वः । राजानम् । अध्वरस्य । रुद्रम् । होतारम् ।
सत्य०यजम् । रोदस्योः ॥ अग्निम् । पुरा । तनयित्नोः ।
अचित्तात् । हिरण्य०रूपम् । अवसे । कृणुध्वम् ॥१॥

**अयं योनिश्चकृमा यं वयं तैं जायेव पत्यं ऽउशती सुवासाः ।**
**अर्वाचीनः परिवीतो नि षीदेमा ऽउ ते स्वपाक प्रतीचीः ॥२॥**

अयम् । योनिः । चकृम । यम् । वयम् । ते । जायाऽइव ।
पत्ये । उशती । सु०वासाः ॥ अर्वाचीनः । परि०वीतः । नि ।
सीद । इमाः । ऊँ इति । ते । सु०अपाक । प्रतीचीः ॥२॥

**आशृण्वते ऽअदृपिताय मन्म नृचक्षसे सुमृळीकाय वेधः ।**
**देवाय शस्तिममृताय शंस ग्रावेव सोता मधुषुद्यमीळे ॥३॥**

आ०शृण्वते । अदृपिताय । मन्म । नृ०चक्षसे ।
सु०मृळीकाय । वेधः ॥ देवाय । शस्तिम् । अमृताय ।
शंस । ग्रावाऽइव । सोता । मधु०सुत् । यम् । ईळे ॥३॥

त्वं चिन्नः शम्या ऽअग्ने ऽअस्या ऽऋतस्य बोध्यृतचित्स्वाधीः ।
कदा त ऽउक्था सधमाद्यानि कदा भवन्ति सख्या गृहे ते ॥४॥
त्वम् । चित् । नः । शम्यै । अग्ने । अस्याः । ऋतस्य ।
बोधि । ऋत०चित् । सु०आधीः ॥ कदा । ते । उक्था ।
सध०माद्यानि । कदा । भवन्ति । सख्या । गृहे । ते ॥४॥

कथा ह तद्वरुणाय त्वमग्ने कथा दिवे गर्हसे कन्न ऽआगः ।
कथा मित्राय मीळ्हुषे पृथिव्यै ब्रवः कदर्यम्णे कद्भगाय ॥५॥ (२०)
कथा । ह । तत् । वरुणाय । त्वम् । अग्ने । कथा । दिवे ।
गर्हसे । कत् । नः । आगः ॥ कथा । मित्राय । मीळ्हुषे ।
पृथिव्यै । ब्रवः । कत् । अर्यम्णे । कत् । भगाय ॥५॥
कद्धिष्ण्यासु वृधसानो ऽअग्ने कद्वाताय प्रतवसे शुभंये ।
परिज्मने नासत्याय क्षे ब्रवः कदग्ने रुद्राय नृघ्ने ॥६॥
कत् । धिष्ण्यासु । वृधसानः । अग्ने । कत् । वाताय ।
प्र०तवसे । शुभम्०ये ॥ परि०ज्मने । नासत्याय ।
क्षे । ब्रवः । कत् । अग्ने । रुद्राय । नृ०घ्ने ॥६॥

कथा महे पुष्टिम्भराय पूष्णे कद्रुद्राय सुमखाय हविर्दे ।
कद्विष्णव ऽउरुगायाय रेतो ब्रवः कदग्ने शरवे बृहत्यै ॥७॥
कथा । महे । पुष्टिम्०भराय । पूष्णे । कत् । रुद्राय ।
सु०मखाय । हविः०दे ॥ कत् । विष्णवे । उरु०गायाय ।
रेतः । ब्रवः । कत् । अग्ने । शरवे । बृहत्यै ॥७॥

कथा शर्धाय मरुतामृताय कथा सूरे बृहते पृच्छ्यमानः ।
प्रति ब्रवोऽदितये तुराय साधा दिवो जातवेदश्चिकित्वान् ॥८॥

कथा । शर्द्धाय । मरुताम् । ऋताय । कथा । सूरे ।
बृहते । पृच्छ्यमानः ॥ प्रति । ब्रवः । अदितये ।
तुराय । साध । दिवः । जात०वेदः । चिकित्वान् ॥८॥

**ऋतेन ऽऋतं नियतमीळ ऽआ गोरामा सचा मधुमत्पक्वमग्ने ।**
**कृष्णा सती रुशता धासिनैषा जामर्येण पयसा पीपाय ॥९॥**
ऋतेन । ऋतम् । नि०यतम् । ईळे । आ । गोः । आमा ।
सचा । मधु०मत् । पक्वम् । अग्ने ॥ कृष्णा । सती । रुशता ।
धासिना । एषा । जामर्येण । पयसा । पीप्याय ॥९॥

**ऋतेन हि ष्मा वृषभश्चिदक्तः पुमाँ ऽअग्निः पयसा पृष्ठ्येन ।**
**अस्पन्दमानो ऽअचरद्वयोधा वृषा शुक्रं दुदुहे पृश्निरूधः ॥१०॥ ( २१ )**
ऋतेनः । हि । स्म । वृषभः । चित् । अक्तः । पुमान् ।
अग्निः । पयसा । पृष्ठ्येन ॥ अस्पन्दमानः । अचरत् ।
वयः२धाः । वृषा । शुक्रम् । दुदुहे । पृश्निः । ऊधः ॥१०॥

**ऋतेनाद्रिं व्यसन्भिदन्तः समङ्गिरसो नवन्त गोभिः ।**
**शुनं नरः परि षदन्नुषासमाविः स्वरभवज्जाते ऽअग्नौ ॥११॥**
ऋतेन । अद्रिम् । वि । असन् । भिदन्तः । सम् । अङ्गिरसः ।
नवन्त । गो०भिः ॥ शुनम् । नरः । परि । सदन् । उषसम् ।
आविः । स्वः । अभवत् । जाते । अग्नौ ॥११॥

**ऋतेन देवीरमृता ऽअमृक्ता ऽअर्णोभिरापो मधुमद्भिरग्ने ।**
**वाजी न सर्गेषु प्रस्तुभानः प्र सदमित्स्रवितवे दधन्युः ॥१२॥**
ऋतेन । देवीः । अमृताः । अमृक्ताः । अर्णः२भिः । आपः ।
मधुमत्०भिः । अग्ने ॥ वाजी । न । सर्गेषु । प्र०स्तुभानः ।
प्र । सदम् । इत् । स्रवितवे । दधन्युः ॥१२॥

मा कस्य॑ य॒क्षं सद॒मिद्धु॒रो गा॒ मा वे॒शस्य॑ प्रमिन॒तो मापेः ।
मा भ्रातु॒रग्ने॒ ऽअनृ॑जोर्ऋ॒णं वे॒र्मा सख्यु॒र्दक्षं॑ रि॒पोर्भु॑जेम ॥१३॥
मा । कस्य॑ । य॒क्षम् । सद॑म् । इत् । हु॒रः । गाः॒ । मा । वे॒शस्य॑ ।
प्र॒ऽमि॒न॒तः । मा । आ॒पेः ॥ मा । भ्रातुः॑ । अ॒ग्ने॒ । अनृ॑जोः ।
ऋ॒णम् । वेः॒ । मा । सख्युः॑ । दक्ष॑म् । रि॒पोः । भु॒जे॒म ॥१३॥

रक्षा॑ णो ऽअग्ने॒ तव॒ रक्ष॑णेभी रारक्षा॒णः सु॑मख प्रीणा॒नः ।
प्रति॑ ष्फु॒र वि रु॒ज वी॒ड्वंहो॑ ज॒हि रक्षो॒ महि॑ चिद्वावृधा॒नम् ॥१४॥
रक्ष॑ । नः॒ । अ॒ग्ने॒ । तव॑ । रक्ष॑णेभिः । र॒र॒क्षा॒णः ।
सु॒ऽम॒ख॒ । प्री॒णा॒नः ॥ प्रति॑ । स्फु॒र॒ । वि । रु॒ज॒ । वी॒ळु ।
अंहः॑ । ज॒हि । रक्षः॑ । महि॑ । चि॒त् । व॒वृ॒धा॒नम् ॥१४॥

ए॒भिर्भ॑व सु॒मना॑ ऽअग्ने ऽअ॒र्कैरि॒मान्त्स्पृ॒श मन्म॑भिः शू॒र वाजा॑न् ।
उ॒त ब्रह्मा॑ण्यङ्गिरो जुषस्व॒ सं तें श॒स्तिर्दे॒ववा॑ता जरेत ॥१५॥
ए॒भिः । भ॒व॒ । सु॒ऽमनाः॑ । अ॒ग्ने॒ । अ॒र्कैः । इ॒मान् । स्पृ॒श॒ ।
मन्म॑ऽभिः । शू॒र॒ । वाजा॑न् ॥ उ॒त । ब्रह्मा॑णि । अ॒ङ्गि॒रः॒ ।
जु॒ष॒स्व॒ । सम् । ते॒ । श॒स्तिः । दे॒ववा॑ता । ज॒रे॒त॒ ॥१५॥

ए॒ता विश्वा॑ वि॒दु॒षे तुभ्यं॑ वेधो नी॒थान्य॑ग्ने नि॒ण्या वचां॑सि ।
नि॒वच॑ना क॒वये॒ काव्या॒न्यशं॑सिषं म॒ति॒भि॒र्विप्र॑ ऽउक्थैः ॥१६॥ ( २२ ) [ ५९१ ]
ए॒ता । विश्वा॑ । वि॒दुषे॑ । तुभ्य॑म् । वे॒ध॒ः । नी॒थानि॑ ।
अ॒ग्ने॒ । नि॒ण्या । वचां॑सि ॥ नि॒ऽवच॑ना । क॒वये॑ ।
काव्या॑नि । अशं॑सिषम् । म॒ति॒ऽभिः॑ । विप्रः॑ । उ॒क्थैः ॥१६॥

## ( ४ )

१५ वामदेवो गौतमः । रक्षोहाऽग्निः । त्रिष्टुप् ।

**कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ ऽइभेन ।**
**तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥१॥**

कृणुष्व । पाजः । प्र०सितिम् । न । पृथ्वीम् । याहि । राजाऽइव ।
अम०वान् । इभेन ॥ तृष्वीम् । अनु । प्र०सितिम् । द्रूणानः ।
अस्ता । असि । विध्य । रक्षसः । तपिष्ठैः ॥१॥

**तव भ्रमास ऽआशुया पतन्त्यनु स्पृश धृषता शोशुचानः ।**
**तपूँष्यग्ने जुह्वा पतङ्गानसंदितो वि सृज विष्वगुल्काः ॥२॥**

तव । भ्रमासः । आशु०या । पतन्ति । अनु । स्पृश ।
धृषता । शोशुचानः ॥ तपूँषि । अग्ने । जुह्वा । पतङ्गान् ।
असम्०दितः । वि । सृज । विष्वक् । उल्काः ॥२॥

**प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो ऽअस्या ऽअदब्धः ।**
**यो नो दूरे ऽअघशंसो यो ऽअन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत् ॥३॥**

प्रति । स्पशः । वि । सृज । तूर्णि०तमः । भव । पायुः ।
विशः । अस्याः । अदब्धः ॥ यः । नः । दूरे । अघ०शंसः ।
यः । अन्ति । अग्ने । माकिः । ते । व्यथिः । आ । दधर्षीत् ॥३॥

**उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राँ ऽओषतात्तिग्महेते ।**
**यो नो ऽअरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥४॥**

उत् । अग्ने । तिष्ठ । प्रति । आ । तनुष्व । नि । अमित्रान् ।
ओषतात् । तिग्म०हेते ॥ यः । नः । अरातिम् । सम्०इधान ।
चक्रे । नीचा । तम् । धक्षि । अतसम् । न । शुष्कम् ॥४॥

**ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।**

**अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥५॥ (२३)**

ऊर्ध्वः । भव । प्रति । विध्य । अधि । अस्मत् । आविः ।

कृणुष्व । दैव्यानि । अग्ने ॥ अव । स्थिरा । तनुहि ।

यातु०जूनाम् । जामिम् । अजामिम् । प्र । मृणीहि । शत्रून् ॥५॥

**स ते जानाति सुमतिं यविष्ठ य ऽईवते ब्रह्मणे गातुमैरत् ।**

**विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो ऽअभि द्यौत् ॥६॥**

सः । ते । जानाति । सु०मतिम् । यविष्ठ । यः । ईवते ।

ब्रह्मणे । गातुम् । ऐरत् ॥ विश्वानि । अस्मै । सु०दिनानि ।

रायः । द्युम्नानि । अर्यः । वि । दुरः । अभि । द्यौत् ॥६॥

**सेदग्ने ऽअस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य ऽउक्थैः ।**

**पिप्रीषति स्व ऽआयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥७॥**

सः । इत् । अग्ने । अस्तु । सु०भगः । सु०दानुः । यः । त्वा ।

नित्येन । हविषा । यः । उक्थैः ॥ पिप्रीषति । स्वे । आयुषि ।

दुरोणे । विश्वा । इत् । अस्मै । सु०दिना । सा । असत् । इष्टिः ॥७॥

**अर्चामि ते सुमतिं घोष्यर्वाक्सं ते वावाता जरतामियं गीः ।**

**स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥८॥**

अर्चामि । ते । सु०मतिम् । घोषि । अर्वाक् । सम् । ते ।

ववाता । जरताम् । इयम् । गीः ॥ सु०अश्वाः । त्वा । सु०रथाः ।

मर्जयेम । अस्मे इति । क्षत्राणि । धारयेः । अनु । द्यून् ॥८॥

**इह त्वा भूर्या चरेदुप त्मन्दोषावस्तर्दीदिवांसमनु द्यून् ।**

**क्रीळन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवांसो जनानाम् ॥९॥**

इह । त्वा । भूरि । आ । चरेत् । उप । त्मन् । दोषा०वस्तः ।
दीदिवांसम् । अनु । द्यून् ॥ क्रीळन्तः । त्वा । सु०मनसः ।
सपेम । अभि । द्युम्ना । तस्थिवांसः । जनानाम् ॥९॥

**यस्त्वा स्वश्वः सुहिरण्यो ऽअग्न ऽउपयाति वसुमता रथेन ।**
**तस्य त्राता भवसि तस्य सखा यस्त ऽआतिथ्यमानुषग्जुजोषत् ॥१०॥ (२४)**
यः । त्वा । सु०अश्वः । सु०हिरण्यः । अग्ने । उप०याति ।
वसु०मता । रथेन ॥ तस्य । त्राता । भवसि । तस्य ।
सखा । यः । ते । आतिथ्यम् । आनुषक् । जुजोषत् ॥१०॥
**महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय ।**
**त्वं नो ऽअस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥११॥**
महः । रुजामि । बन्धुता । वचःऽभिः । तत् । मा । पितुः ।
गोतमात् । अनु । इयाय ॥ त्वम् । नः । अस्य । वचसः ।
चिकिद्धि । होतः । यविष्ठ । सुक्रतो इति सु०क्रतो । दमूनाः ॥११॥

**अस्वप्नजस्तरणयः सुशेवा ऽअतन्द्रासोऽवृका ऽअश्रमिष्ठाः ।**
**ते पायवः सध्र्यञ्चो निषद्याग्ने तव नः पान्त्वमूर ॥१२॥**
अस्वप्न०जः । तरणयः । सु०शेवाः । अतन्द्रासः ।
अवृकाः । अश्रमिष्ठाः ॥ ते । पायवः । सध्र्यञ्चः ।
नि०सद्य । अग्ने । तव । नः । पान्तु । अमूर ॥१२॥

**ये पायवो मामतेयं ते ऽअग्ने पश्यन्तो ऽअन्धं दुरितादरक्षन् ।**
**ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त ऽइद्रिपवो नाह देभुः ॥१३॥**
ये । पायवः । मामतेयम् । ते । अग्ने । पश्यन्तः । अन्धम् ।
दुःऽइतात् । अरक्षन् ॥ ररक्ष । तान् । सु०कृतः । विश्व०वेदाः ।
दिप्सन्तः । इत् । रिपवः । न । अह । देभुः ॥१३॥

**त्वया वयं सधन्य!स्त्वोतास्तव प्रणीत्यश्याम वाजान् ।**
**उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥१४॥**

त्वया । वयम् । स०धन्यः । त्वा०ऊताः । तव ।
प्र०नीती । अश्याम । वाजान् ॥ उभा । शंसा ।
सूदय । सत्य०ताते । अनुष्ठुया । कृणुहि । अह्रयाण ॥१४॥

**अया ते ऽअग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय ।**
**दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो ऽअवद्यात् ॥१५॥ ( २५ ) [ ६०६ ]**

अया । ते । अग्ने । सम्०इधा । विधेम । प्रति । स्तोमम् ।
शस्यमानम् । गृभाय ॥ दह । अशसः । रक्षसः । पाहि ।
अस्मान् । द्रुहः । निदः । मित्र०महः । अवद्यात् ॥१५॥

॥ इति तृतीयाष्टके चतुर्थोऽध्यायः ॥ ४ ॥

# चतुर्थाध्यायस्य मन्त्रवर्गानुक्रमणी



॥ इति शाङ्खायनसंहितायां तृतीयाष्टके चतुर्थोऽध्यायः ॥
( चतुर्थाध्याये वर्गाः २५, सूक्तानि ११, ऋचः १३५ )

# ॥ तृतीयाष्टके पञ्चमोऽध्यायः॥

**अथ पञ्चमोऽध्यायः॥५॥ वर्गाः १-२६ ]  [ चतुर्थमण्डले सूक्तानि ५-१८ ]**

## ( ५ )

१५ नामदेवो गौतमः । वैश्वानरोऽग्निः । त्रिष्टुप् ।

**वैश्वानराय मीळ्हुषे सजोषाः कथा दाशेमाग्नये बृहद्भाः ।**
**अनूनेन बृहता वक्षथेनोप स्तभायदुपमिन्न रोधः ॥१॥**

वैश्वानराय । मीळ्हुषे । सऽजोषाः । कथा । दाशेम ।
अग्नये । बृहत् । भाः ॥ अनूनेन । बृहता । वक्षथेन ।
उप । स्तभायत् । उपऽमित् । न । रोधः ॥१॥

**मा निन्दत य इमां मह्यं रातिं देवो ददौ मर्त्याय स्वधावान् ।**
**पाकाय गृत्सो अमृतो विचेता वैश्वानरो नृतमो यह्वो अग्निः ॥२॥**

मा । निन्दत । यः । इमाम् । मह्यम् । रातिम् । देवः ।
ददौ । मर्त्याय । स्वधाऽवान् ॥ पाकाय । गृत्सः । अमृतः ।
विऽचेताः । वैश्वानरः । नृऽतमः । यह्वः । अग्निः ॥२॥

**साम द्विबर्हा महि तिग्मभृष्टिः सहस्ररेता वृषभस्तुविष्मान् ।**
**पदं न गोरपगूळ्हं विविद्वानग्निर्मह्यं प्रेदु वोचन्मनीषाम् ॥३॥**

साम । द्विऽबर्हाः । महि । तिग्मऽभृष्टिः । सहस्रऽरेताः । वृषभः ।
तुविष्मान् ॥ पदम् । न । गोः । अपऽगूळ्हम् । विविद्वान् ।
अग्निः । मह्यम् । प्र । इत् । ऊँ इति । वोचत् । मनीषाम् ॥३॥

**प्र ताँ अग्निर्बभसत्तिग्मजम्भस्तपिष्ठेन शोचिषा यः सुराधाः ।**
**प्र ये मिनन्ति वरुणस्य धाम प्रिया मित्रस्य चेततो ध्रुवाणि ॥४॥**

प्र । तान् । अग्निः । बभसत् । तिग्मऽजम्भः । तपिष्ठेन ।
शोचिषा । यः । सुऽराधाः ॥ प्र । ये । मिनन्ति । वरुणस्य ।
धाम । प्रिया । मित्रस्य । चेततः । ध्रुवाणि ॥४॥

**अभ्रातरो न योषणो व्यन्तः पतिरिपो न जनयो दुरेवाः ।**

**पापासः सन्तो ऽअनृता ऽअसत्या ऽइदं पदमजनता गभीरम् ॥५॥ ( १ )**

अभ्रातरः । न । योषणः । व्यन्तः । पति०रिपः । न ।

जनयः । दुः२एवाः ॥ पापासः । सन्तः । अनृताः ।

असत्याः । इदम् । पदम् । अजनत । गभीरम् ॥५॥

**इदं मे ऽअग्ने कियते पावकामिनते गुरुं भारं न मन्म ।**

**बृहद्दधाथ धृषता गभीरं यह्वं पृष्ठं प्रयसा सप्तधातु ॥६॥**

इदम् । मे । अग्ने । कियते । पावक । अमिनते ।

गुरुम् । भारम् । न । मन्म ॥ बृहत् । दधाथ । धृषता ।

गभीरम् । यह्वम् । पृष्ठम् । प्रयसा । सप्त०धातु ॥६॥

**तमिन्न्वे३व समना समानमभि क्रत्वा पुनती धीतिरश्याः ।**

**ससस्य चर्मन्नधि चारु पृश्नेरग्रे रुप ऽआरुपितं जबारु ॥७॥**

तम् । इत् । नु । एव । समना । समानम् । अभि । क्रत्वा ।

पुनती । धीतिः । अश्याः ॥ ससस्य । चर्मन् । अधि ।

चारु । पृश्नेः । अग्रे । रुपः । अरुपितम् । जबारु ॥७॥

**प्रवाच्यं वचसः किं मे ऽअस्य गुहा हितमुप निणिग्वदन्ति ।**

**यदुस्रियाणामप वारिव व्रन्पाति प्रियं रुपो ऽअग्रं पदं वेः ॥८॥**

प्र०वाच्यम् । वचसः । किम् । मे । अस्य । गुहा । हितम् ।

उप । निणिक् । वदन्ति ॥ यत् । उस्रियाणाम् । अप । वाः२इव ।

व्रन् । पाति । प्रियम् । रुपः । अग्रम् । पदम् । वेः ॥८॥

**इदमु त्यन्महि महामनीकं यदुस्रिया सचत पूर्व्यं गौः ।**

**ऋतस्य पदे ऽअधि दीद्यानं गुहा रघुष्यद्रघुयद्विवेद ॥९॥**

इदम् । ऊँ इति । त्यत् । महि । महाम् । अनीकम् । यत् ।
उस्रियां । सचंत । पूर्व्यम् । गौः ॥ ऋतस्य । पदे । अधि ।
दीद्यानम् । गुहा । रघु॰स्यत् । रघु॰यत् । विवेद ॥९॥

**अध द्युतानः पित्रोः सचासामनुत गुह्यं चारु पृश्नेः ।**
**मातुष्पदे परमे ऽअन्ति षद्गोर्वृष्णः शोचिषः प्रयतस्य जिह्वा ॥१०॥ (२)**
अध । द्युतानः । पित्रोः । सचा । आसा । अमनुत । गुह्यम् ।
चारु । पृश्नेः ॥ मातुः । पदे । परमे । अन्ति । सत् ।
गोः । वृष्णः । शोचिषः । प्र॰यतस्य । जिह्वा ॥१०॥

**ऋतं वोचे नमसा पृच्छ्यमानस्तवाशसा जातवेदो यदीदम् ।**
**त्वमस्य क्षयसि यद्ध विश्वं दिवि यदु द्रविणं यत्पृथिव्याम् ॥११॥**
ऋतम् । वोचे । नमसा । पृच्छ्यमानः । तव । आ॰शसा ।
जात॰वेदः । यदि । इदम् ॥ त्वम् । अस्य । क्षयसि । यत् । ह ।
विश्वम् । दिवि । यत् । ऊँ इति । द्रविणम् । यत् । पृथिव्याम् ॥११॥

**किं नो ऽअस्य द्रविणं कद्ध रत्नं वि नो वोचो जातवेदश्चिकित्वान् ।**
**गुहाध्वनः परमं यन्नो ऽअस्य रेकु पदं न निदाना ऽअगन्म ॥१२॥**
किम् । नः । अस्य । द्रविणम् । कत् । ह । रत्नम् । वि । नः ।
वोचः । जात॰वेदः । चिकित्वान् ॥ गुहा । अध्वनः । परमम् । यत् ।
नः । अस्य । रेकु । पदम् । न । नि॰दानाः । अगन्म ॥१२॥

**का मर्यादा वयुना कद्ध वाममच्छा गमेम रघवो न वाजम् ।**
**कदा नो देवीरमृतस्य पत्नीः सूरो वर्णेन ततनन्नुषासः ॥१३॥**
का । मर्यादा । वयुना । कत् । ह । वामम् । अच्छ ।
गमेम । रघवः । न । वाजम् ॥ कदा । नः । देवीः ।
अमृतस्य । पत्नीः । सूरः । वर्णेन । ततनन् । उषसः ॥१३॥

अनिरेण वचसा फल्ग्वेन प्रतीत्येन कृधुनातृपासः ।
अधा ते ऽअग्ने किमिहा वदन्त्यनायुधास ऽआसता सचन्ताम् ॥१४॥
अनिरेण । वचसा । फल्ग्वेन । प्रतीत्येन । कृधुना ।
अतृपासः ॥ अध । ते । अग्ने । किम् । इह ।
वदन्ति । अनायुधासः । आसता । सचन्ताम् ॥१४॥

अस्य श्रिये समिधानस्य वृष्णो वसोरनीकं दम ऽआ रुरोच ।
रुशद्वसानः सुदृशीकरूपः क्षितिर्न राया पुरुवारो ऽअद्यौत् ॥१५॥ ( ३ ) [ ६२१ ]
अस्य । श्रिये । सम्०इधानस्य । वृष्णः । वसोः । अनीकम् ।
दमे । आ । रुरोच ॥ रुशत् । वसानः । सुदृशीक०रूपः ।
क्षितिः । न । राया । पुरु०वारः । अद्यौत् ॥१५॥

## ( ६ )

११ वामदेवो गौतमः । अग्निः । त्रिष्टुप् ।

ऊर्ध्व ऽऊ षु णो ऽअध्वरस्य होतरग्ने तिष्ठ देवताता यजीयान् ॥
त्वं हि विश्वमभ्यसि मन्म प्र वेधसश्चित्तिरसि मनीषाम् ॥१॥
ऊर्ध्वः । ऊँ इति । सु । नः । अध्वरस्य । होतः । अग्ने । तिष्ठ ।
देव०ताता । यजीयान् ॥ त्वम् । हि । विश्वम् । अभि । असि ।
मन्म । प्र । वेधसः । चित् । तिरसि । मनीषाम् ॥१॥

अमूरो होता न्यसादि विक्ष्वग्निर्मन्द्रो विदथेषु प्रचेताः ।
ऊर्ध्वं भानुं सवितेवाश्रेन्मेतेव धूमं स्तभायदुप द्याम् ॥२॥
अमूरः । होता । नि । असादि । विक्षु । अग्निः । मन्द्रः ।
विदथेषु । प्र०चेताः ॥ ऊर्ध्वम् । भानुम् । सविताऽइव ।
अश्रेत् । मेताऽइव । धूमम् । स्तभायत् । उप । द्याम् ॥२॥

यता सुजूर्णी रातिनी घृताची प्रदक्षिणिद्देवतातिमुराणः ।
उदु स्वरुर्नवजा नाक्रः पश्वो ऽअनक्ति सुधितः सुमेकः ॥३॥
यता । सु०जूर्णिः । रातिनी । घृताची । प्र०दक्षिणित् ।
देव०तातिम् । उराणः ॥ उत् । ऊँ इति । स्वरुः । नव०जाः ।
न । अक्रः । पश्वः । अनक्ति । सु०धितः । सु०मेकः ॥३॥

स्तीर्णे बर्हिषि समिधाने ऽअग्ना ऽऊर्ध्वो ऽअध्वर्युर्जुजुषाणो ऽअस्थात् ।
पर्यग्निः पशुपा न होता त्रिविष्टयेति प्रदिव ऽउराणः ॥४॥
स्तीर्णे । बर्हिषि । सम्०इधाने । अग्नौ । ऊर्ध्वः । अध्वर्युः ।
जुजुषाणः । अस्थात् ॥ परि । अग्निः । पशु०पाः । न ।
होता । त्रि०विष्टि । एति । प्र०दिवः । उराणः ॥४॥

परि त्मना मितद्रुरेति होताग्निर्मन्द्रो मधुवचा ऽऋतावा ।
द्रवन्त्यस्य वाजिनो न शोका भयन्ते विश्वा भुवना यदभ्राट् ॥५॥ (४)
परि । त्मना । मित०द्रुः । एति । होता । अग्निः । मन्द्रः ।
मधु०वचाः । ऋत०वा ॥ द्रवन्ति । अस्य । वाजिनः । न ।
शोकाः । भयन्ते । विश्वा । भुवना । यत् । अभ्राट् ॥५॥

भद्रा ते ऽअग्ने स्वनीक संदृग्घोरस्य सतो विषुणस्य चारुः ।
न यत्ते शोचिस्तमसा वरन्त न ध्वस्मानस्तन्वी इ रेप ऽआ धुः ॥६॥
भद्रा । ते । अग्ने । सु०अनीक । सम्०दृक् । घोरस्य । सतः ।
विषुणस्य । चारुः ॥ न । यत् । ते । शोचिः । तमसा ।
वरन्त । न । ध्वस्मानः । तन्वि । रेपः । आ । धुरिति ॥६॥

न यस्य सातुर्जनितोरवारि न मातरापितरा नू चिदिष्टौ ।
अधा मित्रो न सुधितः पावको इऽग्निर्दीदाय मानुषीषु विक्षु ॥७॥

न । यस्य॑ । सातु॑ः । जनि॑तोः । अवा॑रि । न । मातरा॑पितरा॑ ।
नु । चित् । इष्टौ ॥ अध॑ । मित्रः । न । सु०धि॑तः ।
पावकः । अग्निः । दीदाय । मानु॑षीषु । विक्षु ॥७॥

द्विर्यं पञ्च जीज॑नन्त्संवसा॑नाः स्वसा॑रो ऽअग्निं मानु॑षीषु विक्षु ।
उषर्बुध॑मथर्यो॑ ३ न दन्तँ॑ शुक्रं स्वासँ॑ परशुं न तिग्मम् ॥८॥
द्विः । यम् । पञ्च॑ । जीज॑नन् । सम्०वसा॑नाः । स्वसा॑रः ।
अग्निम् । मानु॑षीषु । विक्षु ॥ उषः२बुध॑म् । अथर्यँ॑ः । न ।
दन्त॑म् । शुक्रम् । सु०आस॑म् । परशुम् । न । तिग्मम् ॥८॥

तव त्ये ऽअग्ने हरितो॑ घृतस्ना रोहि॑तास ऽऋज्वञ्चः स्वञ्च॑ः ।
अरुषासो वृष॑ण ऽऋजुमुष्का ऽआ देवता॑तिमह्वन्त दस्माः ॥९॥
तव॑ । त्ये । अग्ने । हरि॑तः । घृत०स्नाः । रोहि॑तासः ।
ऋजु०अञ्च॑ः । सु०अञ्च॑ः ॥ अरुषास॑ः । वृष॑णः ।
ऋजु०मुष्काः । आ । देव०ता॑तिम् । अह्वन्त । दस्माः ॥९॥

ये ह त्ये ते सह॑माना ऽअयास॑स्त्वेषासो॑ ऽअग्ने ऽअर्चयश्चर॑न्ति ।
श्येनासो न दु॑वसनासो ऽअर्थँ॑ तुविष्वणसो मारु॑तं न शर्द्धँ॑ः ॥१०॥
ये । ह । त्ये । ते । सह॑मानाः । अयास॑ः । त्वेषास॑ः ।
अग्ने । अर्चय॑ः । चर॑न्ति ॥ श्येनास॑ः । न । दुवसनास॑ः ।
अर्थँ॑म् । तुवि०स्वनस॑ः । मारु॑तम् । न । शर्द्धँ॑ः ॥१०॥

अका॑रि ब्रह्म॑ समिधान तुभ्यं॑ शंसा॑त्युक्थं यज॑ते व्यू॑ धाः ।
होता॑रमग्निं मनु॑षो नि षे॑दुर्नमस्यन्त ऽउशिजः शंस॑मायोः ॥११॥ ( ५ ) [ ६३२ ]
अका॑रि । ब्रह्म॑ । सम्०इधान । तुभ्य॑म् । शंसा॑ति । उक्थम् ।
यज॑ते । वि । ऊँ इति॑ । धाः ॥ होता॑रम् । अग्निम् । मनु॑षः ।
नि । सेदुः । नमस्यन्त॑ः । उशिज॑ः । शंस॑म् । आयोः ॥११॥

# ( ७ )

**११ वामदेवो गौतमः । अग्निः । त्रिष्टुप्, १ जगती, २-६ अनुष्टुप् ।**

**अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो ऽअध्वरेष्वीड्यः ।**
**यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥१॥**
अयम् । इह । प्रथमः । धायि । धातृऽभिः । होता । यजिष्ठः ।
अध्वरेषु । ईड्यः ॥ यम् । अप्नवानः । भृगवः । विऽरुरुचुः ।
वनेषु । चित्रम् । विऽभ्वम् । विशेऽविशे ॥१॥

**अग्ने कदा त ऽआनुषग्भुवद्देवस्य चेतनम् ।**
**अधा हि त्वा जगृभ्रिरे मर्त्तासो विक्ष्वीड्यम् ॥२॥**
अग्ने । कदा । ते । आनुषक् । भुवत् । देवस्य । चेतनम् ॥
अध । हि । त्वा । जगृभ्रिरे । मर्त्तासः । विक्षु ईड्यम् ॥२॥

**ऋतावानं विचेतसं पश्यन्तो द्यामिव स्तृभिः ।**
**विश्वेषामध्वराणां हस्कर्तारं दमेदमे ॥३॥**
ऋतऽवानम् । विऽचेतसम् । पश्यन्तः । द्याम्ऽइव । स्तृऽभिः ॥
विश्वेषाम् । अध्वराणाम् । हस्कर्तारम् । दमेऽदमे ॥३॥

**आशुं दूतं विवस्वतो विश्वा यश्चर्षणीरभि ।**
**आ जभ्रुः केतुमायवो भृगवाणं विशेविशे ॥४॥**
आशुम् । दूतम् । विवस्वतः । विश्वाः । यः । चर्षणीः । अभि ॥
आ । जभ्रुः । केतुम् । आयवः । भृगवाणम् । विशेऽविशे ॥४॥

**तमीं होतारमानुषक्चिकित्वांसं नि षेदिरे ।**
**रण्वं पावकशोचिषं यजिष्ठं सप्त धामभिः ॥५॥ ( ६ )**

तम् । ईम् । होतारम् । आनुषक् । चिकित्वांसम् । नि । सेदिरे ॥
रण्वम् । पावकऽशोचिषम् । यजिष्ठम् । सप्त । धामऽभिः ॥५॥

तं शश्वतीषु मातृषु वन ऽआ वीतमश्रितम् ।
चित्रं सन्तं गुहा हितं सुवेदं कूचिदर्थिनम् ॥६॥
तम् । शश्वतीषु । मातृषु । वने । आ । वीतम् । अश्रितम् ॥
चित्रम् । सन्तम् । गुहा । हितम् । सुऽवेदम् । कूचित्ऽअर्थिनम् ॥६॥

ससस्य यद्वियुता सस्मिन्नूधन्नृतस्य धामन्रणयन्त देवाः ।
महाँ ऽअग्निर्नमसा रातहव्यो वेरध्वराय सदमिदृतावा ॥७॥
ससस्य । यत् । विऽयुता । सस्मिन् । ऊधन् । ऋतस्य ।
धामन् । रणयन्त । देवाः ॥ महान् । अग्निः । नमसा ।
रातऽहव्यः । वेः । अध्वराय । सदम् । इत् । ऋतऽवा ॥७॥

वेरध्वरस्य दूत्यानि विद्वानुभे ऽअन्ता रोदसी संचिकित्वान् ।
दूत ऽईयसे प्रदिव ऽउराणो विदुष्टरो दिव ऽआरोधनानि ॥८॥
वेः । अध्वरस्य । दूत्यानि । विद्वान् । उभे इति । अन्तरिति ।
रोदसी इति । सम्ऽचिकित्वान् ॥ दूतः । ईयसे । प्रऽदिवः ।
उराणः । विदुःऽतरः । दिवः । आऽरोधनानि ॥८॥

कृष्णं त ऽएम रुशतः पुरो भाश्चरिष्ण्वर्चिर्वपुषामिदेकम् ।
यदप्रवीता दधते ह गर्भं सद्यश्चिज्जातो भवसीदु दूतः ॥९॥
कृष्णम् । ते । एम । रुशतः । पुरः । भाः । चरिष्णु । अर्चिः ।
वपुषाम् । इत् । एकम् ॥ यत् । अप्रऽवीता । दधते । ह । गर्भम् ।
सद्यः । चित् । जातः । भवसि । इत् । ऊँ इति । दूतः ॥९॥

**स॒द्यो जा॒तस्य॑ ददृ॒शान॒मोजो॒ यद॑स्य॒ वातो॑ ऽअनु॒वाति॑ शो॒चिः ।**

**वृ॒णक्ति॑ ति॒ग्माम॑त॒सेषु॑ जि॒ह्वां स्थि॒रा चि॒दन्ना॑ दयते॒ वि जम्भैः॑ ॥१०॥**

स॒द्यः । जा॒तस्य॑ । द॒दृ॒शान॑म् । ओजः॑ । यत् । अ॒स्य॒ । वातः॑ ।
अ॒नु॒ऽवाति॑ । शो॒चिः ॥ वृ॒णक्ति॑ । ति॒ग्माम् । अ॒त॒सेषु॑ । जि॒ह्वाम् ।
स्थि॒रा । चि॒त् । अन्ना॑ । द॒य॒ते॒ । वि । जम्भैः॑ ॥१०॥

**तृ॒षु यदन्ना॑ तृ॒षुणा॑ व॒वक्ष॑ तृ॒षुं दू॒तं कृ॑णुते य॒ह्वो ऽअ॒ग्निः ।**

**वात॑स्य मे॒ळिं स॑चते नि॒जूर्व॑न्ना॒शुं न वा॑जयते हि॒न्वे ऽअर्वा॑ ॥११॥ (७) [६४३]**

तृ॒षु । यत् । अन्ना॑ । तृ॒षुणा॑ । व॒वक्ष॑ । तृ॒षुम् । दू॒तम् । कृ॒णु॒ते॒ ।
य॒ह्वः । अ॒ग्निः ॥ वात॑स्य । मे॒ळिम् । स॒च॒ते॒ । नि॒ऽजूर्व॑न् ।
आ॒शुम् । न । वा॒ज॒य॒ते॒ । हि॒न्वे । अर्वा॑ ॥११॥

# ( ८ )

८ वामदेवो गौतमः । अग्निः । गायत्री ।

**दू॒तं वो॑ वि॒श्ववे॑दसं हव्य॒वा॒हमम॑र्त्त्यम् ।**

**यजि॑ष्ठमृञ्जसे गि॒रा ॥१॥**

दू॒तम् । वः॒ । वि॒श्वऽवे॑दसम् । ह॒व्य॒ऽवा॒ह॑म् । अम॑र्त्त्यम् ॥
यजि॑ष्ठम् । ऋ॒ञ्ज॒से॒ । गि॒रा ॥१॥

**स हि वेदा॒ वसु॑धितिं म॒हाँ ऽआ॒रोध॑नं दि॒वः ।**

**स दे॒वाँ ऽएह व॑क्षति ॥२॥**

सः । हि । वेद॑ । वसु॑ऽधितिम् । म॒हान् । आ॒ऽरोध॑नम् । दि॒वः ॥
सः । दे॒वान् । आ । इ॒ह । व॒क्ष॒ति॒ ॥२॥

**स वे॑द दे॒व ऽआ॒नमं॑ दे॒वाँ ऽऋ॑ताय॒ते दमे॑ ।**

**दाति॑ प्रि॒याणि॑ चि॒द्वसु॑ ॥३॥**

सः । वेद । देवः । आ॰नमम् । देवान् । ऋत॰यते । दमे ॥
दाति । प्रियाणि । चित् । वसु ॥३॥

**स होता सेदु दूत्यं चिकित्वाँ ऽअन्तरीयते ।**
**विद्वाँ ऽआरोधनं दिवः ॥४॥**
सः । होता । सः । इत् । ऊँ इति ।
दूत्यम् । चिकित्वान् । अन्तः । ईयते ॥
विद्वान् । आ॰रोधनम् । दिवः ॥४॥

**ते स्याम ये ऽअग्नये ददाशुर्हव्यदातिभिः ।**
**य ऽईं पुष्यन्त ऽइन्धते ॥५॥**
ते । स्याम । ये । अग्नये । ददाशुः । हव्यदाति॰भिः ॥
ये । ईम् । पुष्यन्तः । इन्धते ॥५॥

**ते राया ते सुवीर्यैः ससवांसो वि शृण्विरे ।**
**ये ऽअग्ना दधिरे दुवः ॥६॥**
ते । राया । ते । सु॰वीर्यैः । सस॰वांसः । वि । शृण्विरे ॥
ये । अग्ना । दधिरे । दुवः ॥६॥

**अस्मे रायो दिवेदिवे सं चरन्तु पुरुस्पृहः ।**
**अस्मे वाजास ऽईरताम् ॥७॥**
अस्मे इति । रायः । दिवे॰दिवे । सम् । चरन्तु । पुरु॰स्पृहः ॥
अस्मे इति । वाजासः । ईरताम् ॥७॥

**स विप्रश्चर्षणीनां शवसा मानुषाणाम् ।**
**अति क्षिप्रेव विध्यति ॥८॥ (८)** [ ६५१ ]

सः । विप्रः । चर्षणीनाम् । शवसा । मानुषाणाम् ॥
अति । क्षिप्राऽइव । विध्यति ॥८॥

# ( ९ )

**८ वामदेवो गौतमः । अग्निः । गायत्री ।**

**अग्ने मृळ महाँ ऽअसि य ऽईमा देवयुं जनम् ।**
**इयेथ बर्हिरासदम् ॥१॥**
अग्ने । मृळ । महान् । असि । यः । ईम् । आ ।
देव०युम् । जनम् ॥ इयेथ । बर्हिः । आ०सदम् ॥१॥

**स मानुषीषु दूळभो विक्षु प्रावीरमर्त्त्यः ।**
**दूतो विश्वेषां भुवत् ॥२॥**
सः । मानुषीषु । दुः२दभः । विक्षु । प्र०अवीः । अमर्त्त्यः ॥
दूतः । विश्वेषाम् । भुवत् ॥२॥

**स सद्म परि णीयते होता मन्द्रो दिविष्टिषु ।**
**उत पोता नि षीदति ॥३॥**
सः । सद्म । परि । नीयते । होता । मन्द्रः । दिविष्टिषु ॥
उत । पोता । नि । सीदति ॥३॥

**उत ग्ना ऽअग्निरध्वर ऽउतो गृहपतिर्दमे ।**
**उत ब्रह्मा नि षीदति ॥४॥**
उत । ग्नाः । अग्निः । अध्वरे । उतो इति । गृह०पतिः । दमे ॥
उत । ब्रह्मा । नि । सीदति ॥४॥

**वेषि ह्यध्वरीयतामुपवक्ता जनानाम् ।**

**हव्या च मानुषाणाम् ॥५॥**

वेषि । हि । अध्वरि॰यताम् । उप॰वक्ता । जनानाम् ॥

हव्या । च । मानुषाणाम् ॥५॥

**वेषीद्वस्य दूत्यं१ यस्य जुजोषो ऽअध्वरम् ।**

**हव्यं मर्त्तस्य वोळ्हवे ॥६॥**

वेषि । इत् । ऊँ इति । अस्य । दूत्यम् । यस्य ।

जुजोषः । अध्वरम् ॥ हव्यम् । मर्त्तस्य । वोळ्हवे ॥६॥

**अस्माकं जोष्यध्वरमस्माकं यज्ञमङ्गिरः ।**

**अस्माकं शृणुधी हवम् ॥७॥**

अस्माकम् । जोषि । अध्वरम् । अस्माकम् । यज्ञम् ।

अङ्गिरः ॥ अस्माकम् । शृणुधि । हवम् ॥७॥

**परि ते दूळभो रथोऽस्माँ ऽअश्नोतु विश्वतः ।**

**येन रक्षसि दाशुषः ॥८॥ (९)**　　**[ ६५९ ]**

परि । ते । दुः॰दभः । रथः । अस्मान् । अश्नोतु ।

विश्वतः ॥ येन । रक्षसि । दाशुषः ॥८॥

## ( १० )

८ वामदेवो गौतमः। अग्निः। पदपङ्क्तिः, ४, ६, ७ उष्णिग्वा, ५ महापदपङ्क्तिः, ८ उष्णिक् ।

**अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् ।**

**ऋध्यामा त ऽओहैः ॥१॥**

अग्ने । तम् । अद्य । अश्वम् । न । स्तोमैः । क्रतुम् । न ।

भद्रम् । हृदि॰स्पृशम् ॥ ऋध्याम । ते । ओहैः ॥१॥

अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।
रथीर्ऋतस्य बृहतो बभूथ ॥२॥
अध । हि । अग्ने । क्रतोः । भद्रस्य । दक्षस्य । साधोः ॥
रथीः । ऋतस्य । बृहतः । बभूथ ॥२॥

एभिर्नो ऽअर्कैर्भवा नो ऽअर्वाङ्स्वर्ण ज्योतिः ।
अग्ने विश्वेभिः सुमना ऽअनीकैः ॥३॥
एभिः । नः । अर्कैः । भव । नः । अर्वाङ् । स्वः । ण । ज्योतिः ॥
अग्ने । विश्वेभिः । सु०मनाः । अनीकैः ॥३॥

आभिष्टे ऽअद्य गीर्भिर्गृणन्तोऽग्ने दाशेम ।
प्र ते दिवो न स्तनयन्ति शुष्माः ॥४॥
आभिः । ते । अद्य । गीः२भिः । गृणन्तः । अग्ने । दाशेम ॥
प्र । ते । दिवः । न । स्तनयन्ति । शुष्माः ॥४॥

तव स्वादिष्ठाग्ने संदृष्टिरिदा चिदह्न ऽइदा चिदक्तोः ।
श्रिये रुक्मो न रोचत ऽउपाके ॥५॥
तव । स्वादिष्ठा । अग्ने । सम्०दृष्टिः । इदा । चित् । अह्नः । इदा । चित् । अक्तोः ॥
श्रिये । रुक्मः । न । रोचते । उपाके ॥५॥

घृतं न पूतं तनूररेपाः शुचि हिरण्यम् ।
तत्ते रुक्मो न रोचत स्वधावः ॥६॥
घृतम् । न । पूतम् । तनूः । अरेपाः । शुचि । हिरण्यम् ॥
तत् । ते । रुक्मः । न । रोचत । स्वधा०वः ॥६॥

कृतं चिद्धि ष्मा सनेमि द्वेषोऽग्ने ऽइनोषि मर्त्तात् ।
इत्था यजमानादृतावः ॥७॥
कृतम् । चित् । हि । स्म । सनेमि । द्वेषः । अग्ने । इनोषि ।
मर्त्तात् ॥ इत्था । यजमानात् । ऋत०वः ॥७॥

शिवा नः सख्या सन्तु भ्रात्राग्ने देवेषु युष्मे ।
सा नो नाभिः सदने सस्मिन्नूधन् ॥८॥ (१०) [ ६६७ ]
शिवा । नः । सख्या । सन्तु । भ्रात्रा । अग्ने । देवेषु । युष्मे इति ॥
सा । नः । नाभिः । सदने । सस्मिन् । ऊधम् ॥८॥

## ( ११ ) [ अथ द्वितीयोऽनुवाकः ॥२॥ सू. ११-२१

६ वामदेवो गौतमः । अग्निः । त्रिष्टुप् ।

भद्रं ते ऽअग्ने सहसिन्ननीकमुपाक ऽआ रोचते सूर्यस्य ।
रुशद्दृशे ददृशे नक्तया चिदरूक्षितं दृश ऽआ रूपे ऽअन्नम् ॥१॥
भद्रम् । ते । अग्ने । सहसिन् । अनीकम् । उपाके ।
आ । रोचते । सूर्यस्य ॥ रुशत् । दृशे । ददृशे । नक्त०या ।
चित् । अरूक्षितम् । दृशे । आ । रूपे । अन्नम् ॥१॥

वि षाह्यग्ने गृणते मनीषां खं वेपसा तुविजात स्तवानः ।
विश्वेभिर्यद्वावनः शुक्र देवैस्तन्नो रास्व सुमहो भूरि मन्म ॥२॥
वि । साहि । अग्ने । गृणते । मनीषाम् । खम् । वेपसा ।
तुवि०जात । स्तवानः ॥ विश्वेभिः । यत् । ववनः । शुक्र ।
देवैः । तत् । नः । रास्व । सु०महः । भूरि । मन्म ॥२॥

त्वदग्ने काव्या त्वन्मनीषास्त्वदुक्था जायन्ते राध्यानि ।
त्वदेति द्रविणं वीरपेशा ऽइत्थाधिये दाशुषे मर्त्याय ॥३॥

त्वत् । अग्ने । काव्या । त्वम् । मनीषाः । त्वत् ।
उक्था । जायन्ते । राध्यानि ॥ त्वत् । एति । द्रविणम् ।
वीर०पेशाः । इत्था०धिये । दाशुषे । मर्त्याय ॥३॥

**त्वद्वाजी वाजंभरो विहाया ऽअभिष्टिकृज्जायते सत्यशुष्मः ।**
**त्वद्रयिर्देवजूतो मयोभुस्त्वदाशुर्जूजुवाँ ऽअग्ने ऽअर्वा ॥४॥**
त्वत् । वाजी । वाजम्०भरः । वि०हायाः । अभिष्टि०कृत् ।
जायते । सत्य०शुष्मः ॥ त्वत् । रयिः । देव०जूतः ।
मयः२भुः । त्वत् । आशुः । जूजु०वान् । अग्ने । अर्वा ॥४॥

**त्वामग्ने प्रथमं देवयन्तो देवं मर्त्ता ऽअमृत मन्द्रजिह्वम् ।**
**द्वेषोयुतमा विवासन्ति धीभिर्दमूनसं गृहपतिममूरम् ॥५॥**
त्वाम् । अग्ने । प्रथमम् । देव०यन्तः । देवम् । मर्त्ताः ।
अमृत । मन्द्र०जिह्वम् ॥ द्वेषः२युतम् । आ । विवासन्ति ।
धीभिः । दमूनसम् । गृह०पतिम् । अमूरम् ॥५॥

**आरे ऽअस्मदमतिमारे ऽअंह ऽआरे विश्वां दुर्मतिं यन्निपासि ।**
**दोषा शिवः सहसः सूनो ऽअग्ने यं देव ऽआ चित्सचसे स्वस्ति ॥६॥ ( ११ ) [ ६७३ ]**
आरे । अस्मत् । अमतिम् । आरे । अंहः । आरे । विश्वाम् ।
दुः२मतिम् । यत् । नि०पासि ॥ दोषा । शिवः । सहसः ।
सूनो इति । अग्ने । यम् । देवः । आ । चित् । सचसे । स्वस्ति ॥६॥

# ( १२ )

**६ वामदेवो गौतमः । अग्निः । त्रिष्टुप्**

**यस्त्वामग्न ऽइनधते यतस्रुक्त्रिस्ते ऽअन्नं कृणवत्सस्मिन्नहन् ।**
**स सु द्युम्नैरभ्यस्तु प्रसक्षत्तव क्रत्वा जातवेदश्चिकित्वान् ॥१॥**

यः । त्वाम् । अग्ने । इनधते । यत०स्रुंक् । त्रिः । ते । अन्नम् ।
कृणवत् । सस्मिन् । अहन् ॥ सः । सु । द्युम्नैः । अभि । अस्तु ।
प्र०सक्षत् । तव । क्रत्वा । जात०वेदः । चिकित्वान् ॥१॥

**इध्मं यस्ते जभरच्छश्रमाणो महो ऽअग्ने ऽअनीकमा सपर्यन् ।**
**स ऽइधानः प्रति दोषामुषासं पुष्यन्रयिं सचते घ्नन्नमित्रान् ॥२॥**
इध्मम् । यः । ते । जभरत् । शश्रमाणः । महः । अग्ने ।
अनीकम् । आ । सपर्यन् ॥ सः । इधानः । प्रति । दोषाम् ।
उषसम् । पुष्यन् । रयिम् । सचते । घ्नन् । अमित्रान् ॥२॥

**अग्निरीशे बृहतः क्षत्रियस्याग्निर्वाजस्य परमस्य रायः ।**
**दधाति रत्नं विधते यविष्ठो व्यानुषङ्मर्त्याय स्वधावान् ॥३॥**
अग्निः । ईशे । बृहतः । क्षत्रियस्य । अग्निः । वाजस्य ।
परमस्य । रायः ॥ दधाति । रत्नम् । विधते । यविष्ठः ।
वि । आनुषक् । मर्त्याय । स्वधा०वान् ॥३॥

**यच्चिद्धि ते पुरुषत्रा यविष्ठाचित्तिभिश्चकृमा कच्चिदागः ।**
**कृधी ष्वस्माँ ऽअदितेरनागान्व्येनांसि शिश्रथो विष्वगग्ने ॥४॥**
यत् । चित् । हि । ते । पुरुष०त्रा । यविष्ठ । अचित्ति०भिः ।
चकृम । कत् । चित् । आगः ॥ कृधि । सु । अस्मान् । अदितेः ।
अनागान् । वि । एनांसि । शिश्रथः । विष्वक् । अग्ने ॥४॥

**महश्चिदग्न ऽएनसो ऽअभीकं ऽऊर्वाद्देवानामुत मर्त्यानाम् ।**
**मा ते सखायः सदमिद्रिषाम यच्छा तोकाय तनयाय शं योः ॥५॥**
महः । चित् । अग्ने । एनसः । अभीके । ऊर्वात् ।
देवानाम् । उत । मर्त्यानाम् ॥ मा । ते । सखायः । सदम् ।
इत् । रिषाम । यच्छ । तोकाय । तनयाय । शम् । योः ॥५॥

**यथा ह त्यद्वसवो गौर्यं चित्पदि षितामर्मुञ्चता यजत्राः ।**

**एवो ष्व१स्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतरं न ऽआयुः ॥६॥ ( १२ ) [ ६७९ ]**

यथा । ह । त्यत् । वसवः । गौर्यम् । चित् । पदि । सिताम् ।
अमुञ्चत । यजत्राः ॥ एवो इति । सु । अस्मत् । मुञ्चत । वि ।
अंहः । प्र । तारि । अग्ने । प्र०तरम् । नः । आयुः ॥६॥

# ( १३ )

**५ वामदेवो गौतमः । अग्निः ( लिङ्गोक्तदेवता इत्येके ) । त्रिष्टुप् ।**

**प्रत्यग्निरुषसामग्रमख्यद्विभातीनां सुमना रत्नधेयम् ।**

**यातमश्विना सुकृतो दुरोणमुत्सूर्यो ज्योतिषा देव ऽएति ॥१॥**

प्रति । अग्निः । उषसाम् । अग्रम् । अख्यत् । वि०भातीनाम् ।
सु०मनाः । रत्न०धेयम् ॥ यातम् । अश्विना । सु०कृतः ।
दुरोणम् । उत् । सूर्यः । ज्योतिषा । देवः । एति ॥१॥

**ऊर्ध्वं भानुं सविता देवो ऽअश्रेद्द्रप्सं दविध्वद्गविषो न सत्वा ।**

**अनु व्रतं वरुणो यन्ति मित्रो यत्सूर्यं दिव्यारोहयन्ति ॥२॥**

ऊर्ध्वम् । भानुम् । सविता । देवः । अश्रेत् । द्रप्सम् ।
दविध्वत् । गो०इषः । न । सत्वा ॥ अनु । व्रतम् । वरुणः ।
यन्ति । मित्रः । यत् । सूर्यम् । दिवि । आ०रोहयन्ति ॥२॥

**यं सीमकृण्वन्तमसे विपृचे ध्रुवक्षेमा ऽअनवस्यन्तो ऽअर्थम् ।**

**तं सूर्यं हरितः सप्त यह्वीः स्पशं विश्वस्य जगतो वहन्ति ॥३॥**

यम् । सीम् । अकृण्वन् । तमसे । वि०पृचे । ध्रुव०क्षेमाः ।
अनव०स्यन्तः । अर्थम् ॥ तम् । सूर्यम् । हरितः । सप्त ।
यह्वीः । स्पशम् । विश्वस्य । जगतः । वहन्ति ॥३॥

वर्हिष्ठेभिर्विहरन्यासि तन्तुमवव्ययन्नसितं देव वस्म ।
दविध्वतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो ऽअप्स्वऽन्तः ॥४॥
वर्हिष्ठेभिः । वि०हरन् । यासि । तन्तुम् । अव०व्ययन् ।
असितम् । देव । वस्म ॥ दविध्वतः । रश्मयः । सूर्यस्य ।
चर्मऽइव । अव । अधुः । तमः । अप्०सु । अन्तरिति ॥४॥

अनायतो ऽअनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न ।
कया याति स्वधया को ददर्श दिवः स्कम्भः समृतः पाति नाकम् ॥५॥ ( १३ ) [ ६८४ ]
अनायतः । अनि०बद्धः । कथा । अयम् । न्यङ् । उत्तानः ।
अव । पद्यते । न ॥ कया । याति । स्वधया । कः ।
ददर्श । दिवः । स्कम्भः । सम्०ऋतः । पाति । नाकम् ॥५॥

# ( १४ )

५ वामदेवो गौतमः । अग्निः ( लिङ्गोक्तदेवता इत्येके ) । त्रिष्टुप् ।

प्रत्यग्निरुषसो जातवेदा ऽअख्यद्देवो रोचमाना महोभिः ।
आ नासत्योरुगाया रथेनेमं यज्ञमुप नो यातमच्छ ॥१॥
प्रति । अग्निः । उषसः । जात०वेदाः । अख्यत् । देवः ।
रोचमानाः । महः२भिः ॥ आ । नासत्या । उरु०गाया ।
रथेन । इमम् । यज्ञम् । उप । नः । यातम् । अच्छ ॥१॥

ऊर्ध्वं केतुं सविता देवो ऽअश्रेज्ज्योतिर्विश्वस्मै भुवनाय कृण्वन् ।
आप्रा द्यावापृथिवी ऽअन्तरिक्षं वि सूर्यो रश्मिभिश्चेकितानः ॥२॥
ऊर्ध्वम् । केतुम् । सविता । देवः । अश्रेत् । ज्योतिः । विश्वस्मै ।
भुवनाय । कृण्वन् ॥ आ । अप्राः । द्यावापृथिवी इति ।
अन्तरिक्षम् । वि । सूर्यः । रश्मि०भिः । चेकितानः ॥२॥

**आवहन्त्यरुणीर्ज्योतिषागान्मही चित्रा रश्मिभिश्चेकिताना ।**
**प्रबोधयन्ती सुवितायं देव्युषा ऽईयते सुयुजा रथेन ॥३॥**
आ०वहन्ती । अरुणीः । ज्योतिषा । आ । अगात् ।
मही । चित्रा । रश्मि०भिः । चेकिताना ॥ प्र०बोधयन्ती ।
सु०वितायं । देवी । उषाः । ईयते । सु०युजा । रथेन ॥३॥

**आ वां वहिष्ठा ऽइह ते वहन्तु रथा ऽअश्वास ऽउषसो व्युष्टौ ।**
**इमे हि वां मधुपेयाय सोमा ऽअस्मिन्यज्ञे वृषणा मादयेथाम् ॥४॥**
आ । वाम् । वहिष्ठाः । इह । ते । वहन्तु । रथाः ।
अश्वासः । उषसः । वि०उष्टौ ॥ इमे । हि । वाम् ।
मधु०पेयाय । सोमाः । अस्मिन् । यज्ञे । वृषणा । मादयेथाम् ॥४॥

**अनायतो ऽअनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न ।**
**कया याति स्वधया को ददर्श दिवः स्कम्भः समृतः पाति नाकम् ॥५॥ ( १४ ) [ ६८९ ]**
अनायतः । अनि०बद्धः । कथा । अयम् । न्यङ् । उत्तानः ।
अव । पद्यते । न ॥ कया । याति । स्वधया । कः ।
ददर्श । दिवः । स्कम्भः । सम्०ऋतः । पाति । नाकम् ॥५॥

## ( १५ )

**१० वामदेवो गौतमः । अग्निः, ७-८ सोमकः साहदेव्यः, ९-१० अश्विनौ । गायत्री ।**

**अग्निर्होता नो ऽअध्वरे वाजी सन्परि णीयते ।**
**देवो देवेषु यज्ञियः ॥१॥**
अग्निः । होता । नः । अध्वरे । वाजी । सन् । परि । नीयते ॥
देवः । देवेषु । यज्ञियः ॥१॥

**परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव ।**

**आ देवेषु प्रयो दधत् ॥२॥**

परि । त्रि०विष्टि । अध्वरम् । याति । अग्निः । रथीःऽइव ॥

आ । देवेषु । प्रयः । दधत् ॥२॥

**परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।**

**दधद्रत्नानि दाशुषे ॥३॥**

परि । वाज०पतिः । कविः । अग्निः । हव्यानि । अक्रमीत् ॥

दधत् । रत्नानि । दाशुषे ॥३॥

**अयं यः सृञ्जये पुरो दैववाते समिध्यते ।**

**द्युमाँ ऽअमित्रदम्भनः ॥४॥**

अयम् । यः । सृञ्जये । पुरः । दैव०वाते । सम्०इध्यते ॥

द्यु०मान् । अमित्र०दम्भनः ॥४॥

**अस्य घा वीर ऽईवतोऽग्नेरीशीत मर्त्यः ।**

**तिग्मजम्भस्य मीळ्हुषः ॥५॥ ( १५ )**

अस्य । घ । वीरः । ईवतः । अग्नेः । ईशीत । मर्त्यः ॥

तिग्म०जम्भस्य । मीळ्हुषः ॥५॥

**तमर्वन्तं न सानसिमरुषं न दिवः शिशुम् ।**

**मर्मृज्यन्ते दिवेदिवे ॥६॥**

तम् । अर्वन्तम् । न । सानसिम् । अरुषम् । न । दिवः । शिशुम् ॥

मर्मृज्यन्ते । दिवे०दिवे ॥६॥

बोधद्यन्मा हरिभ्यां कुमारः साहदेव्यः ।
अच्छा न हूत ऽउदरम् ॥७॥
बोधत् । यत् । मा । हरि॰भ्याम् । कुमारः । साह॰देव्यः ॥
अच्छ । न । हूतः । उत् । अरम् ॥७॥

उत त्या यजता हरी कुमारात्साहदेव्यात् ।
प्रयता सद्य ऽआ ददे ॥८॥
उत । त्या । यजता । हरी इति । कुमारात् । साह॰देव्यात् ॥
प्र॰यता । सद्यः । आ । ददे ॥८॥

एष वां देवावश्विना कुमारः साहदेव्यः ।
दीर्घायुरस्तु सोमकः ॥९॥
एषः । वाम् । देवौ । अश्विना । कुमारः । साह॰देव्यः ॥
दीर्घ॰आयुः । अस्तु । सोमकः ॥९॥

तं युवं देवावश्विना कुमारं साहदेव्यम् ।
दीर्घायुषं कृणोतन ॥१०॥ (१६) [६९९]
तम् । युवम् । देवौ । अश्विना । कुमारम् । साह॰देव्यम् ॥
दीर्घ॰आयुषम् । कृणोतन ॥१०॥

## ( १६ )

२१ वामदेवो गौतमः । इन्द्रः । त्रिष्टुप् ।

आ सत्यो यातु मघवाँ ऽऋजीषी द्रवन्त्वस्य हरय ऽउप नः ।
तस्मा ऽइदन्धः सुषुमा सुदक्षमिहाभिपित्वं करते गृणानः ॥१॥
आ । सत्यः । यातु । मघ॰वान् । ऋजीषी । द्रवन्तु ।
अस्य । हरयः । उप । नः ॥ तस्मै । इत् । अन्धः ।
सुसुम । सु॰दक्षम् । इह । अभि॰पित्वम् । करते । गृणानः ॥१॥

**अवं स्य शूराध्वनो नान्तेऽस्मिन्नौ ऽअद्य सवने मन्दध्यै ।**
**शंसात्युक्थमुशनेव वेधाश्चिकितुषे ऽअसुर्याय मन्म ॥२॥**
अवं । स्य । शूर । अध्वनः । न । अन्ते । अस्मिन् ।
नः । अद्य । सवने । मन्दध्यै ॥ शंसाति । उक्थम् ।
उशनाऽइव । वेधाः । चिकितुषे । असुर्याय । मन्म ॥२॥

**कविर्न निण्यं विदथानि साधन्वृषा यत्सेकं विपिपानो ऽअर्चात् ।**
**दिव ऽइत्था जीजनत्सप्त कारूनह्ना चिच्चक्रुर्वयुना गृणन्तः ॥३॥**
कविः । न । निण्यम् । विदथानि । साधन् । वृषा । यत् ।
सेकम् । वि०पिपानः । अर्चात् ॥ दिवः । इत्था । जीजनत् ।
सप्त । कारून् । अह्ना । चित् । चक्रुः । वयुना । गृणन्तः ॥३॥

**स्वर्यद्वेदि सुदृशीकमर्कैर्महि ज्योती रुरुचुर्यद्ध वस्तोः ।**
**अन्धा तमांसि दुधिता विचक्षे नृभ्यश्चकार नृतमो ऽअभिष्टौ ॥४॥**
स्वः । यत् । वेदि । सु०दृशीकम् । अर्कैः । महि । ज्योतिः ।
रुरुचुः । यत् । ह । वस्तोः ॥ अन्धा । तमांसि । दुधिता ।
वि०चक्षे । नृ०भ्यः । चकार । नृ०तमः । अभिष्टौ ॥४॥

**ववक्ष ऽइन्द्रो ऽअमितमृजीष्युभे ऽआ पप्रौ रोदसी महित्वा ।**
**अतश्चिदस्य महिमा वि रेच्यभि यो विश्वा भुवना बभूव ॥५॥ ( १७ )**
ववक्षे । इन्द्रः । अमितम् । ऋजीषी । उभे इति । आ । पप्रौ ।
रोदसी इति । महि०त्वा ॥ अतः । चित् । अस्य । महिमा ।
वि । रेचि । अभि । यः । विश्वा । भुवना । बभूव ॥५॥

**विश्वानि शक्रो नर्याणि विद्वानपो रिरेच सखिभिर्निकामैः ।**
**अश्मानं चिद्ये बिभिदुर्वचोभिर्व्रजं गोमन्तमुशिजो वि वव्रुः ॥६॥**

विश्वानि । शक्रः । नर्याणि । विद्वान् । अपः । रिरेच ।
सखिऽभिः । निऽकामैः ॥ अश्मानम् । चित् । ये । बिभिदुः ।
वचःऽभिः । व्रजम् । गोऽमन्तम् । उशिजः । वि । वव्रुरिति वव्रुः ॥६॥

**अपो वृत्रं वव्रिवांसं पराहन्प्रावत्ते वज्रं पृथिवी सचेताः ।**
**प्रार्णांसि समुद्रियाण्यैनोः पतिर्भवञ्छवसा शूर धृष्णो ॥७॥**
अपः । वृत्रम् । वव्रिऽवांसम् । परा । अहन् । प्र । आवत् ।
ते । वज्रम् । पृथिवी । सऽचेताः ॥ प्र । अर्णांसि । समुद्रियाणि ।
ऐनोः । पतिः । भवन् । शवसा । शूर । धृष्णो इति ॥७॥

**अपो यदद्रिं पुरुहूत दर्दराविर्भुवत्सरमा पूर्व्यं ते ।**
**स नो नेता वाजमा दर्षि भूरिं गोत्रा रुजन्नङ्गिरोभिर्गृणानः ॥८॥**
अपः । यत् । अद्रिम् । पुरुऽहूत । दर्दः । आविः । भुवत् ।
सरमा । पूर्व्यम् । ते ॥ सः । नः । नेता । वाजम् । आ ।
दर्षि । भूरिम् । गोत्रा । रुजन् । अङ्गिरःऽभिः । गृणानः ॥८॥

**अच्छा कविं नृमणो गा ऽअभिष्टौ स्वर्षाता मघवन्नाधमानम् ।**
**ऊतिभिस्तमिषणो द्युम्नहूतौ नि मायावानब्रह्मा दस्युरर्त ॥९॥**
अच्छ । कविम् । नृऽमनः । गाः । अभिष्टौ । स्वःऽसाता ।
मघऽवन् । नाधमानम् ॥ ऊतिऽभिः । तम् । इषणः ।
द्युम्नऽहूतौ । नि । मायाऽवान् । अब्रह्मा । दस्युः । अर्त ॥९॥

**आ दस्युघ्ना मनसा याह्यस्तं भुवत्ते कुत्सः सख्ये निकामः ।**
**स्वे योनौ नि षदतं सरूपा वि वां चिकित्सदृतचिद्ध नारी ॥१०॥ ( १८ )**
आ । दस्युऽघ्ना । मनसा । याहि । अस्तम् । भुवत् । ते ।
कुत्सः । सख्ये । निऽकामः ॥ स्वे । योनौ । नि । सदतम् ।
सऽरूपा । वि । वाम् । चिकित्सत् । ऋतऽचित् । ह । नारी ॥१०॥

यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः ।
ऋज्रा वाजं न गध्यं युयूषन्कविर्यदहन्पार्याय भूषात् ॥११॥
यासि । कुत्सेन । स०रथम् । अवस्युः । तोदः । वातस्य ।
हर्योः । ईशानः ॥ ऋज्रा । वाजम् । न । गध्यम् । युयूषन् ।
कविः । यत् । अहन् । पार्याय । भूषात् ॥११॥

कुत्साय शुष्णमशुषं नि बर्हीः प्रपित्वे ऽअह्नः कुयवं सहस्रा ।
सद्यो दस्यून्प्र मृण कुत्स्येन प्र सूरश्चक्रं वृहतादभीके ॥१२॥
कुत्साय । शुष्णम् । अशुषम् । नि । बर्हीः । प्र०पित्वे ।
अह्नः । कुयवम् । सहस्रा ॥ सद्यः । दस्यून् । प्र । मृण ।
कुत्स्येन । प्र । सूरः । चक्रम् । वृहतात् । अभीके ॥१२॥

त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः ।
पञ्चाशत्कृष्णा नि वपः सहस्रात्कं न पुरो जरिमा वि दर्दः ॥१३॥
त्वम् । पिप्रुम् । मृगयम् । शूशु०वांसम् । ऋजिश्वने । वैदथिनाय ।
रन्धीः ॥ पञ्चाशत् । कृष्णा । नि । वपः । सहस्रा । अत्कम् ।
न । पुरः । जरिमा । वि । दर्दरिति दर्दः ॥१३॥

सूर ऽउपाके तन्वं१ दधानो वि यत्ते चेत्यमृतस्य वर्पः ।
मृगो न हस्ती तविषीमुषाणः सिंहो न भीम ऽआयुधानि बिभ्रत् ॥१४॥
सूरः । उपाके । तन्वम् । दधानः । वि । यत् । ते । चेति ।
अमृतस्य । वर्पः ॥ मृगः । न । हस्ती । तविषीम् । उषाणः ।
सिंहः । न । भीमः । आयुधानि । बिभ्रत् ॥१४॥

इन्द्रं कामा वसूयन्तो ऽअग्मन्त्स्वर्मीळ्हे न सवने चकानाः ।
श्रवस्यवः शशमानास ऽउक्थैरोको न रण्वा सुदृशीव पुष्टिः ॥१५॥ ( १९ )

इन्द्रम् । कामाः । वसु०यन्तः । अग्मन् । स्वः २मीळ्हे ।
न । सवने । चकानाः ॥ श्रवस्यवः । शशमानासः ।
उक्थैः । ओकः । न । रण्वा । सुदृशीऽइव । पुष्टिः ॥१५॥

**तमिद्व ऽइन्द्रं सुहवं हुवेम यस्ता चकार नर्या पुरूणि ।**
**यो मावते जरित्रे गध्यं चिन्मक्षू वाजं भरति स्पार्हराधाः ॥१६॥**
तम् । इत् । वः । इन्द्रम् । सु०हवम् । हुवेम । यः । ता ।
चकार । नर्या । पुरूणि ॥ यः । मा०वते । जरित्रे । गध्यम् ।
चित् । मक्षु । वाजम् । भरति । स्पार्ह०राधाः ॥१६॥

**तिग्मा यदन्तरशनिः पताति कस्मिञ्चिच्छूर मुहुके जनानाम् ।**
**घोरा यदर्य समृतिर्भवात्यध स्मा नस्तन्वो बोधि गोपाः ॥१७॥**
तिग्मा । यत् । अन्तः । अशनिः । पताति । कस्मिन् । चित् ।
शूर । मुहुके । जनानाम् ॥ घोरा । यत् । अर्य । सम्०ऋतिः ।
भवाति । अध । स्म । नः । तन्वः । बोधि । गोपाः ॥१७॥

**भुवोऽविता वामदेवस्य धीनां भुवः सखावृको वाजसातौ ।**
**त्वामनु प्रमतिमा जगन्मोरुशंसो जरित्रे विश्वध स्याः ॥१८॥**
भुवः । अविता । वाम०देवस्य । धीनाम् । भुवः । सखा ।
अवृकः । वाज०सातौ ॥ त्वाम् । अनु । प्र०मतिम् । आ ।
जगन्म । उरु०शंसः । जरित्रे । विश्वध । स्याः ॥१८॥

**एभिर्नृभिरिन्द्र त्वायुभिष्ट्वा मघवद्भिर्मघवन्विश्व ऽआजौ ।**
**द्यावो न द्युम्नैरभि सन्तो ऽअर्यः क्षपो मदेम शरदश्च पूर्वीः ॥१९॥**
एभिः । नृ०भिः । इन्द्र । त्वायु०भिः । त्वा । मघवत्०भिः ।
मघ०वन् । विश्वे । आजौ ॥ द्यावः । न । द्युम्नैः । अभि ।
सन्तः । अर्यः । क्षपः । मदेम । शरदः । च । पूर्वीः ॥१९॥

एवेदिन्द्राय वृषभाय वृष्णे ब्रह्माकर्म भृगवो न रथम् ।
नू चिद्यथा नः सख्या वियोषदसन्न ऽउग्रोऽविता तनूपाः ॥२०॥
एव । इत् । इन्द्राय । वृषभाय । वृष्णे । ब्रह्म । अकर्म ।
भृगवः । न । रथम् ॥ नु । चित् । यथा । नः । सख्या ।
वि॰योषत् । असत् । नः । उग्रः । अविता । तनू॰पाः ॥२०॥

नू ष्टुत ऽईन्द्र नू गृणान ऽइषं जरित्रे नद्यो ३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥२१॥ ( २० ) [ ७२० ]
नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः ।
न । पीपेरिति पीपेः ॥ अकारि । ते । हरि॰वः । ब्रह्म ।
नव्यम् । धिया । स्याम । रथ्यः । सदा॰साः ॥२१॥

# ( १७ )

२१ वामदेवो गौतमः । इन्द्रः । त्रिष्टुप्, १५ एकपदा विराट् ।

त्वं महाँ ऽईन्द्र तुभ्यं ह क्षा ऽअनु क्षत्रं मंहना मन्यत द्यौः ।
त्वं वृत्रं शवसा जघन्वान्त्सृजः सिन्धूँरहिना जग्रसानान् ॥१॥
त्वम् । महान् । इन्द्र । तुभ्यम् । ह । क्षाः । अनु ।
क्षत्रम् । मंहना । मन्यत । द्यौः ॥ त्वम् । वृत्रम् । शवसा ।
जघन्वान् । सृजः । सिन्धून् । अहिना । जग्रसानान् ॥१॥

तव त्विषो जनिमन्रेजत द्यौ रेजद्भूमिर्भियसा स्वस्य मन्योः ।
ऋघायन्त सुभ्वः पर्वतास ऽआर्दन्धन्वानि सरयन्त ऽआपः ॥२॥
तव । त्विषः । जनिमन् । रेजत । द्यौः । रेजत् । भूमिः ।
भियसा । स्वस्य । मन्योः ॥ ऋघायन्त । सु॰भ्वः ।
पर्वतासः । आर्दन् । धन्वानि । सरयन्ते । आपः ॥२॥

**भिनद्गिरिं शर्वसा वज्रमिष्णन्नाविष्कृण्वानः सहसान ऽओर्जः ।**
**वधींद्वृत्रं वज्रेण मन्दसानः सरन्नापो जर्वसा हतवृष्णीः ॥३॥**

भिनत् । गिरिम् । शर्वसा । वज्रम् । इष्णन् ।
आविः२कृण्वानः । सहसानः । ओजः ॥ वधीत् । वृत्रम् ।
वज्रेण । मन्दसानः । सरन् । आपः । जर्वसा । हत०वृष्णीः ॥३॥

**सुवीरस्ते जनिता मन्यत द्यौरिन्द्रस्य कर्त्ता स्वपस्तमो भूत् ।**
**य ऽईं जजान स्वर्यं सुवज्रमनपच्युतं सर्दसो न भूर्म ॥४॥**

सु०वीरः । ते । जनिता । मन्यत । द्यौः । इन्द्रस्य । कर्त्ता ।
स्वपः२तमः । भूत् ॥ यः । ईम् । जजान । स्वर्यम् ।
सु०वज्रम् । अनप०च्युतम् । सर्दसः । न । भूर्म ॥४॥

**य ऽएक ऽइच्च्यावर्यति प्र भूमा राजा कृष्टीनां पुरुहूत ऽइन्द्रः ।**
**सत्यमैनमनु विश्वे मदन्ति रातिं देवस्य गृणतो मघोनः ॥५॥ ( २१ )**

यः । एकः । इत् । च्यवर्यति । प्र । भूम । राजा ।
कृष्टीनाम् । पुरु०हूतः । इन्द्रः ॥ सत्यम् । एनम् । अनु ।
विश्वे । मदन्ति । रातिम् । देवस्य । गृणतः । मघोनः ॥५॥

**सत्रा सोमा ऽअभवन्नस्य विश्वे सत्रा मदासो बृहतो मदिष्ठाः ।**
**सत्राभवो वसुपतिर्वसूनां दत्रे विश्वा ऽअधिथा ऽइन्द्र कृष्टीः ॥६॥**

सत्रा । सोमाः । अभवन् । अस्य । विश्वे । सत्रा ।
मदासः । बृहतः । मदिष्ठाः ॥ सत्रा । अभवः । वसु०पतिः ।
वसूनाम् । दत्रे । विश्वाः । अधिथाः । इन्द्र । कृष्टीः ॥६॥

**त्वमध प्रथमं जायमानोऽमे विश्वा ऽअधिथा ऽइन्द्र कृष्टीः ।**
**त्वं प्रति प्रवत ऽआशयानमहिं वज्रेण मघवन्वि वृश्चः ॥७॥**

त्वम् । अर्ध । प्रथमम् । जायमानः । अमे । विश्वाः ।
अधिथाः । इन्द्र । कृष्टीः ॥ त्वम् । प्रति । प्र॰वतः ।
आ॰शयानम् । अहिम् । वज्रेण । मघ॰वन् । वि । वृश्चः ॥७॥

सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम् ।
हन्ता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ॥८॥
सत्रा॰हनम् । दधृषिम् । तुम्रम् । इन्द्रम् । महाम् । अपारम् ।
वृषभम् । सु॰वज्रम् ॥ हन्ता । यः । वृत्रम् । सनिता ।
उत । वाजम् । दाता । मघानि । मघ॰वा । सु॰राधाः ॥८॥

अयं वृतश्चातयते समीचीर्य ऽआजिषु मघवा शृण्व ऽएकः ।
अयं वाजं भरति यं सनोत्यस्य प्रियासः सख्ये स्याम ॥९॥
अयम् । वृतः । चातयते । सम्॰ईचीः । यः । आजिषु ।
मघ॰वा । शृण्वे । एकः ॥ अयम् । वाजम् । भरति ।
यम् । सनोति । अस्य । प्रियासः । सख्ये । स्याम ॥९॥

अयं शृण्वे ऽअध जयन्नुत घ्नन्नयमुत प्र कृणुते युधा गाः ।
यदा सत्यं कृणुते मन्युमिन्द्रो विश्वं दृळ्हं भयत ऽएजदस्मात् ॥१०॥ ( २२ )
अयम् । शृण्वे । अध । जयन् । उत । घ्नन् । अयम् । उत ।
प्र । कृणुते । युधा । गाः ॥ यदा । सत्यम् । कृणुते । मन्युम् ।
इन्द्रः । विश्वम् । दृळ्हम् । भयते । एजत् । अस्मात् ॥१०॥

समिन्द्रो गा ऽअजयत्सं हिरण्या समश्विया मघवा यो ह पूर्वीः ।
एभिर्नृभिर्नृतमो ऽअस्य शाकै रायो विभक्ता संभरश्च वस्वः ॥११॥
सम् । इन्द्रः । गाः । अजयत् । सम् । हिरण्या । सम् । अश्विया ।
मघ॰वा । यः । ह । पूर्वीः ॥ एभिः । नृ॰भिः । नृ॰तमः । अस्य ।
शाकैः । रायः । वि॰भक्ता । सम्॰भरः । च । वस्वः ॥११॥

**कियत्स्विदिन्द्रो ऽअध्यैति मातुः कियत्पितुर्जनितुर्यो जजान ।**
**यो ऽअस्य शुष्मं मुहुकैरियर्त्ति वातो न जूतः स्तनयद्भिरभ्रैः ॥१२॥**
कियत् । स्वित् । इन्द्रः । अधि । एति । मातुः । कियत् । पितुः ।
जनितुः । यः । जजान ॥ यः । अस्य । शुष्मम् । मुहुकैः ।
इयर्त्ति । वातः । न । जूतः । स्तनयत्ऽभिः । अभ्रैः ॥१२॥

**क्षियन्तं त्वमक्षियन्तं कृणोतीयर्त्ति रेणुं मघवा समोहम् ।**
**विभञ्जनुरशनिमाँइव द्यौरुत स्तोतारं मघवा वसौ धात् ॥१३॥**
क्षियन्तम् । त्वम् । अक्षियन्तम् । कृणोति । इयर्त्ति । रेणुम् ।
मघऽवा । सम्ऽओहम् ॥ विऽभञ्जनुः । अशनिमान्ऽइव ।
द्यौः । उत । स्तोतारम् । मघऽवा । वसौ । धात् ॥१३॥

**अयं चक्रमिषणत्सूर्यस्य न्येतशं रीरमत्ससृमाणम् ।**
**आ कृष्ण ऽईं जुहुराणो जिघर्त्ति त्वचो बुध्ने रजसो ऽअस्य योनौ ॥१४॥**
अयम् । चक्रम् । इषणत् । सूर्यस्य । नि । एतशम् ।
रीरमत् । ससृमाणम् । आ ॥ कृष्णः । ईम् । जुहुराणः ।
जिघर्त्ति । त्वचः । बुध्ने । रजसः । अस्य । योनौ ॥१४॥

**असिक्न्यां यजमानो न होता ॥१५॥ ( २३ )**
असिक्न्याम् । यजमानः । न । होता ॥१५॥

**गव्यन्त ऽइन्द्रं सख्याय विप्रा ऽअश्वायन्तो वृषणं वाजयन्तः ।**
**जनीयन्तो जनिदामक्षितोतिमा च्यावयामोऽवते न कोशम् ॥१६॥**
गव्यन्तः । इन्द्रम् । सख्याय । विप्राः । अश्वऽयन्तः ।
वृषणम् । वाजयन्तः ॥ जनिऽयन्तः । जनिऽदाम् ।
अक्षितऽऊतिम् । आ । च्यवयामः । अवते । न । कोशम् ॥१६॥

त्राता नो बोधि ददृशान ऽआपिरभिख्याता मर्डिता सोम्यानाम् ।
सखा पिता पितृतमः पितॄणां कर्त्तेमु लोकमुशते वयोधाः ॥१७॥
त्राता । नः । बोधि । ददृशानः । आपिः । अभि०ख्याता ।
मर्डिता । सोम्यानाम् ॥ सखा । पिता । पितृ०तमः । पितॄणाम् ।
कर्त्ता । ईम् । ऊँ इति । लोकम् । उशते । वयः२धाः ॥१७॥

सखीयतामविता बोधि सखा गृणान ऽइन्द्र स्तुवते वयो धाः ।
वयं ह्या ते चकृमा सबाध ऽआभिः शमीभिर्महयन्त ऽइन्द्र ॥१८॥
सखि०यताम् । अविता । बोधि । सखा । गृणानः । इन्द्र ।
स्तुवते । वयः । धाः ॥ वयम् । हि । आ । ते । चकृम ।
स०बाधः । आभिः । शमीभिः । महयन्तः । इन्द्र ॥१८॥

स्तुत ऽइन्द्रो मघवा यद्ध वृत्रा भूरीण्येको ऽअप्रतीनि हन्ति ।
अस्य प्रियो जरिता यस्य शर्मन्नकिर्देवा वारयन्ते न मर्त्ताः ॥१९॥
स्तुतः । इन्द्रः । मघ०वा । यत् । ह । वृत्रा । भूरीणि । एकः ।
अप्रतीनि । हन्ति ॥ अस्य । प्रियः । जरिता । यस्य ।
शर्मन् । नकिः । देवाः । वारयन्ते । न । मर्त्ताः ॥१९॥

एवा न ऽइन्द्रो मघवा विरप्शी करत्सत्या चर्षणीधृदनर्वा ।
त्वं राजा जनुषां धेह्यस्मे ऽअधि श्रवो माहिनं यज्जरित्रे ॥२०॥
एव । नः । इन्द्रः । मघ०वा । वि०रप्शी । करत् । सत्या ।
चर्षणि०धृत् । अनर्वा ॥ त्वम् । राजा । जनुषाम् । धेहि ।
अस्मे इति । अधि । श्रवः । माहिनम् । यत् । जरित्रे ॥२०॥

नू ष्टुत ऽइन्द्र नू गृणान ऽइषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥२१॥ ( २४ ) [ ७४१ ]

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः ।
न । पीपेरिति पीपेः ॥ अकारि । ते । हरि०वः । ब्रह्म ।
नव्यम् । धिया । स्याम । रथ्यः । सदा०साः ॥२१॥

## ( १८ )

**१३ वामदेवो गौतमः, १ इन्द्रः, ४ ( उत्तरार्धर्चस्य ), ७ अदितिः । १ वामदेवः, २-४ ( पूर्वार्धर्चस्य ), ८-१३ इन्द्रः, ४ ( उत्तरार्धर्चस्य ), ७ वामदेवः । त्रिष्टुप् ।**

**अयं पन्था ऽअनुवित्तः पुराणो यतो देवा ऽउदजायन्त विश्वे ।**
**अतश्चिदा जनिषीष्ट प्रवृद्धो मा मातरममुया पत्तवे कः ॥१॥**

अयम् । पन्थाः । अनु०वित्तः । पुराणः । यतः । देवाः ।
उत्०अजायन्त । विश्वे ॥ अतः । चित् । आ । जनिषीष्ट ।
प्र०वृद्धः । मा । मातरम् । अमुया । पत्तवे । करिति कः ॥१॥

**नाहमतो निरया दुर्गहैतत्तिरश्चता पार्श्वान्निर्गमाणि ।**
**बहूनि मे ऽअकृता कर्त्वानि युध्यै त्वेन सं त्वेन पृच्छै ॥२॥**

न । अहम् । अतः । निः । अय । दुः२गहा । एतत् ।
तिरश्चता । पार्श्वात् । निः । गमानि ॥ बहूनि । मे ।
अकृता । कर्त्वानि । युध्यै । त्वेन । सम् । त्वेन । पृच्छै ॥२॥

**परायतीं मातरमन्वचष्ट न नानु गान्यनु नू गमानि ।**
**त्वष्टुर्गृहे ऽअपिबत्सोममिन्द्रः शतधन्यं चम्वोः सुतस्य ॥३॥**

परा०यतीम् । मातरम् । अनु । अचष्ट । न । न । अनु ।
गानि । अनु । नु । गमानि ॥ त्वष्टुः । गृहे । अपिबत् ।
सोमम् । इन्द्रः । शत०धन्यम् । चम्वोः । सुतस्य ॥३॥

किं स ऽऋधक्कृणवद्यं सहस्रं मासो जभार शरदश्च पूर्वीः ।
नही न्वस्य प्रतिमानमस्त्यन्तर्जातेषूत ये जनित्वाः ॥४॥
किम् । सः । ऋधक् । कृणवत् । यम् । सहस्रम् । मासः ।
जभार । शरदः । च । पूर्वीः ॥ नहि । नु । अस्य । प्रति०मानम् ।
अस्ति । अन्तः । जातेषु । उत । ये । जनि०त्वाः ॥४॥

अवद्यमिव मन्यमाना गुहाकरिन्द्रं माता वीर्येणा न्यृष्टम् ।
अथोदस्थात्स्वयमत्कं वसान ऽआ रोदसी ऽअपृणाज्जायमानः ॥५॥ ( २५ )
अवद्यम्ऽइव । मन्यमाना । गुहा । अकः । इन्द्रम् । माता ।
वीर्येण । नि०ऋष्टम् ॥ अथ । उत् । अस्थात् । स्वयम् ।
अत्कम् । वसानः । आ । रोदसी इति । अपृणात् । जायमानः ॥५॥

एता ऽअर्षन्त्यललाभवन्तीर्ऋतावरीरिव संक्रोशमानाः ।
एता वि पृच्छ किमिदं भनन्ति कमापो ऽअद्रिं परिधिं रुजन्ति ॥६॥
एताः । अर्षन्ति । अलला०भवन्तीः । ऋतवरीःऽइव ।
सम्०क्रोशमानाः ॥ एताः । वि । पृच्छ । किम् । इदम् ।
भनन्ति । कम् । आपः । अद्रिम् । परि०धिम् । रुजन्ति ॥६॥

किमु ष्विदस्मै निविदो भनन्तेन्द्रस्यावद्यं दिधिषन्त ऽआपः ।
ममैतान्पुत्रो महता वधेन वृत्रं जघन्वाँ ऽअसृजद्वि सिन्धून् ॥७॥
किम् । ऊँ इति । स्वित् । अस्मै । नि०विदः । भनन्त । इन्द्रस्य ।
अवद्यम् । दिधिषन्ते । आपः ॥ मम । एतान् । पुत्रः । महता ।
वधेन । वृत्रम् । जघन्वान् । असृजत् । वि । सिन्धून् ॥७॥

ममच्चन त्वा युवतिः परास ममच्चन त्वा कुषवा जगार ।
ममच्चिदापः शिशवे ममृड्युर्ममच्चिदिन्द्रः सहसोदतिष्ठत् ॥८॥

ममत् । चन । त्वा । युवतिः । परा॰आस । ममत् । चन ।
त्वा । कुषवा । जगार ॥ ममत् । चित् । आपः । शिशवे ।
ममृड्युः । ममत् । चित् । इन्द्रः । सहसा । उत् । अतिष्ठत् ॥८॥

**ममच्चन ते मघवन्व्यंसो निविविध्वाँ ऽअप हनू जघान ।**
**अधा निविद्ध ऽउत्तरो बभूवाञ्छिरो दासस्य सं पिणग्वधेन ॥९॥**
ममत् । चन । ते । मघ॰वन् । वि॰अंसः । नि॰विविध्वान् ।
अप । हनू इति । जघान ॥ अध । नि॰विद्धः । उत्॰तरः ।
बभूवान् । शिरः । दासस्य । सम् । पिणक् । वधेन ॥९॥

**गृष्टिः ससूव स्थविरं तवागामनाधृष्यं वृषभं तुम्रमिन्द्रम् ।**
**अरीळ्हं वत्सं चरथाय माता स्वयं गातुं तन्व ऽइच्छमानम् ॥१०॥**
गृष्टिः । ससूव । स्थविरम् । तवागाम् । अनाधृष्यम् ।
वृषभम् । तुम्रम् । इन्द्रम् ॥ अरीळ्हम् । वत्सम् । चरथाय ।
माता । स्वयम् । गातुम् । तन्वे । इच्छमानम् ॥१०॥

**उत माता महिषमन्ववेनदमी त्वा जहति पुत्र देवाः ।**
**अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो वितरं वि क्रमस्व ॥११॥**
उत । माता । महिषम् । अनु । अवेनत् । अमी इति । त्वा ।
जहति । पुत्र । देवाः ॥ अथ । अब्रवीत् । वृत्रम् । इन्द्रः ।
हनिष्यन् । सखे । विष्णो इति । वि॰तरम् । वि । क्रमस्व ॥११॥

**कस्ते मातरं विधवामचक्रच्छयुं कस्त्वामजिघांसच्चरन्तम् ।**
**कस्ते देवो ऽअधि मार्डीक ऽआसीद्यत्प्राक्षिणाः पितरं पादगृह्य ॥१२॥**
कः । ते । मातरम् । विधवाम् । अचक्रत् । शयुम् । कः । त्वाम् ।
अजिघांसत् । चरन्तम् ॥ कः । ते । देवः । अधि । मार्डीके ।
आसीत् । यत् । प्र । अक्षिणाः । पितरम् । पाद॰गृह्य ॥१२॥

**अवर्त्या शुनं ऽआन्त्राणि पेचे न देवेषु विविदे मर्डितारम् ।**

**अपश्यं जायाममहीयमानामधा मे श्येनो मध्वा जभार ॥१३॥ ( २६ ) [ ७५४ ]**

अवर्त्या । शुनः । आन्त्राणि । पेचे । न । देवेषु । विविदे ।

मर्डितारम् ॥ अपश्यम् । जायाम् । अमहीयमानाम् ।

अध । मे । श्येनः । मधु । आ । जभार ॥१३॥

**॥ इति तृतीयाष्टके पञ्चमोऽध्यायः ॥ ५ ॥**

# पञ्चमाध्यायस्य मन्त्रवर्गानुक्रमणी

वैश्वानराय मीळ्हुषे ॥१॥
इदं मे अग्ने कियते ॥२॥
ऋतं वोचे नमसा ॥३॥
ऊर्ध्व ऊ षु णो ॥४॥
भद्रा ते अग्ने स्वनीक ॥ ५॥
अयमिह प्रथमोधायि ॥६॥
तं शश्वतीषु मातृषु ॥७॥
दूतं वो विश्ववेदसं ॥८॥
अग्ने मृळ महाँ असि ॥९॥
अग्ने तमद्याऽश्वं ॥१०॥
भद्रं ते अग्ने ॥११॥
यस्त्वामग्न ॥१२॥
प्रत्यग्निरुषसाम ॥१३॥
प्रत्यग्निरुषसो ॥१४॥
अग्निर्होता नो अध्वरे ॥१५॥
तमर्वन्तं न सानसि ॥१६॥
आ सत्यो यातु ॥१७॥
विश्वानि शक्रो ॥१८॥
यासि कुत्सेन ॥१९॥
तमिद्व इन्द्रं ॥२०॥
त्वं महाँ इन्द्र ॥२१॥
सत्रा सोमा अभवन्न ॥२२॥
समिन्द्रो गा अबयत् ॥२३॥
गव्यन्त इन्द्रं ॥२४॥
अयं पन्था अनुवित्तः ॥२५॥
एता अर्षन्त्यलला ॥२६॥

॥ इति शाङ्खायनसंहितायां तृतीयाष्टके पञ्चमोऽध्यायः ॥
( पञ्चमाध्याये वर्गाः २६, सूक्तानि १४, ऋचः १४८ )

# ॥ तृतीयाष्टके षष्ठोऽध्यायः॥

**अथ षष्ठोऽध्यायः॥६॥ वर्गाः १-३० ]** [ चतुर्थमण्डले सूक्तानि १९-३२

## ( १९ )

११ वामदेवो गौतमः । इन्द्रः । त्रिष्टुप् ।

**एवा त्वामिन्द्र वज्रिन्नत्र विश्वे देवासः सुहवास ऊमाः ।**
**महामुभे रोदसी वृद्धमृष्वं निरेकमिद्गृणते वृत्रहत्ये ॥१॥**

एव । त्वाम् । इन्द्र । वज्रिन् । अत्र । विश्वे । देवासः ।
सुऽहवासः । ऊमाः ॥ महाम् । उभे इति । रोदसी इति ।
वृद्धम् । ऋष्वम् । निः । एकम् । इत् । गृणते । वृत्रऽहत्ये ॥१॥

**अवासृजन्त जिव्रयो न देवा भुवः सम्राळिन्द्र सत्ययोनिः ।**
**अहन्नहिं परिशयानमर्णः प्र वर्तनीरँरदो विश्वधेनाः ॥२॥**

अव । असृजन्त । जिव्रयः । न । देवाः । भुवः । सम्ऽराट् ।
इन्द्र । सत्यऽयोनिः ॥ अहन् । अहिम् । परिऽशयानम् ।
अर्णः । प्र । वर्तनीः । अरदः । विश्वऽधेनाः ॥२॥

**अतृप्णुवन्तं वियतमबुध्यमबुध्यमानं सुषुपाणमिन्द्र ।**
**सप्त प्रति प्रवत आशयानमहिं वज्रेण वि रिणा अपर्वन् ॥३॥**

अतृप्णुवन्तम् । विऽयतम् । अबुध्यम् । अबुध्यमानम् ।
सुसुपानम् । इन्द्र ॥ सप्त । प्रति । प्रऽवतः । आऽशयानम् ।
अहिम् । वज्रेण । वि । रिणाः । अपर्वन् ॥३॥

**अक्षोदयच्छवसा क्षाम बुध्नं वार्ण वातस्तविषीभिरिन्द्रः ।**
**दृळ्हान्यौभ्नादुशमान ओजोऽवाभिनत्ककुभः पर्वतानाम् ॥४॥**

अक्षोदयत् । शवसा । क्षाम । बुध्नम् । वाः । न । वातः ।
तविषीभिः । इन्द्रः ॥ दृळ्हानि । औभ्नात् । उशमानः ।
ओजः । अव । अभिनत् । ककुभः । पर्वतानाम् ॥४॥

अभि प्र दद्रुर्जनयो न गर्भं रथाइव प्र ययुः साकमद्रयः ।
अतर्पयो विसृत ऽउब्ज ऽऊर्मीन्त्वं वृताँ ऽअरिणा ऽइन्द्र सिन्धून् ॥५॥ (१)

अभि । प्र । दद्रुः । जनयः । न । गर्भम् । रथाःऽइव । प्र ।
ययुः । साकम् । अद्रयः ॥ अतर्पयः । वि०सृतः । उब्जः ।
ऊर्मीन् । त्वम् । वृतान् । अरिणाः । इन्द्र । सिन्धून् ॥५॥

त्वं महीमवनिं विश्वधेनां तुर्वीतये वय्याय क्षरन्तीम् ।
अरमयो नमसैजदर्णः सुतरणाँ ऽअकृणोरिन्द्र सिन्धून् ॥६॥

त्वम् । महीम् । अवनिम् । विश्व०धेनाम् । तुर्वीतये ।
वय्याय । क्षरन्तीम् ॥ अरमयः । नमसा । एजत् ।
अर्णः । सु०तरणान् । अकृणोः । इन्द्र । सिन्धून् ॥६॥

प्राग्रुवो नभन्वो३ न वक्वा ध्वस्रा ऽअपिन्वद्युवतीर्ऋतज्ञाः ।
धन्वान्यज्राँ ऽअपृणक्तृषाणाँ ऽअधोगिन्द्रः स्तर्यो ३ दंसुपत्नीः ॥७॥

प्र । अग्रुवः । नभन्वः । न । वक्वाः । ध्वस्राः । अपिन्वत् ।
युवतीः । ऋत०ज्ञाः ॥ धन्वानि । अज्रान् । अपृणक् ।
तृषाणान् । अधोक् । इन्द्रः । स्तर्यः । दम्०सुपत्नीः ॥७॥

पूर्वीरुषसः शरदश्च गूर्ता वृत्रं जघन्वाँ ऽअसृजद्वि सिन्धून् ।
परिष्ठिता ऽअतृणद्बद्बधानाः सीरा ऽइन्द्रः स्रवितवे पृथिव्या ॥८॥

पूर्वीः । उषसः । शरदः । च । गूर्ताः । वृत्रम् । जघन्वान् ।
असृजत् । वि । सिन्धून् ॥ परि०स्थिताः । अतृणत् ।
बद्बधानाः । सीराः । इन्द्रः । स्रवितवे । पृथिव्या ॥८॥



वम्रीभिः पुत्रमग्रुवो ऽअदानं निवेशनाद्धरिव ऽआ जभर्थ ।
व्य१न्धो ऽअख्यदहिमाददानो निर्भूदुखच्छित्समरन्त पर्व ॥९॥

वम्रीभिः । पुत्रम् । अग्रुवः । अदानम् । नि॰वेशनात् । हरि॰वः ।
आ । जभर्थ ॥ वि । अन्धः । अख्यत् । अहिम् । आ॰ददानः ।
निः । भूत् । उख॰च्छित् । सम् । अरन्त । पर्व ॥९॥

**प्र ते पूर्वाणि करणानि विप्राविद्वाँ ऽआह विदुषे करांसि ।**
**यथायथा वृष्ण्यानि स्वगूर्त्तापांसि राजन्नर्याविवेषीः ॥१०॥**
प्र । ते । पूर्वाणि । करणानि । विप्र । आ॰विद्वान् ।
आह । विदुषे । करांसि ॥ यथा॰यथा । वृष्ण्यानि ।
स्व॰गूर्त्ता । अपांसि । राजन् । नर्या । अविवेषीः ॥१०॥

**नू ष्टुत ऽइन्द्र नू गृणान ऽइषं जरित्रे नद्यो ३ न पीपेः ।**
**अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥ ( २ ) [ ७६५ ]**
नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे ।
नद्यः । न । पीपेरिति पीपेः ॥ अकारि । ते । हरि॰वः ।
ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदा॰साः ॥११॥

# ( २० )

**११ वामदेवो गौतमः । इन्द्रः । त्रिष्टुप् ।**

**आ न ऽइन्द्रो दूरादा न ऽआसादभिष्टिकृदवसे यासदुग्रः ।**
**ओजिष्ठेभिर्नृपतिर्वज्रबाहुः संगे समत्सु तुर्वणिः पृतन्यून् ॥१॥**
आ । नः । इन्द्रः । दूरात् । आ । नः । आसात् ।
अभिष्टि॰कृत् । अवसे । यासत् । उग्रः ॥ ओजिष्ठेभिः ।
नृ॰पतिः । वज्र॰बाहुः । सम्॰गे । समत्॰सु । पृतन्यून् ॥१॥

**आ न ऽइन्द्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसे च ।**
**तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनु नो वाजसातौ ॥२॥**

आ । नः । इन्द्रः । हरि॑ऽभिः । यातु । अच्छ॑ । अर्वाचीनः ।
अव॑से । राध॑से । च ॥ तिष्ठा॑ति । वज्री । मघ॑ऽवा ।
वि॒ऽरप्शी । इमम् । यज्ञम् । अनु । नः । वाज॑ऽसातौ ॥२॥

**इमं यज्ञं त्वमस्माकमिन्द्र पुरो दधत्सनिष्यसि क्रतुं नः ।**
**श्वघ्नीव वज्रिन्त्सनये धनानां त्वया वयमर्य ऽआजिं जयेम ॥३॥**

इमम् । यज्ञम् । त्वम् । अस्माक॑म् । इन्द्र । पुरः । दधत् ।
सनिष्यसि । क्रतुम् । नः ॥ श्वघ्नीऽइव । वज्रिन् । सनये ।
धना॑नाम् । त्वया । वयम् । अर्यः । आजिम् । जयेम ॥३॥

**उशन्नु षु णः सुमना ऽउपाके सोमस्य नु सुषुतस्य स्वधावः ।**
**पा ऽइन्द्र प्रतिभृतस्य मध्वः समन्धसा ममदः पृष्ठ्येन ॥४॥**

उशन् । ऊँ इति॑ । सु । नः । सु॒ऽमनाः । उपाके ।
सोम॑स्य । नु । सु॒ऽसु॑तस्य । स्वधा॒ऽवः ॥ पाः । इन्द्र ।
प्रति॑ऽभृतस्य । मध्वः । सम् । अन्ध॑सा । ममदः । पृष्ठ्येन ॥४॥

**वि यो ररप्श ऽऋषिभिर्नवेभिर्वृक्षो न पक्वः सृण्यो न जेता ।**
**मर्यो न योषामभि मन्यमानोऽच्छा विवक्मि पुरुहूतमिन्द्रम् ॥५॥ ( ३ )**

वि । यः । ररप्शे । ऋषि॑ऽभिः । नवे॑भिः । वृक्षः । न ।
पक्वः । सृण्यः । न । जेता ॥ मर्यः । न । योषाम् । अभि ।
मन्य॑मानः । अच्छ॑ । विवक्मि । पुरु॒ऽहूतम् । इन्द्रम् ॥५॥

**गिरिर्न यः स्वतवाँ ऽऋष्व ऽइन्द्रः सनादेव सहसे जात ऽउग्रः ।**
**आदर्त्ता वज्रं स्थविरं न भीम ऽउद्नेव कोशं वसुना न्यृष्टम् ॥६॥**

गिरिः । न । यः । स्व॒ऽत॑वान् । ऋष्वः । इन्द्रः । सनात् ।
एव । सह॑से । जातः । उग्रः ॥ आ॒ऽदर्त्ता । वज्रम् । स्थविरम् ।
न । भीमः । उद्नाऽइव । कोशम् । वसुना । नि॒ऽऋ॑ष्टम् ॥६॥

न यस्यं वर्त्ता जनुषा न्वस्ति न राधंस ऽआमरीता मघस्यं ।
उद्वावृषाणस्तंविषीव ऽउग्रास्मभ्यं दद्धि पुरुहूत रायः ॥७॥
न । यस्यं । वर्त्ता । जनुषा । नु । अस्ति । न । राधंसः ।
आ०मरीता । मघस्यं ॥ उत्०ववृषाणः । तविषी०वः ।
उग्र । अस्मभ्यंम् । दद्धि । पुरु०हूत । रायः ॥७॥

ईक्षे रायः क्षयंस्य चर्षणीनामुत व्रजमंपवर्त्तासि गोनाम् ।
शिक्षानरः संमिथेषु प्रहावान्वस्वो राशिमंभिनेतासि भूरिंम् ॥८॥
ईक्षे । रायः । क्षयंस्य । चर्षणीनाम् । उत । व्रजम् ।
अप०वर्त्ता । असि । गोनाम् ॥ शिक्षा०नरः । सम्०इथेषु ।
प्रहा०वान् । वस्वः । राशिम् । अभि०नेता । असि । भूरिंम् ॥८॥

कया तच्छृण्वे शच्या शचिंष्ठो यया कृणोति मुहु का चिंदृष्वः ।
पुरु दाशुषे विचंयिष्ठो ऽअंहोऽथा दधाति द्रविंणं जरित्रे ॥९॥
कया । तत् । शृण्वे । शच्या । शचिंष्ठः । यया । कृणोति ।
मुहु । का । चित् । ऋष्वः ॥ पुरु । दाशुषे । वि०चंयिष्ठः ।
अंहः । अथ । दधाति । द्रविंणम् । जरित्रे ॥९॥

मा नो मर्धीरा भंरा दद्धि तन्नः प्र दाशुषे दातंवे भूरि यत्ते ।
नव्ये देष्णे शस्ते ऽअस्मिन्त ऽउक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः ॥१०॥
मा । नः । मर्धीः । आ । भर । दद्धि । तत् । नः । प्र ।
दाशुषे । दातंवे । भूरिं । यत् । ते ॥ नव्ये । देष्णे । शस्ते ।
अस्मिन् । ते । उक्थे । प्र । ब्रवाम । वयम् । इन्द्र । स्तुवन्तः ॥१०॥

नू ष्टुत ऽइन्द्र नू गृणान ऽइषं जरित्रे नद्योइ न पींपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥ (४) [ ७७६ ]

नु । स्तुतः । इन्द्र । नु । गृणानः । इर्षम् । जरित्रे । नद्यः ।
न । पीपेरिति पीपेः ॥ अकारि । ते । हरि॰वः । ब्रह्म ।
नव्यम् । धिया । स्याम । रथ्यः । सदा॰साः ॥११॥

## ( २१ )

**११ वामदेवो गौतमः । इन्द्रः । त्रिष्टुप् ।**

**आ यात्विन्द्रोऽवस ऽउप न ऽइह स्तुतः सधमादस्तु शूरः ।**
**वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥१॥**
आ । यातु । इन्द्रः । अवसे । उप । नः । इह । स्तुतः सध॰मात् । अस्तु । शूरः ॥
ववृधानः । तविषीः । यस्य । पूर्वीः । द्यौः । न । क्षत्रम् । अभि॰भूति । पुष्यात् ॥१॥

**तस्येदिह स्तवथ वृष्ण्यानि तुविद्युम्नस्य तुविराधसो नॄन् ।**
**यस्य क्रतुर्विदथ्यो३ न सम्राट् साह्वान्तरुत्रो ऽअभ्यस्ति कृष्टीः ॥२॥**
तस्य । इत् । इह । स्तवथ । वृष्ण्यानि । तुवि॰द्युम्नस्य ।
तुवि॰राधसः । नॄन् ॥ यस्य । क्रतुः । विदथ्यः । न ।
सम्॰राट् । सह्वान् । तरुत्रः । अभि । अस्ति । कृष्टीः ॥२॥

**आ यात्विन्द्रो दिव ऽआ पृथिव्या मक्षू समुद्रादुत वा पुरीषात् ।**
**स्वर्णरादवसे नो मरुत्वान्परावतो वा सदनादृतस्य ॥३॥**
आ । यातु । इन्द्रः । दिवः । आ । पृथिव्याः । मक्षु ।
समुद्रात् । उत । वा । पुरीषात् ॥ स्वः॒ऽनरात् । अवसे ।
नः । मरुत्वान् । परा॰वतः । वा । सदनात् । ऋतस्य ॥३॥

**स्थूरस्य रायो बृहतो य ऽईशे तमु ष्टवाम विदथेष्विन्द्रम् ।**
**यो वायुना जयति गोमतीषु प्र धृष्णुया नयति वस्यो ऽअच्छ ॥४॥**

स्थूरस्य । रायः । बृहतः । यः । ईशे । तम् । ऊँ इति ।
स्तवाम । विदथेषु । इन्द्रम् ॥ यः । वायुना । जयति ।
गोऽमतीषु । प्र । धृष्णुऽया । नयति । वस्यः । अच्छ ॥४॥

**उप यो नमो नमसि स्तभायन्नियर्ति वाचं जनयन्यजध्यै ।**
**ऋञ्जसानः पुरुवार ऽउक्थैरेन्द्रं कृण्वीत सदनेषु होता ॥५॥ (५)**
उप । यः । नमः । नमसि । स्तभायन् । इयर्ति ।
वाचम् । जनयन् । यजध्यै ॥ ऋञ्जसानः । पुरुऽवारः ।
उक्थैः । आ । इन्द्रम् । कृण्वीत । सदनेषु । होता ॥५॥

**धिषा यदि धिषण्यन्तः सरण्यान्त्सदन्तो ऽअद्रिमौशिजस्य गोहे ।**
**आ दुरोषाः पास्त्यस्य होता यो नो महान्त्संवरणेषु वह्निः ॥६॥**
धिषा । यदि । धिषण्यन्तः । सरण्यान् । सदन्तः । अद्रिम् ।
औशिजस्य । गोहे ॥ आ । दुरोषाः । पास्त्यस्य । होता ।
यः । नः । महान् । सम्ऽवरणेषु । वह्निः ॥६॥

**सत्रा यदीं भार्वरस्य वृष्णः सिषक्ति शुष्मः स्तुवते भराय ।**
**गुहा यदीमौशिजस्य गोहे प्र यद्धिये प्रायसे मदाय ॥७॥**
सत्रा । यत् । ईम् । भार्वरस्य । वृष्णः । सिसक्ति ।
शुष्मः । स्तुवते । भराय ॥ गुहा । यत् । ईम् । औशिजस्य ।
गोहे । प्र । यत् । धिये । प्र । अयसे । मदाय ॥७॥

**वि यद्वरांसि पर्वतस्य वृण्वे पयोभिर्जिन्वे ऽअपां जवांसि ।**
**विदद्गौरस्य गवयस्य गोहे यदी वाजाय सुध्यो वहन्ति ॥८॥**
वि । यत् । वरांसि । पर्वतस्य । वृण्वे । पयःऽभिः ।
जिन्वे । अपाम् । जवांसि ॥ विदत् । गौरस्य । गवयस्य ।
गोहे । यदि । वाजाय । सुऽध्यः । वहन्ति ॥८॥

भद्रा ते हस्ता सुकृतोत पाणी प्रयन्तारा स्तुवते राध ऽइन्द्र ।
का ते निषत्तिः किमु नो ममत्सि किं नोदुदु हर्षसे दातवा ऽउ ॥९॥
भद्रा । ते । हस्ता । सु०कृता । उत । पाणी इति । प्र०यन्तारा । स्तुवते ।
राधः । इन्द्र ॥ का । ते । नि०सत्तिः । किम् । ऊँ इति । नः । ममत्सि ।
किम् । न । उत्०उत् । ऊँ इति । हर्षसे । दातवै । ऊँ इति ॥९॥

एवा वस्व ऽइन्द्रः सत्यः सम्राड्ढन्ता वृत्रं वरिवः पूरवे कः ।
पुरुष्टुत क्रत्वा नः शग्धि रायो भक्षीय तेऽवसो दैव्यस्य ॥१०॥
एव । वस्वः । इन्द्रः । सत्यः । सम्०राट् । हन्ता । वृत्रम् ।
वरिवः । पूरवे । करिति कः ॥ पुरु०स्तुत । क्रत्वा । नः ।
शग्धि । रायः । भक्षीय । ते । अवसः । दैव्यस्य ॥१०॥

नू ष्टुत ऽइन्द्र नू गृणान ऽइषं जरित्रे नद्यो ३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥ (६) [७८७]
नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः ।
न । पीपेरिति पीपेः ॥ अकारि । ते । हरि०वः । ब्रह्म ।
नव्यम् । धिया । स्याम । रथ्यः । सदा०साः ॥११॥

## ( २२ ) [ अथ तृतीयोऽनुवाकः ॥३॥ सू. २२-३२

११ वामदेवो गौतमः । इन्द्रः । त्रिष्टुप् ।

यन्न ऽइन्द्रो जुजुषे यच्च वष्टि तन्नो महान्करति शुष्म्या चित् ।
ब्रह्म स्तोमं मघवा सोममुक्था यो ऽअश्मानं शवसा बिभ्रदेति ॥१॥
यत् । नः । इन्द्रः । जुजुषे । यत् । च । वष्टि । तत् । नः । महान् ।
करति । शुष्मी । आ । चित् ॥ ब्रह्म । स्तोमम् । मघ०वा । सोमम् ।
उक्था । यः । अश्मानम् । शवसा । बिभ्रत् । एति ॥१॥

**वृषा वृषन्धिं चतुरश्रिमस्यन्नुग्रो बाहुभ्यां नृतमः शचीवान् ।**
**श्रिये परुष्णीमुषमाण ऽऊर्णां यस्याः पर्वाणि सख्याय विव्ये ॥२॥**
वृषा । वृषन्धिम् । चतुःऽअश्रिम् । अस्यन् । उग्रः । बाहुऽभ्याम् ।
नृऽतमः । शचीऽवान् ॥ श्रिये । परुष्णीम् । उषमाणः ।
ऊर्णाम् । यस्याः । पर्वाणि । सख्याय । विव्ये ॥२॥

**यो देवो देवतमो जायमानो महो वाजेभिर्महद्भिश्च शुष्मैः ।**
**दधानो वज्रं बाह्वोरुशन्तं द्याममेन रेजयत्प्र भूम ॥३॥**
यः । देवः । देवऽतमः । जायमानः । महः । वाजेभिः ।
महत्ऽभिः । च । शुष्मैः ॥ दधानः । वज्रम् । बाह्वोः ।
उशन्तम् । द्याम् । अमेन । रेजयत् । प्र । भूम ॥३॥

**विश्वा रोधांसि प्रवतश्च पूर्वीर्द्यौर्ऋष्वाज्जनिमन्रेजत क्षाः ।**
**आ मातरा भरति शुष्म्या गोर्नृवत्परिज्मन्नोनुवन्त वाताः ॥४॥**
विश्वा । रोधांसि । प्रऽवतः । च । पूर्वीः । द्यौः । ऋष्वात् ।
जनिमन् । रेजत । क्षाः ॥ आ । मातरा । भरति । शुष्मी ।
आ । गोः । नृऽवत् । परिऽज्मन् । नोनुवन्त । वाताः ॥४॥

**ता तू त ऽइन्द्र महतो महानि विश्वेष्वित्सवनेषु प्रवाच्या ।**
**यच्छूर धृष्णो धृषता दधृष्वानहिं वज्रेण शवसाविवेषीः ॥५॥ (७)**
ता । तु । ते । इन्द्र । महतः । महानि । विश्वेषु ।
इत् । सवनेषु । प्रऽवाच्या ॥ यत् । शूर । धृष्णो इति ।
धृषता । दधृष्वान् । अहिम् । वज्रेण । शवसा । अविवेषीः ॥५॥

**ता तू ते सत्या तुविनृम्ण विश्वा प्र धेनवः सिस्रते वृष्ण ऽऊध्नः ।**
**अधा ह त्वद्वृषमणो भियानाः प्र सिन्धवो जवसा चक्रमन्त ॥६॥**

ता । तु । ते । सत्या । तुवि॰नृम्ण । विश्वा । प्र । धेनवः ।
सिस्रते । वृष्णः । ऊध्नः ॥ अध । ह । त्वत् । वृष॰मनः ।
भियानाः । प्र । सिन्धवः । जवसा । चक्रमन्त ॥६॥

**अत्राह ते हरिवस्ता उ देवीरवोभिरिन्द्र स्तवन्त स्वसारः ।**
**यत्सीमनु प्र मुचो बद्बधाना दीर्घामनु प्रसितिं स्यन्दयध्यै ॥७॥**
अत्र । अह । ते । हरि॰वः । ताः । ॐ इति । देवीः । अवः॰भिः ।
इन्द्र । स्तवन्त । स्वसारः ॥ यत् । सीम् । अनु । प्र । मुचः ।
बद्बधानाः । दीर्घाम् । अनु । प्र॰सितिम् । स्यन्दयध्यै ॥७॥

**पिपीळे अंशुर्मद्यो न सिन्धुरा त्वा शमी शशमानस्य शक्तिः ।**
**अस्मद्र्यक्छुशुचानस्य यम्या आशुर्न रश्मिं तुव्योजसं गोः ॥८॥**
पिपीळे । अंशुः । मद्यः । न । सिन्धुः । आ । त्वा । शमी ।
शशमानस्य । शक्तिः ॥ अस्मद्र्यक् । शशमानस्य । यम्याः ।
आशुः । न । रश्मिम् । तुवि॰ओजसम् । गोः ॥८॥

**अस्मे वर्षिष्ठा कृणुहि ज्येष्ठा नृम्णानि सत्रा सहुरे सहांसि ।**
**अस्मभ्यं वृत्रा सुहनानि रन्धि जहि वधर्वनुषो मर्त्यस्य ॥९॥**
अस्मे इति । वर्षिष्ठा । कृणुहि । ज्येष्ठा । नृम्णानि ।
सत्रा । सहुरे । सहांसि ॥ अस्मभ्यम् । वृत्रा । सु॰हनानि ।
रन्धि । जहि । वधः । वनुषः । मर्त्यस्य ॥९॥

**अस्माकमित्सु शृणुहि त्वमिन्द्रास्मभ्यं चित्राँ उप माहि वाजान् ।**
**अस्मभ्यं विश्वा इषणः पुरंधीरस्माकं सु मघवन्बोधि गोदाः ॥१०॥**
अस्माकम् । इत् । सु । शृणुहि । त्वम् । इन्द्र । अस्मभ्यम् ।
चित्रान् । उप । माहि । वाजान् ॥ अस्मभ्यम् । विश्वाः । इषणः ।
पुरम्॰धीः । अस्माकम् । सु । मघ॰वन् । बोधि । गोदाः ॥१०॥

नू ष्टुत ऽइन्द्र नू गृणान ऽइषं जरित्रे नद्यो ३ न पींपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥ (८) [७९८]
नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः ।
न । पीपेरिति पीपेः ॥ अकारि । ते । हरि०वः । ब्रह्म ।
नव्यम् । धिया । स्याम । रथ्यः । सदा०साः ॥११॥

# ( २३ )

११ वामदेवो गौतमः । इन्द्रः, ८-१० ऋतं वा । त्रिष्टुप् ।

कथा महामवृधत्कस्य होतुर्यज्ञं जुषाणो ऽअभि सोममूधः ।
पिबन्नुशानो जुषमाणो ऽअन्धो ववक्ष ऽऋष्वः शुचते धनाय ॥१॥
कथा । महाम् । अवृधत् । कस्य । होतुः । यज्ञम् । जुषाणः ।
अभि । सोमम् । ऊधः ॥ पिबन् । उशानः । जुषमाणः ।
अन्धः । ववक्षे । ऋष्वः । शुचते । धनाय ॥१॥

को ऽअस्य वीरः सधमादमाप समानंश सुमतिभिः को ऽअस्य ।
कदस्य चित्रं चिकिते कदूती वृधे भुवच्छशमानस्य यज्योः ॥२॥
कः । अस्य । वीरः । सध०मादम् । आप । सम् । आनंश ।
सुमति०भिः । कः । अस्य ॥ कत् । अस्य । चित्रम् । चिकिते ।
कत् । ऊती । वृधे । भुवत् । शशमानस्य । यज्योः ॥२॥

कथा शृणोति हूयमानमिन्द्रः कथा शृण्वन्नवसामस्य वेद ।
का ऽअस्य पूर्वीरुपमातयो ह कथैनमाहुः पपुरिं जरित्रे ॥३॥
कथा । शृणोति । हूयमानम् । इन्द्रः । कथा । शृण्वन् ।
अवसाम् । अस्य । वेद ॥ काः । अस्य । पूर्वीः । उप०मातयः ।
ह । कथा । एनम् । आहुः । पपुरिम् । जरित्रे ॥३॥

कथा सबाधः शशमानो ऽअस्य नशदभि द्रविणं दीध्यानः ।
देवो भुवन्नवेदा म ऽऋतानां नमो जगृभ्वाँ ऽअभि यज्जुजोषत् ॥४॥
कथा । स०बाधः । शशमानः । अस्य । नशत् । अभि ।
द्रविणम् । दीध्यानः ॥ देवः । भुवत् । नवेदाः । मे ।
ऋतानाम् । नमः । जगृभ्वान् । अभि । यत् । जुजोषत् ॥४॥

कथा कदस्या ऽउषसो व्युष्टौ देवो मर्त्तस्य सख्यं जुजोष ।
कथा कदस्य सख्यं सखिभ्यो ये ऽअस्मिन्कामं सुयुजं ततस्रे ॥५॥ (९)
कथा । कत् । अस्याः । उषसः । वि०उष्टौ । देवः । मर्त्तस्य ।
सख्यम् । जुजोष ॥ कथा । कत् । अस्य । सख्यम् । सखि०भ्यः ।
ये । अस्मिन् । कामम् । सु०युजम् । ततस्रे ॥५॥

किमादमत्रं सख्यं सखिभ्यः कदा नु ते भ्रात्रं प्र ब्रवाम ।
श्रिये सुदृशो वपुरस्य सर्गाः स्वर्ण्ण चित्रतममिष ऽआ गोः ॥६॥
किम् । आत् । अमत्रम् । सख्यम् । सखि०भ्यः । कदा । नु ।
ते । भ्रात्रम् । प्र । ब्रवाम ॥ श्रिये । सु०दृशः । वपुः । अस्य ।
सर्गाः । स्वः । न । चित्र०तमम् । इषे । आ । गोः ॥६॥

द्रुहं जिघांसन्ध्वरसमनिन्द्रां तेतिक्ते तिग्मा तुजसे ऽअनीका ।
ऋणा चिद्यत्र ऽऋणया न ऽउग्रो दूरे ऽअज्ञाता ऽउषसो बबाधे ॥७॥
द्रुहम् । जिघांसन् । ध्वरसम् । अनिन्द्राम् । तेतिक्ते । तिग्मा ।
तुजसे । अनीका ॥ ऋणा । चित् । यत्र । ऋण०याः । नः ।
उग्रः । दूरे । अज्ञाताः । उषसः । बबाधे ॥७॥

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति ।
ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान ऽआयोः ॥८॥

ऋतस्य । हि । शुरु०धः । सन्ति । पूर्वीः । ऋतस्य ।
धीतिः । वृजिनानि । हन्ति ॥ ऋतस्य । श्लोकः ।
बधिरा । ततर्द । कर्णा । बुधानः । शुचमानः । आयोः ॥८॥

ऋतस्य दृळ्हा धरुणानि सन्ति पुरूणि चन्द्रा वपुषे वपूंषि ।
ऋतेन दीर्घमिषणन्त पृक्ष ऽऋतेन गाव ऽऋतमा विवेशुः ॥९॥
ऋतस्य । दृळ्हा । धरुणानि । सन्ति । पुरूणि ।
चन्द्रा । वपुषे । वपूंषि ॥ ऋतेन । दीर्घम् । इषणन्त ।
पृक्षः । ऋतेन । गावः । ऋतम् । आ । विवेशुः ॥९॥

ऋतं येमान ऽऋतमिद्वनोत्यृतस्य शुष्मस्तुरया ऽउ गव्युः ।
ऋताय पृथ्वी बहुले गभीरे ऽऋताय धेनू परमे दुहाते ॥१०॥
ऋतम् । येमानः । ऋतम् । इत् । वनोति । ऋतस्य । शुष्मः ।
तुर०याः । ऊँ इति । गव्युः ॥ ऋताय । पृथ्वी इति । बहुले इति ।
गभीरे इति । ऋताय । धेनू इति । परमे इति । दुहाते इति ॥१०॥

नू ष्टुत ऽइन्द्र नू गृणान ऽइषं जरित्रे नद्यो ३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥ ( १० ) [ ८०९ ]
नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः ।
न । पीपेरिति पीपेः ॥ अकारि । ते । हरि०वः । ब्रह्म ।
नव्यम् । धिया । स्याम । रथ्यः । सदा०साः ॥११॥

## ( २४ )

११ वामदेवो गौतमः । इन्द्रः । त्रिष्टुप् , १० अनुष्टुप् ।

का सुष्टुतिः शवसः सूनुमिन्द्रमर्वाचीनं राधस ऽआ ववर्त्तत् ।
ददिर्हि वीरो गृणते वसूनि स गोपतिर्निष्षिधां नो जनासः ॥१॥

का । सु॒ऽस्तु॒तिः । शव॑सः । सू॒नुम् । इन्द्र॑म् । अ॒र्वा॒ची॒नम् ।
राध॑से । आ । व॒व॒र्त॒त् ॥ द॒दिः । हि । वी॒रः । गृ॒ण॒ते ।
वसू॑नि । सः । गोऽप॑तिः । निः॒ऽसिधा॑म् । नः॒ । ज॒ना॒सः॒ ॥१॥

**स वृ॒त्रह॒त्ये॒ हव्यः॒ स ऽईड्यः॒ स सुष्टु॑त॒ ऽइन्द्रः॒ स॒त्यरा॑धाः ।**
**स याम॒न्ना म॒घवा॒ मर्त्या॑य ब्रह्मण्य॒ते सुष्व॑ये॒ वरि॑वो धात् ॥२॥**
सः । वृ॒त्र॒ऽह॒त्ये॑ । हव्यः॑ । सः । ईड्यः॑ । सः । सु॒ऽस्तु॑तः ।
इन्द्रः॑ । स॒त्यऽरा॑धाः ॥ सः । याम॑न् । आ । म॒घऽवा॑ ।
मर्त्या॑य । ब्र॒ह्म॒ण्य॒ते । सुष्व॑ये । वरि॑वः । धा॒त् ॥२॥

**तमिन्न॒रो॒ वि ह्व॑यन्ते सम॒ीके॒ रि॑रि॒क्वांस॑स्त॒न्वः॑ कृण्व॒त॒ त्राम् ।**
**मि॒थो यत्त्या॒गमु॒भया॑सो॒ ऽअग्म॒न्नर॑स्तो॒कस्य॒ तन॑यस्य सा॒तौ ॥३॥**
तम् । इत् । नरः॑ । वि । ह्व॒य॒न्ते॒ । स॒म्ऽई॒के । रि॒रि॒क्वांसः॑ ।
त॒न्वः॑ । कृ॒ण्व॒त॒ । त्राम् ॥ मि॒थः । यत् । त्या॒गम् । उ॒भया॑सः ।
अग्म॑न् । नरः॑ । तो॒कस्य॑ । तन॑यस्य । सा॒तौ ॥३॥

**क्र॒तू॒यन्ति॑ क्षि॒तयो॒ योग॑ ऽउग्राशु॒षा॒णासो॑ मि॒थो ऽअर्ण॑सातौ ।**
**सं यद्विशोऽव॑वृत्रन्त यु॒ध्मा ऽआदिन्नेम॑ ऽइन्द्रयन्ते ऽअ॒भीके॑ ॥४॥**
क्र॒तु॒ऽयन्ति॑ । क्षि॒तय॑ः । योगे॑ । उ॒ग्र॒ । आ॒शु॒षा॒णास॑ः ।
मि॒थः । अर्ण॑ऽसातौ ॥ सम् । यत् । विश॑ः । अव॑वृत्रन्त ।
यु॒ध्माः । आत् । इत् । नेमे॑ । इ॒न्द्र॒य॒न्ते॒ । अ॒भीके॑ ॥४॥

**आदिद्ध॒ नेम॑ ऽइन्द्रि॒यं य॑जन्त॒ ऽआदित्प॒क्तिः पु॑रो॒ळाश॑ रिरिच्यात् ।**
**आदित्सोमो॒ वि प॑पृच्या॒दसु॑ष्वी॒नादिज्जु॑जोष वृ॒षभं यज॑ध्यै ॥५॥ (११)**
आत् । इत् । ह॒ । नेमे॑ । इ॒न्द्रि॒यम् । य॒ज॒न्ते॒ । आत् । इत् ।
प॒क्तिः । पु॒रो॒ळाश॑म् । रि॒रि॒च्या॒त् ॥ आत् । इ॒त् । सोम॑ः । वि ।
प॒पृ॒च्या॒त् । असु॑स्वीन् । आत् । इत् । जु॒जो॒ष॒ । वृ॒ष॒भम् । यज॑ध्यै ॥५॥

**कृणोत्यस्मै वरिवो य ऽइत्थेन्द्राय सोममुशते सुनोति ।**
**सध्रीचीनेन मनसाविवेनं तमित्सखायं कृणुते समत्सु ॥६॥**
कृणोति । अस्मै । वरिवः । यः । इत्था । इन्द्राय । सोमम् ।
उशते । सुनोति ॥ सध्रीचीनेन । मनसा । अवि०वेनम् ।
तम् । इत् । सखायम् । कृणुते । समत्०सु ॥६॥

**य ऽइन्द्राय सुनवत्सोममद्य पचात्पक्तीरुत भृज्जाति धानाः ।**
**प्रति मनायोरुचथानि हर्यन्तस्मिन्दधद्वृषणं शुष्ममिन्द्रः ॥७॥**
यः । इन्द्राय । सुनवत् । सोमम् । अद्य । पचात् । पक्तीः ।
उत । भृज्जाति । धानाः ॥ प्रति । मनायोः । उचथानि ।
हर्यन् । तस्मिन् । दधत् । वृषणम् । शुष्मम् । इन्द्रः ॥७॥

**यदा समर्यं व्यचेदृघावा दीर्घं यदाजिमभ्यख्यदर्यः ।**
**अचिक्रदद्वृषणं पत्न्यच्छा दुरोण ऽआ निशितं सोमसुद्भिः ॥८॥**
यदा । स०मर्यम् । वि । अचेत् । ऋघावा । दीर्घम् । यत् ।
आजिम् । अभि । अख्यत् । अर्यः ॥ अचिक्रदत् । वृषणम् ।
पत्नी । अच्छ । दुरोणे । आ । नि०शितम् । सोमसुत्०भिः ॥८॥

**भूयसा वस्नमचरत्कनीयोऽविक्रीतो ऽअकानिषं पुनर्यन् ।**
**स भूयसा कनीयो नारिरेचीद्दीना दक्षा वि दुहन्ति प्र वाणम् ॥९॥**
भूयसा । वस्नम् । अचरत् । कनीयः । अवि०क्रीतः ।
अकानिषम् । पुनः । यन् ॥ सः । भूयसा । कनीयः । न ।
अरिरेचीत् । दीनाः । दक्षाः । वि । दुहन्ति । प्र । वाणम् ॥९॥

**क ऽइमं दशभिर्ममेन्द्रं क्रीणाति धेनुभिः ।**
**यदा वृत्राणि जङ्घनदथैनं मे पुनर्ददत् ॥१०॥**

कः । इमम् । दश०भिः । मम । इन्द्रम् । क्रीणाति । धेनु०भिः ॥
यदा । वृत्राणि । जङ्घनत् । अथ । एनम् । मे । पुनः । ददत् ॥१०॥

**नू ष्टुत ऽईन्द्र नू गृणान ऽइषं जरित्रे नद्यो ३ न पीपेः ।**
**अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥ (१२) [८२०]**
नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे ।
नद्यः । न । पीपेरिति पीपेः ॥ अकारि । ते । हरि०वः ।
ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदा०साः ॥११॥

## ( २५ )

**८ वामदेवो गौतमः । इन्द्रः । त्रिष्टुप् ।**

**को ऽअद्य नर्यो देवकाम ऽउशन्निन्द्रस्य सख्यं जुजोष ।**
**को वा महेऽवसे पार्याय समिद्धे ऽअग्नौ सुतसोम ऽईट्टे ॥१॥**
कः । अद्य । नर्यः । देव०कामः । उशन् । इन्द्रस्य ।
सख्यम् । जुजोष ॥ कः । वा । महे । अवसे ।
पार्याय । सम्०इद्धे । अग्नौ । सुत०सोमः । ईट्टे ॥१॥

**को नानाम वचसा सोम्याय मनायुर्वा भवति वस्त ऽउस्राः ।**
**क ऽइन्द्रस्य युज्यं कः सखित्वं को भ्रात्रं वष्टि कवये क ऽऊती ॥२॥**
कः । ननाम । वचसा । सोम्याय । मनायुः । वा । भवति ।
वस्ते । उस्राः ॥ कः । इन्द्रस्य । युज्यम् । कः । सखि०त्वम् ।
कः । भ्रात्रम् । वष्टि । कवये । कः । ऊती ॥२॥

**को देवानामवो ऽअद्या वृणीते क ऽआदित्याँ ऽअदितिं ज्योतिरीट्टे ।**
**कस्याश्विनाविन्द्रो ऽअग्निः सुतस्यांशोः पिबन्ति मनसाविवेनम् ॥३॥**
कः । देवानाम् । अवः । अद्य । वृणीते । कः । आदित्यान् ।
अदितिम् । ज्योतिः । ईट्टे ॥ कस्य । अश्विनौ । इन्द्रः । अग्निः ।
सुतस्य । अंशोः । पिबन्ति । मनसा । अवि०वेनम् ॥३॥

तस्मा ऽअग्निर्भारतः शर्म यंसज्ज्योक्पश्यात्सूर्यमुच्चरन्तम् ।
य ऽइन्द्राय सुनवामेत्याह नरे नर्याय नृतमाय नृणाम् ॥४॥
तस्मै । अग्निः । भारतः । शर्म । यंसत् । ज्योक् ।
पश्यात् । सूर्यम् । उत्०चरन्तम् ॥ यः । इन्द्राय । सुनवाम ।
इति । आह । नरे । नर्याय । नृ०तमाय । नृणाम् ॥४॥

न तं जिनन्ति बहवो न दभ्रा ऽउर्वस्मा ऽअदितिः शर्म यंसत् ।
प्रियः सुकृत्प्रिय ऽइन्द्रे मनायुः प्रियः सुप्रावीः प्रियो ऽअस्य सोमी ॥५॥ ( १३ )
न । तम् । जिनन्ति । बहवः । न । दभ्राः । उरु । अस्मै ।
अदितिः । शर्म । यंसत् ॥ प्रियः । सु०कृत् । प्रियः । इन्द्रे ।
मनायुः । प्रियः । सुप्र०अवीः । प्रियः । अस्य । सोमी ॥५॥

सुप्राव्यः प्राशुषाळेष वीरः सुष्वेः पक्तिं कृणुते केवलेन्द्रः ।
नासुष्वेरापिर्न सखा न जामिर्दुष्प्राव्योऽवहन्तेदवाचः ॥६॥
सुप्र०अव्यः । प्राशुषाट् । एषः । वीरः । सुस्वेः । पक्तिम् ।
कृणुते । केवला । इन्द्रः ॥ न । असुस्वेः । आपिः । न । सखा ।
न । जामिः । दुः०प्र०अव्यः । अव०हन्ता । इत् । अवाचः ॥६॥

न रेवता पणिना सख्यमिन्द्रोऽसुन्वता सुतपाः सं गृणीते ।
आस्य वेदः खिदति हन्ति नग्नं वि सुष्वये पक्तये केवलो भूत् ॥७॥
न । रेवता । पणिना । सख्यम् । इन्द्रः । असुन्वता ।
सुत०पाः । सम् । गृणीते ॥ आ । अस्य । वेदः । खिदति ।
हन्ति । नग्नम् । वि । सुस्वये । पक्तये । केवलः । भूत् ॥७॥

इन्द्रं परेऽवरे मध्यमास ऽइन्द्रं यान्तोऽवसितास ऽइन्द्रम् ।
इन्द्रं क्षियन्त ऽउत युध्यमाना ऽइन्द्रं नरो वाजयन्तो हवन्ते ॥८॥ ( १४ ) [ ८२८ ]

इन्द्रम् । परे । अवरे । मध्यमासः । इन्द्रम् । यान्तः ।
अव०सितासः । इन्द्रम् ॥ इन्द्रम् । क्षियन्तः । उत ।
युध्यमानाः । इन्द्रम् । नरः । वाजयन्तः । हवन्ते ॥८॥

# ( २६ )

**७ वामदेवो गौतमः । १-३ इन्द्रः, आत्मा वा, ४-७ श्येनः । त्रिष्टुप् ।**

**अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः ।**
**अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा ॥१॥**

अहम् । मनुः । अभवम् । सूर्यः । च । अहम् । कक्षीवान् ।
ऋषिः । अस्मि । विप्रः ॥ अहम् । कुत्सम् । आर्जुनेयम् ।
नि । ऋञ्जे । अहम् । कविः । उशना । पश्यत । मा ॥१॥

**अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय ।**
**अहमपो ऽअनयं वावशाना मम देवासो ऽअनु केतमायन् ॥२॥**

अहम् । भूमिम् । अददाम् । आर्याय । अहम् । वृष्टिम् ।
दाशुषे । मर्त्याय ॥ अहम् । अपः । अनयम् । ववशानाः ।
मम । देवासः । अनु । केतम् । आयन् ॥२॥

**अहं पुरो मन्दसानो व्यैरं नव साकं नवतीः शम्बरस्य ।**
**शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावम् ॥३॥**

अहम् । पुरः । मन्दसानः । वि । ऐरम् । नव । साकम् ।
नवतीः । शम्बरस्य ॥ शत०तमम् । वेश्यम् । सर्व०ताता ।
दिवः२दासम् । अतिथि०ग्वम् । यत् । आवम् ॥३॥

**प्र सु ष विभ्यो मरुतो विरस्तु प्र श्येनः श्येनेभ्य ऽआशुपत्वा ।**
**अचक्रया यत्स्वधया सुपर्णो हव्यं भरन्मनवे देवजुष्टम् ॥४॥**

प्र । सु । सः । वि॰भ्य॑ः । मरुतः । विः । अस्तु । प्र ।
श्येनः । श्येनेभ्यः । आशु॰पत्वा ॥ अचक्रया । यत् ।
स्वधया । सु॰पर्णः । हव्यम् । भरत् । मनवे । देव॰जुष्टम् ॥४॥

**भरद्यदि विरतो वेविजानः पथोरुणा मनोजवा ऽअसर्जि ।**
**तूयं ययौ मधुना सोम्येनोत श्रवो विविदे श्येनो ऽअत्र ॥५॥**

भरत् । यदि । विः । अतः । वेविजानः । पथा । उरुणा ।
मनः॰जवाः । असर्जि ॥ तूयम् । ययौ । मधुना । सोम्येन ।
उत । श्रवः । विविदे । श्येनः । अत्र ॥५॥

**ऋजीपी श्येनो ददमानो ऽअंशुं परावतः शकुनो मन्द्रं मदम् ।**
**सोमं भरद्दादृहाणो देवावान्दिवो ऽअमुष्मादुत्तरादादाय ॥६॥**

ऋजीपी । श्येनः । ददमानः । अंशुम् । परा॰वतः ।
शकुनः । मन्द्रम् । मदम् ॥ सोमम् । भरत् । ददृहाणः ।
देव॰वान् । दिवः । अमुष्मात् । उत्॰तरात् । आ॰दाय ॥६॥

**आदाय श्येनो ऽअभरत्सोमं सहस्रं सवाँ ऽअयुतं च साकम् ।**
**अत्रा पुरंधिरजहादरातीर्मदे सोमस्य मूरा ऽअमूरः ॥७॥ ( १५ )** [ ८३५ ]

आ॰दाय । श्येनः । अभरत् । सोमम् । सहस्रम् । सवान् ।
अयुतम् । च । साकम् ॥ अत्र । पुरम्॰धिः । अजहात् ।
अरातीः । मदे । सोमस्य । मूराः । अमूरः ॥७॥

## ( २७ )

५ वामदेवो गौतमः । श्येनः, ५ इन्द्रो वा । त्रिष्टुप्, ५ शक्वरी ।

**गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।**
**शतं मा पुर ऽआयसीररक्षन्नध श्येनो जवसा निरदीयम् ॥१॥**

गर्भे । नु । सन् । अनु । एषाम् । अवेदम् । अहम् ।
देवानाम् । जनिमानि । विश्वा ॥ शतम् । मा । पुरः ।
आयसीः । अरक्षन् । अध । श्येनः । जवसा । निः । अदीयम् ॥१॥

**न घा स मामप जोषं जभाराभीमास त्वक्षसा वीर्येण ।**
**ईर्मा पुरंधिरजहादरातीरुत वाताँ ऽअतरच्छूशुवानः ॥२॥**
न । घ । सः । माम् । अप । जोषम् । जभार । अभि । ईम् ।
आस । त्वक्षसा । वीर्येण ॥ ईर्मा । पुरम्०धिः । अजहात् ।
अरातीः । उत । वातान् । अतरत् । शूशुवानः ॥२॥

**अव यच्छ्येनो ऽअस्वनीदध द्योर्वि यद्यदि वात ऽऊहुः पुरंधिम् ।**
**सृजद्यदस्मा ऽअव ह क्षिपज्ज्यां कृशानुरस्ता मनसा भुरण्यन् ॥३॥**
अव । यत् । श्येनः । अस्वनीत् । अध । द्योः । वि । यत् ।
यदि । वा । अतः । ऊहुः । पुरम्०धिम् ॥ सृजत् । यत् । अस्मै ।
अव । ह । क्षिपत् । ज्याम् । कृशानुः । अस्ता । मनसा । भुरण्यन् ॥३॥

**ऋजिप्य ऽईमिन्द्रावतो न भुज्युं श्येनो जभार बृहतो ऽअधि ष्णोः ।**
**अन्तः पतत्पतत्र्यस्य पर्णमध यामनि प्रसितस्य तद्वेः ॥४॥**
ऋजिप्यः । ईम् । इन्द्र०वतः । न । भुज्युम् । श्येनः । जभार ।
बृहतः । अधि । स्नोः ॥ अन्तरिति । पतत् । पतत्रि । अस्य ।
पर्णम् । अध । यामनि । प्र०सितस्य । तत् । वेरिति वेः॥४॥

**अध श्वेतं कलशं गोभिरक्तमापिप्यानं मघवा शुक्रमन्धः ।**
**अध्वर्युभिः प्रयतं मध्वो ऽअग्रमिन्द्रो मदाय प्रति धत्पिबध्यै ।**
**शूरो मदाय प्रति धत्पिबध्यै ॥५॥ ( १६ )** **[ ८४० ]**

अधं । श्वेतम् । कलशम् । गोभिः । अक्तम् । आ०पिप्यानम् । मघ०वा ।
शुक्रम् । अन्धः ॥ अध्वर्यु०भिः । प्र०यतम् । मध्वः । अग्रम् । इन्द्रः ।
मदाय । प्रति । धत् । पिबध्यै ॥ शूरः । मदाय । प्रति । धत् । पिबध्यै ॥५॥

# ( २८ )

५ वामदेवो गौतमः । इन्द्रः, इन्द्रासोमौ वा । त्रिष्टुप् ।

त्वा युजा तव तत्सोम सख्य ऽइन्द्रो ऽअपो मनवे सस्रुतस्कः ।
अहन्नहिमरिणात्सप्त सिन्धूनपावृणोदपिहितेव खानि ॥१॥
त्वा । युजा । तव । तत् । सोम । सख्ये । इन्द्रः । अपः ।
मनवे । स०स्रुतः । करिति कः ॥ अहन् । अहिम् । अरिणात् ।
सप्त । सिन्धून् । अप । अवृणोत् । अपिहिताऽइव । खानि ॥१॥

त्वा युजा नि खिदत्सूर्यस्येन्द्रश्चक्रं सहसा सद्य ऽइन्दो ।
अधि ष्णुना बृहता वर्त्तमानं महो द्रुहो ऽअप विश्वायु धायि ॥२॥
त्वा । युजा । नि । खिदत् । सूर्यस्य । इन्द्रः । चक्रम् ।
सहसा । सद्यः । इन्दो इति ॥ अधि । स्नुना । बृहता ।
वर्त्तमानम् । महः । द्रुहः । अप । विश्व०आयु । धायि ॥२॥

अहन्निन्द्रो ऽअदहदग्निरिन्दो पुरा दस्यून्मध्यंदिनादभीके ।
दुर्गे दुरोणे क्रत्वा न यातां पुरू सहस्रा शर्वा नि बर्हीत् ॥३॥
अहन् । इन्द्रः । अदहत् । अग्निः । इन्दो इति । पुरा ।
दस्यून् । मध्यन्दिनात् । अभीके ॥ दुःऽगे । दुरोणे । क्रत्वा ।
न । याताम् । पुरु । सहस्रा । शर्वा । नि । बर्हीत् ॥३॥

विश्वस्मात्सीमधमाँ ऽइन्द्र दस्यून्विशो दासीरकृणोरप्रशस्ताः ।
अबाधेथाममृणतं नि शत्रूनविन्देथामपचितिं वधत्रैः ॥४॥

उत । सिन्धुम् । वि॰बाल्यम् । वि॰तस्थानाम् । अधि । क्षमि ॥
परि । स्थाः । इन्द्र । मायया ॥१२॥

**उत शुष्णस्य धृष्णुया प्र मृक्षो ऽअभि वेदनम् ।**
**पुरो यदस्य संपिणक् ॥१३॥**
उत । शुष्णस्य । धृष्णु॰या । प्र । मृक्षः । अभि । वेदनम् ॥
पुरः । यत् । अस्य । सम्॰पिणक् ॥१३॥

**उत दासं कौलितरं बृहतः पर्वतादधि ।**
**अवाहन्निन्द्र शम्बरम् ॥१४॥**
उत । दासम् । कौलि॰तरम् । बृहतः । पर्वतात् । अधि ॥
अव । अहन् । इन्द्र । शम्बरम् ॥१४॥

**उत दासस्य वर्चिनः सहस्राणि शतावधीः ।**
**अधि पञ्च प्रधीँरिव ॥१५॥ ( २१ )**
उत । दासस्य । वर्चिनः । सहस्राणि । शता । अवधीः ॥
अधि । पञ्च । प्रधीन्ऽइव ॥१५॥

**उत त्यं पुत्रमग्रुवः परावृक्तं शतक्रतुः ।**
**उक्थेष्विन्द्र ऽआभजत् ॥१६॥**
उत । त्यम् । पुत्रम् । अग्रुवः । परा॰वृक्तम् । शत॰क्रतुः ॥
उक्थेषु । इन्द्रः । आ । अभजत् ॥१६॥

**उत त्या तुर्वशायदू ऽअस्नातारा शचीपतिः ।**
**इन्द्रो विद्वाँ ऽअपारयत् ॥१७॥**

उत । त्या । तुर्वशायदू इति । अस्नातारा । शचीऽपतिः ॥
इन्द्रः । विद्वान् । अपारयत् ॥१७॥

**उत त्या सद्य ऽआर्या सरयोरिन्द्र पारतः ।**
**अर्णाचित्ररथावधीः ॥१८॥**
उत । त्या । सद्यः । आर्या । सरयोः । इन्द्र । पारतः ॥
अर्णाचित्ररथा । अवधीः ॥१८॥

**अनु द्वा जहिता नयोऽन्धं श्रोणं च वृत्रहन् ।**
**न तत्ते सुम्नमष्टवे ॥१९॥**
अनु । द्वा । जहिता । नयः । अन्धम् । श्रोणम् । च । वृत्रऽहन् ॥
न । तत् । ते । सुम्नम् । अष्टवे ॥१९॥

**शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत् ।**
**दिवोदासाय दाशुषे ॥२०॥ ( २२ )**
शतम् । अश्मन्ऽमयीनाम् । पुराम् । इन्द्रः । वि । आस्यत् ॥
दिवःऽदासाय । दाशुषे ॥२०॥

**अस्वापयद्दभीतये सहस्रा त्रिंशतं हथैः ।**
**दासानामिन्द्रो मायया ॥२१॥**
अस्वापयत् । दभीतये । सहस्रा । त्रिंशतम् । हथैः ॥
दासानाम् । इन्द्रः । मायया ॥२१॥

**स घेदुतासि वृत्रहन्त्समान ऽइन्द्र गोपतिः ।**
**यस्ता विश्वानि चिच्युषे ॥२२॥**

सः । घ । इत् । उत । असि । वृत्र०हन् । समानः । इन्द्र । गो०पतिः ॥
यः । ता । विश्वानि । चिच्युषे ॥२२॥

**उत नूनं यदिन्द्रियं करिष्या ऽइन्द्र पौंस्यम् ।**
**अद्या नकिष्टदा मिनत् ॥२३॥**
उत । नूनम् । यत् । इन्द्रियम् । करिष्याः । इन्द्र । पौंस्यम् ॥
अद्य । नकिः । तत् । आ । मिनत् ॥२३॥

**वामंवामं त ऽआदुरे देवो ददात्वर्यमा ।**
**वामं पूषा वामं भगो वामं देवः करूळती ॥२४॥ ( २३ )** [ ८७४ ]
वामम्०वामम् । ते । आ०दुरे । देवः । ददातु । अर्यमा ॥
वामम् । पूषा । वामम् । भगः । वामम् । देवः । करूळती ॥२४॥

## ( ३१ )

१५ वामदेवो गौतमः । इन्द्रः । गायत्री, ३ पादनिवृत् ।

**कया नश्चित्र ऽआ भुवदूती सदावृधः सखा ।**
**कया शचिष्ठया वृता ॥१॥**
कया । नः । चित्रः । आ । भुवत् । ऊती । सदा०वृधः । सखा ॥
कया । शचिष्ठया । वृता ॥१॥

**कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।**
**दृळ्हा चिदारुजे वसु ॥२॥**
कः । त्वा । सत्यः । मदानाम् । मंहिष्ठः । मत्सत् । अन्धसः ॥
दृळ्हा । चित् । आ०रुजे । वसु ॥२॥

अभी षु णः सखीनामविता जरितॄणाम् ।
शतं भवास्यूतिभिः ॥३॥
अभि । सु । नः । सखीनाम् । अविता । जरितॄणाम् ॥
शतम् । भवासि । ऊति०भिः ॥३॥

अभी न ऽआ ववृत्स्व चक्रं न वृत्तमर्वतः ।
नियुद्भिश्चर्षणीनाम् ॥४॥
अभि । नः । आ । ववृत्स्व । चक्रम् । न । वृत्तम् । अर्वतः ॥
नियुत्०भिः । चर्षणीनाम् ॥४॥

प्रवता हि क्रतूनामा हा पदेव गच्छसि ।
अभक्षि सूर्ये सचा ॥५॥ ( २४ )
प्र०वता । हि । क्रतूनाम् । आ । ह । पदाऽइव । गच्छसि ॥
अभक्षि । सूर्ये । सचा ॥५॥

सं यत्त ऽइन्द्र मन्यवः सं चक्राणि दधन्विरे ।
अध त्वे ऽअध सूर्ये ॥६॥
सम् । यत् । ते । इन्द्र । मन्यवः । सम् । चक्राणि । दधन्विरे ॥
अध । त्वे इति । अध । सूर्ये ॥६॥

उत स्मा हि त्वामाहुरिन्मघवानं शचीपते ।
दातारमविदीधयुम् ॥७॥
उत । स्म । हि । त्वाम् । आहुः । इत् । मघ०वानम् । शची०पते ॥
दातारम् । अवि०दीधयुम् ॥७॥

विश्वस्मात् । सीम् । अधमान् । इन्द्र । दस्यून् । विशः ।
दासीः । अकृणोः । अप्र॰शस्ताः ॥ अबाधेथाम् । अमृणतम् ।
नि । शत्रून् । अविन्देथाम् । अप॰चितिम् । वधत्रैः ॥४॥

**एवा सत्यं मघवाना युवं तदिन्द्रश्च सोमोर्वमश्व्यं गोः ।**
**आदर्दृतमपिहितान्यश्ना रिरिचथुः क्षाश्चित्ततृदाना ॥५॥ (१७) [८४५]**
एव । सत्यम् । मघ॰वाना । युवम् । तत् । इन्द्रः । च । सोम ।
ऊर्वम् । अश्व्यम् । गोः ॥ आ । अदर्दृतम् । अपि॰हितानि ।
अश्ना । रिरिचथुः । क्षाः । चित् । ततृदाना ॥५॥

## ( २९ )

**५ वामदेवो गौतमः । इन्द्रः । त्रिष्टुप् ।**

**आ नः स्तुत ऽउप वाजेभिरूती ऽइन्द्र याहि हरिभिर्मन्दसानः ।**
**तिरश्चिदर्यः सवना पुरूण्याङ्गूषेभिर्गृणानः सत्यराधाः ॥१॥**
आ । नः । स्तुतः । उप । वाजेभिः । ऊती । इन्द्र । याहि ।
हरि॰भिः । मन्दसानः ॥ तिरः । चित् । अर्यः । सवना ।
पुरूणि । आङ्गूषेभिः । गृणानः । सत्य॰राधाः ॥१॥

**आ हि ष्मा याति नर्यश्चिकित्वान्हूयमानः सोतृभिरुप यज्ञम् ।**
**स्वश्वो यो ऽअभीरुर्मन्यमानः सुष्वाणेभिर्मदति सं ह वीरैः ॥२॥**
आ । हि । स्म । याति । नर्यः । चिकित्वान् । हूयमानः ।
सोतृ॰भिः । उप । यज्ञम् ॥ सु॰अश्वः । यः । अभीरुः ।
मन्यमानः । सु॰स्वानेभिः । मदति । सम् । ह । वीरैः ॥२॥

**श्रावयेदस्य कर्णा वाजयध्यै जुष्टामनु प्र दिशं मन्दयध्यै ।**
**उद्वावृषाणो राधसे तुविष्मान्करन्न ऽइन्द्रः सुतीर्थाभयं च ॥३॥**

श्रवय । इत् । अस्य । कर्णा । वाजयध्यै । जुष्टाम् । अनु ।
प्र । दिशम् । मन्दयध्यै ॥ उत्ऽववृषाणः । राधसे । तुविष्मान् ।
करत् । नः । इन्द्रः । सुऽतीर्था । अभयम् । च ॥३॥

**अच्छा यो गन्ता नाधमानमूती ऽइत्था विप्रं हवमानं गृणन्तम् ।**
**उप त्मनि दधानो धुर्या ऽ शून्त्सहस्राणि शतानि वज्रबाहुः ॥४॥**
अच्छ । यः । गन्ता । नाधमानम् । ऊती । इत्था ।
विप्रम् । हवमानम् । गृणन्तम् ॥ उप । त्मनि । दधानः ।
धुरि । आशून् । सहस्राणि । शतानि । वज्रऽबाहुः ॥४॥

**त्वोतासो मघवन्निन्द्र विप्रा वयं ते स्याम सूरयो गृणन्तः ।**
**भेजानासो बृहद्दिवस्य राय ऽआकाय्यस्य दावने पुरुक्षोः ॥५॥ ( १८ ) [ ८५० ]**
त्वाऽऊतासः । मघऽवन् । इन्द्र । विप्राः । वयम् । ते ।
स्याम । सूरयः । गृणन्तः ॥ भेजानासः । बृहत्ऽदिवस्य ।
रायः । आऽकाय्यस्य । दावने । पुरुऽक्षोः ॥५॥

## ( ३० )

२४ वामदेवो गौतमः । इन्द्रः, ९-११ इन्द्रोषसौ । गायत्री, ८, २४ अनुष्टुप् ।

**नकिरिन्द्र त्वदुत्तरो न ज्यायाँ ऽअस्ति वृत्रहन् ।**
**नकिरेवा यथा त्वम् ॥१॥**
नकिः । इन्द्र । त्वत् । उत्ऽतरः । न । ज्यायान् । अस्ति ।
वृत्रऽहन् ॥ नकिः । एव । यथा । त्वम् ॥१॥

**सत्रा ते ऽअनु कृष्टयो विश्वा चक्रेव वावृतुः ।**
**सत्रा महाँ ऽअसि श्रुतः ॥२॥**

सत्रा । ते । अनु । कृष्टयः । विश्वा । चक्राऽइव । ववृतुः ॥
सत्रा । महान् । असि । श्रुतः ॥२॥

**विश्वे चनेदना त्वा देवास ऽइन्द्र युयुधुः ।**
**यदहा नक्तमातिरः ॥३॥**
विश्वे । चन । इत् । अना । त्वा । देवासः । इन्द्र । युयुधुः ॥
यत् । अहा । नक्तम् । आ । अतिरः ॥३॥

**यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते ।**
**मुषाय ऽइन्द्र सूर्यम् ॥४॥**
यत्र । उत । बाधितेभ्यः । चक्रम् । कुत्साय । युध्यते ॥
मुषायः । इन्द्र । सूर्यम् ॥४॥

**यत्र देवाँ ऽऋघायतो विश्वाँ ऽअयुध्य ऽएक ऽइत् ।**
**त्वमिन्द्र वनूँरहन् ॥५॥ ( १९ )**
यत्र । देवान् । ऋघायतः । विश्वान् । अयुध्यः । एकः । इत् ॥
त्वम् । इन्द्र । वनून् । अहन् ॥५॥

**यत्रोत मर्त्याय कमरिणा ऽइन्द्र सूर्यम् ।**
**प्रावः शचीभिरेतशम् ॥६॥**
यत्र । उत । मर्त्याय । कम् । अरिणाः । इन्द्र । सूर्यम् ॥
प्र । आवः । शचीभिः । एतशम् ॥६॥

**किमादुतासि वृत्रहन्मघवन्मन्युमत्तमः ।**
**अत्राह दानुमातिरः ॥७॥**

किम् । आत् । उत । असि । वृत्र॰हन् । मघ॰वन् । मन्युमत्॰तमः ॥
अत्र । अह । दानुम् । आ । अतिरः ॥७॥

**एतद्घेदुत वीर्य१मिन्द्र चकर्थ पौंस्यम् ।**
**स्त्रियं यद्दुर्हणायुवं वधीर्दुहितरं दिवः ॥८॥**
एतत् । घ । इत् । उत । वीर्यम् । इन्द्र । चकर्थ । पौंस्यम् ॥
स्त्रियम् । यत् । दुः२हनायुवम् । वधीः । दुहितरम् । दिवः ॥८॥

**दिवश्चिद्घा दुहितरं महान्महीयमानाम् ।**
**उषासमिन्द्र सं पिणक् ॥९॥**
दिवः । चित् । घ । दुहितरम् । महान् । महीयमानाम् ॥
उषसम् । इन्द्र । सम् । पिणक् ॥९॥

**अपोषा ऽअनसः सरत्संपिष्टादह बिभ्युषी ।**
**नि यत्सीं शिश्नथद्वृषा ॥१०॥ (२०)**
अप । उषाः । अनसः । सरत् । सम्॰पिष्टात् । अह । बिभ्युषी ॥
नि । यत् । सीम् । शिश्नथत् । वृषा ॥१०॥

**एतदस्या ऽअनः शये सुसंपिष्टं विपाश्या ।**
**ससार सीं परावतः ॥११॥**
एतत् । अस्याः । अनः । शये । सु॰संपिष्टम् । वि॰पाशि । आ ॥
ससार । सीम् । परा॰वतः ॥११॥

**उत सिन्धुं विबाल्यं वितस्थानामधि क्षमि ।**
**परि ष्ठा ऽइन्द्र मायया ॥१२॥**

**यच्चिद्धि शश्वतामसीन्द्र साधारणस्त्वम् ।**

**तं त्वा वयं हवामहे ॥१३॥**

यत् । चित् । हि । शश्वताम् । असि । इन्द्र । साधारणः । त्वम् ॥

तम् । त्वा । वयम् । हवामहे ॥१३॥

**अर्वाचीनो वसो भवास्मे सु मत्स्वान्धसः ।**

**सोमानामिन्द्र सोमपाः ॥१४॥**

अर्वाचीनः । वसो इति । भव । अस्मे इति । सु ।

मत्स्व । अन्धसः ॥ सोमानाम् । इन्द्र । सोम०पाः ॥१४॥

**अस्माकं त्वा मतीनामा स्तोम ऽइन्द्र यच्छतु ।**

**अर्वागा वर्त्तया हरी ॥१५॥ ( २९ )**

अस्माकम् । त्वा । मतीनाम् । आ । स्तोमः । इन्द्र । यच्छतु ॥

अर्वाक् । आ । वर्त्तय । हरी इति ॥१५॥

**पुरोळाशं च नो घसो जोषयासे गिरश्च नः ।**

**वधूयुरिव योषणाम् ॥१६॥**

पुरोळाशम् । च । नः । घसः । जोषयासे । गिरः । च । नः ॥

वधूयुःऽइव । योषणाम् ॥१६॥

**सहस्रं व्यतीनां युक्तानामिन्द्रमीमहे ।**

**शतं सोमस्य खार्यः ॥१७॥**

सहस्रम् । व्यतीनाम् । युक्तानाम् । इन्द्रम् । ईमहे ॥

शतम् । सोमस्य । खार्यः ॥१७॥

**सहस्रा ते शता वयं गवामा च्यावयामसि ।**

**अस्मत्रा राध ऽएतु ते ॥१८॥**

सहस्रा । ते । शता । वयम् । गवाम् । आ । च्यावयामसि ॥

अस्म०त्रा । राधः । एतु । ते ॥१८॥

**दर्श ते कलशानां हिरण्यानामधीमहि ।**

**भूरिदा ऽअसि वृत्रहन् ॥१९॥**

दर्श । ते । कलशानाम् । हिरण्यानाम् । अधीमहि ॥

भूरि०दाः । असि । वृत्र०हन् ॥१९॥

**भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर ।**

**भूरि घेदिन्द्र दित्ससि ॥२०॥**

भूरि०दाः । भूरि । देहि । नः । मा । दभ्रम् । भूरि ।

आ । भर ॥ भूरि । घ । इत् । इन्द्र । दित्ससि ॥२०॥

**भूरिदा ह्यसि श्रुतः पुरुत्रा शूर वृत्रहन् ।**

**आ नो भजस्व राधसि ॥२१॥**

भूरि०दाः । हि । असि । श्रुतः । पुरु०त्रा । शूर ।

वृत्र०हन् ॥ आ । नः । भजस्व । राधसि ॥२१॥

**प्र ते बभ्रू विचक्षण शंसामि गोषणो नपात् ।**

**माभ्यां गा ऽअनु शिश्रथः ॥२२॥**

प्र । ते । बभ्रू इति । वि०चक्षण । शंसामि । गो०सनः ।

नपात् ॥ मा । आभ्याम् । गाः । अनु । शिश्रथः ॥२२॥

**कनीनकेव विद्रधे नवे द्रुपदे ऽअर्भके ।**

**बभ्रू यामेषु शोभेते ॥२३॥**

कनीनकाऽइव । विद्रधे । नवे । द्रु०पदे । अर्भके ॥

बभ्रू इति । यामेषु । शोभेते इति ॥२३॥

**अरं म ऽउस्रयाम्णेऽरमनुस्रयाम्णे ।**

**बभ्रू यामेष्वस्रिधा ॥२४॥ ( ३० )** [ ९१३ ]

अरम् । मे । उस्र०याम्ने । अरम् । अनुस्र०याम्ने ॥

बभ्रू इति । यामेषु । अस्रिधा ॥२४॥

॥ इति तृतीयाष्टके षष्ठोऽध्यायः ॥ ६ ॥

# षष्ठाध्यायस्य मन्त्रवर्गानुक्रमणी

एवा त्वामिन्द्र ॥१॥
त्वं महीमवनिं ॥२॥
आ न इन्द्रो दूरादा ॥३॥
गिरिर्न यः स्वतवाँ ॥४॥
आ यात्विन्द्रोऽवस ॥ ५॥
धिषा यदि धिषण्यन्तः ॥६॥
यन्न इन्द्रो जुजुषे ॥७॥
ता तू ते सत्या ॥८॥
कथा महामवृधत् ॥९॥
किमादमत्रं ॥१०॥
का सुष्टुतिः शवसः ॥११॥
कृणोत्यस्मै वरिवो ॥१२॥
को अद्य नर्यो ॥१३॥
सुप्राव्यः प्राशुषा ॥१४॥
अहं मनुरभवं ॥१५॥
गर्भे नु सन्नन्वेषाम ॥१६॥
त्वा युजा तव तत् ॥१७॥
आ नः स्तुत उप ॥१८॥
नकिरिन्द्र त्वदुत्तरो ॥१९॥
यत्रोत मर्त्याय ॥२०॥
एतदस्या अनः ॥२१॥
उत त्यं पुत्रमग्रुवः ॥२२॥
अस्वापयद् दभीतये ॥२३॥
कया नश्चित्र आ भुव ॥२४॥
सं यत्त इन्द्र ॥२५॥
अस्माँ इहा वृणीष्व ॥२६॥
आ तू न इन्द्र ॥२७॥
भूयामो षु त्वावतः ॥२८॥
ता ते गृणन्ति ॥२९॥
सहस्रं व्यतीनां ॥३०॥

॥ इति शाङ्खायनसंहितायां तृतीयाष्टके षष्ठोऽध्यायः ॥
(षष्ठाध्याये वर्गाः ३०, सूक्तानि १४, ऋचः १५९)

**उत स्मा सद्य ऽइत्परि शशमानाय सुन्वते ।**
**पुरू चिन्मंहसे वसु ॥८॥**
उत । स्म । सद्यः । इत् । परि । शशमानाय । सुन्वते ॥
पुरु । चित् । मंहसे । वसु ॥८॥

**नहि ष्मा ते शतं चन राधो वरन्त ऽआमुरः ।**
**न च्यौत्नानि करिष्यतः ॥९॥**
नहि । स्म । ते । शतम् । चन । राधः । वरन्ते । आ०मुरः ॥
न । च्यौत्नानि । करिष्यतः ॥९॥

**अस्माँ ऽअवन्तु ते शतमस्मान्त्सहस्रमूतयः ।**
**अस्मान्विश्वा ऽअभिष्टयः ॥१०॥ ( २५ )**
अस्मान् । अवन्तु । ते । शतम् । अस्मान् । सहस्रम् । ऊतयः ॥
अस्मान् । विश्वाः । अभिष्टयः ॥१०॥

**अस्माँ ऽइहा वृणीष्व सख्याय स्वस्तये ।**
**महो राये दिवित्मते ॥११॥**
अस्मान् । इह । वृणीष्व । सख्याय । स्वस्तये ॥
महः । राये । दिवित्मते ॥११॥

**अस्माँ ऽअविड्ढि विश्वहेन्द्र राया परीणसा ।**
**अस्मान्विश्वाभिरूतिभिः ॥१२॥**
अस्मान् । अविड्ढि । विश्व०हा । इन्द्र । राया । परीणसा ॥
अस्मान् । विश्वाभिः । ऊति०भिः ॥१२॥

**अस्मभ्यं ताँ ऽअपा वृधि व्रजाँ ऽअस्तेव गोमतः ।**
**नवाभिरिन्द्रोतिभिः ॥१३॥**
अस्मभ्यम् । तान् । अप । वृधि । व्रजान् । अस्ताऽइव । गो०मतः ॥
नवाभिः । इन्द्र । ऊति०भिः ॥१३॥

**अस्माकं धृष्णुया रथो द्युमाँ ऽइन्द्रानपच्युतः ।**
**गव्युरश्वयुरीयते ॥१४॥**
अस्माकम् । धृष्णु०या । रथः । द्यु०मान् । इन्द्र । अनप०च्युतः ॥
गव्युः । अश्व०युः । ईयते ॥१४॥

**अस्माकमुत्तमं कृधि श्रवो देवेषु सूर्य ।**
**वर्षिष्ठं द्यामिवोपरि ॥१५॥ ( २६ )** [ ८८१ ]
अस्माकम् । उत्०तमम् । कृधि । श्रवः । देवेषु । सूर्य ॥
वर्षिष्ठम् । द्याम्ऽइव । उपरि ॥१५॥

## ( ३२ )

**२४ वामदेवो गौतमः । इन्द्रः, २३-२४ इन्द्राश्वौ । गायत्री ।**

**आ तू न ऽइन्द्र वृत्रहन्नस्माकमर्धमा गहि ।**
**महान्महीभिरूतिभिः ॥१॥**
आ । तु । नः । इन्द्र । वृत्र०हन् । अस्माकम् । अर्धम् । आ । गहि ॥
महान् । महीभिः । ऊति०भिः ॥१॥

**भृमिश्चिद्घासि तूतुजिरा चित्र चित्रिणीष्वा ।**
**चित्रं कृणोष्यूतये ॥२॥**
भृमिः । चित् । घ । असि । तूतुजिः । आ । चित्र । चित्रिणीषु । आ ॥
चित्रम् । कृणोषि । ऊतये ॥२॥

**दभ्रेभिश्चिच्छशीयांसं हंसि व्राधन्तमोजसा ।**
**सखिभिर्ये त्वे सचा ॥३॥**

दभ्रेभिः । चित् । शशीयांसम् । हंसि । व्राधन्तम् । ओजसा ॥
सखिऽभिः । ये । त्वे इति । सचा ॥३॥

**वयमिन्द्र त्वे सचा वयं त्वाभि नोनुमः ।**
**अस्माँअस्माँ ऽइदुदव ॥४॥**

वयम् । इन्द्र । त्वे इति । सचा । वयम् । त्वा । अभि । नोनुमः ॥
अस्मान्ऽअस्मान् । इत् । उत् । अव ॥४॥

**स नश्चित्राभिरद्रिवोऽनवद्याभिरूतिभिः ।**
**अनाधृष्टाभिरा गहि ॥५॥ ( २७ )**

सः । नः । चित्राभिः । अद्रिऽवः । अनवद्याभिः । ऊतिऽभिः ॥
अनाधृष्टाभिः । आ । गहि ॥५॥

**भूयामो षु त्वावतः सखाय ऽइन्द्र गोमतः ।**
**युजो वाजाय घृष्वये ॥६॥**

भूयामो इति । सु । त्वाऽवतः । सखायः । इन्द्र । गोऽमतः ॥
युजः । वाजाय । घृष्वये ॥६॥

**त्वं ह्येक ऽईशिष ऽइन्द्र वाजस्य गोमतः ।**
**स नो यन्धि महीमिषम् ॥७॥**

त्वम् । हि । एकः । ईशिषे । इन्द्र । वाजस्य । गोऽमतः ॥
सः । नः । यन्धि । महीम् । इषम् ॥७॥

**न त्वा॑ वरन्ते ऽअ॒न्यथा॒ यद्दित्स॑सि स्तु॒तो म॒घम् ।**

**स्तो॒तृभ्य॑ ऽइन्द्र गिर्वणः ॥८॥**

न । त्वा॒ । व॒र॒न्ते॒ । अ॒न्यथा॑ । यत् । दित्स॑सि । स्तु॒तः । म॒घम् ॥

स्तो॒तृ॒ऽभ्य॑ः । इ॒न्द्र॒ । गि॒र्व॒ण॒ः ॥८॥

**अ॒भि त्वा॒ गोत॑मा गि॒रानू॑षत॒ प्र दा॒वने॑ ।**

**इन्द्र॒ वाजा॑य॒ घृष्व॑ये ॥९॥**

अ॒भि । त्वा॒ । गोत॑माः । गि॒रा । अनू॑षत । प्र । दा॒वने॑ ॥

इन्द्र॑ । वाजा॑य । घृष्व॑ये ॥९॥

**प्र ते॑ वोचाम वी॒र्या॒ इ॒ या मन्द॑सा॒न ऽआरु॑जः ।**

**पु॒रो दासी॑र॒भीत्य॑ ॥१०॥ (२८)**

प्र । ते॒ । वो॒चा॒म॒ । वी॒र्या॑ । याः । म॒न्द॒सा॒नः । आ । अरु॑जः ॥

पुर॑ः । दासीः॑ । अ॒भि॒ऽइत्य॑ ॥१०॥

**ता ते॑ गृणन्ति वे॒धसो॒ यानि॑ च॒कर्थ॒ पौंस्या॑ ।**

**सुतेष्वि॑न्द्र गिर्वणः ॥११॥**

ता । ते॒ । गृ॒ण॒न्ति॒ । वे॒धस॑ः । यानि॑ । च॒कर्थ॑ । पौंस्या॑ ॥

सुतेषु॑ । इ॒न्द्र॒ । गि॒र्व॒ण॒ः ॥११॥

**अवी॑वृधन्त॒ गोत॑मा॒ ऽइन्द्र॒ त्वे स्तोम॑वाहसः ।**

**ऐषु॑ धा वी॒रव॒द्यश॑ः ॥१२॥**

अवी॑वृधन्त । गोत॑माः । इन्द्र॑ । त्वे इति॑ । स्तोम॑ऽवाहसः ॥

आ । ए॒षु॒ । धा॒ः । वी॒र॒ऽवत् । यश॑ः ॥१२॥

# ॥ तृतीयाष्टके सप्तमोऽध्यायः॥

**अथ सप्तमोऽध्यायः॥७॥ वर्गाः १-२७ ] [ चतुर्थमण्डले सूक्तानि ३३-५० ]**

## ( ३३ ) [ अथ चतुर्थोऽनुवाकः ॥४॥ सू.३३-४५

११ वामदेवो गौतमः । ऋभवः । त्रिष्टुप् ।

**प्र ऽऋभुभ्यो दूतमिव वाचमिष्य ऽउपस्तिरे श्वैतरीं धेनुमीळे ।**
**ये वातजूतास्तरणिभिरेवैः परि द्यां सद्यो ऽअपसो बभूवुः ॥१॥**
प्र । ऋभुऽभ्यः । दूतम्ऽइव । वाचम् । इष्ये । उपऽस्तिरे ।
श्वैतरीम् । धेनुम् । ईळे ॥ ये । वातऽजूताः । तरणिऽभिः ।
एवैः । परि । द्याम् । सद्यः । अपसः । बभूवुः ॥१॥

**यदारमक्रन्नृभवः पितृभ्यां परिविष्टी वेषणा दंसनाभिः ।**
**आदिद्देवानामुप सख्यमायन्धीरासः पुष्टिमवहन्मनायै ॥२॥**
यदा । अरम् । अक्रन् । ऋभवः । पितृऽभ्याम् । परिऽविष्टी ।
वेषणा । दंसनाभिः ॥ आत् । इत् । देवानाम् । उप । सख्यम् ।
आयन् । धीरासः । पुष्टिम् । अवहन् । मनायै ॥२॥

**पुनर्ये चक्रुः पितरा युवाना सना यूपेव जरणा शयाना ।**
**ते वाजो विभ्वाँ ऽऋभुरिन्द्रवन्तो मधुप्सरसो नोऽवन्तु यज्ञम् ॥३॥**
पुनः । ये । चक्रुः । पितरा । युवाना । सना । यूपाऽइव ।
जरणा । शयाना ॥ ते । वाजः । विऽभ्वा । ऋभुः ।
इन्द्रवन्तः । मधुऽप्सरसः । नः । अवन्तु । यज्ञम् ॥३॥

**यत्संवत्समृभवो गामरक्षन्यत्संवत्समृभवो मा ऽअपिंशन् ।**
**यत्संवत्समभरन्भासो ऽअस्यास्ताभिः शमीभिरमृतत्वमाशुः ॥४॥**
यत् । सम्ऽवत्सम् । ऋभवः । गाम् । अरक्षन् । यत् । सम्ऽवत्सम् ।
ऋभवः । माः । अपिंशन् ॥ यत् । सम्ऽवत्सम् । अभरन् ।
भासः । अस्याः । ताभिः । शमीभिः । अमृतऽत्वम् । आशुः ॥४॥

ज्येष्ठ ऽआह चमसा द्वा करेति कनीयान्त्रीन्कृणवामेत्याह ।
कनिष्ठ ऽआह चतुरस्करेति त्वष्ट ऽऋभवस्तत्पनयद्वचो वः ॥५॥ (१)
ज्येष्ठः । आह । चमसा । द्वा । कर । इति । कनीयान् । त्रीन् ।
कृणवाम । इति । आह ॥ कनिष्ठः । आह । चतुरः । कर ।
इति । त्वष्टा । ऋभवः । तत् । पनयत् । वचः । वः ॥५॥

सत्यमूचुर्नर ऽएवा हि चक्रुरनु स्वधामृभवो जग्मुरेताम् ।
विभ्राजमानाँश्चमसाँ ऽअहेवावेनत्त्वष्टा चतुरो ददृश्वान् ॥६॥
सत्यम् । ऊचुः । नरः । एव । हि । चक्रुः । अनु । स्वधाम् ।
ऋभवः । जग्मुः । एताम् ॥ वि०भ्राजमानान् । चमसान् ।
अहाऽइव । अवेनत् । त्वष्टा । चतुरः । ददृश्वान् ॥६॥

द्वादश द्यून्यदगोह्यस्यातिथ्ये रणन्नृभवः ससन्तः ।
सुक्षेत्राकृण्वन्ननयन्त सिन्धून्धन्वातिष्ठन्नोषधीर्निम्नमापः ॥७॥
द्वादश । द्यून् । यत् । अगोह्यस्य । आतिथ्ये । रणन् । ऋभवः ।
ससन्तः ॥ सु०क्षेत्रा । अकृण्वन् । अनयन्त । सिन्धून् । धन्व ।
आ । अतिष्ठन् । ओषधीः । निम्नम् । आपः ॥७॥

रथं ये चक्रुः सुवृतं नरेष्ठां ये धेनुं विश्वजुवं विश्वरूपाम् ।
त ऽआ तक्षन्त्वृभवो रयिं नः स्ववसः स्वपसः सुहस्ताः ॥८॥
रथम् । ये । चक्रुः । सु०वृतम् । नरे०स्थाम् । ये । धेनुम् ।
विश्व०जुवम् । विश्व०रूपाम् ॥ ते । आ । तक्षन्तु । ऋभवः ।
रयिम् । नः । सु०अवसः । सु०अपसः । सु०हस्ताः ॥८॥

अपो ह्येषामजुषन्त देवा ऽअभि क्रत्वा मनसा दीध्यानाः ।
वाजो देवानामभवत्सुकर्मेन्द्रस्य ऽऋभुक्षा वरुणस्य विभ्वा ॥९॥

अपः । हि । एषाम् । अजुषन्त । देवाः । अभि । क्रत्वा ।
मनसा । दीध्यानाः ॥ वाजः । देवानाम् । अभवत् ।
सु०कर्मा । इन्द्रस्य । ऋभुक्षाः । वरुणस्य । वि०भ्वा ॥९॥

**ये हरी मेधयोक्था मदन्त ऽइन्द्राय चक्रुः सुयुजा ये ऽअश्वा ।**
**ते रायस्पोषं द्रविणान्यस्मे धत्त ऽऋभवः क्षेमयन्तो न मित्रम् ॥१०॥**
ये । हरी इति । मेधया । उक्था । मदन्तः । इन्द्राय । चक्रुः ।
सु०युजा । ये । अश्वा ॥ ते । रायः । पोषम् । द्रविणानि ।
अस्मे इति । धत्त । ऋभवः । क्षेम०यन्तः । न । मित्रम् ॥१०॥

**इदाह्नः पीतिमुत वो मदं धुर्न ऽऋते श्रान्तस्य सख्याय देवाः ।**
**ते नूनमस्मे ऽऋभवो वसूनि तृतीये ऽअस्मिन्त्सवने दधात ॥११॥ (२) [९२४]**
इदा । अह्नः पीतिम् । उत । वः । मदम् । धुः । न । ऋते ।
श्रान्तस्य । सख्याय । देवाः ॥ ते । नूनम् । अस्मे इति ।
ऋभवः । वसूनि । तृतीये । अस्मिन् । सवने । दधात ॥११॥

## ( ३४ )

११ वामदेवो गौतमः । ऋभवः । त्रिष्टुप् ।

**ऋभुर्विभ्वा वाज ऽइन्द्रो नो ऽअच्छेमं यज्ञं रत्नधेयोप यात ।**
**इदा हि वो धिषणा देव्यह्नामधात्पीतिं सं मदा ऽअग्मता वः ॥१॥**
ऋभुः । वि०भ्वा । वाजः । इन्द्रः । नः । अच्छ । इमम् । यज्ञम् ।
रत्न०धेया । उप । यात ॥ इदा । हि । वः । धिषणा । देवी ।
अह्नाम् । अधात् । पीतिम् । सम् । मदाः । अग्मत । वः ॥१॥

**विदानासो जन्मनो वाजरत्ना ऽउत ऽऋतुभिर्ऋभवो मादयध्वम् ।**
**सं वो मदा ऽअग्मत सं पुरंधिः सुवीरामस्मे रयिमेरयध्वम् ॥२॥**

विदानासः । जन्मनः । वाज॰रत्नाः । उत । ऋतु॰भिः । ऋभवः ।
मादयध्वम् ॥ सम् । वः । मदाः । अग्मत । सम् । पुरम्॰धिः ।
सु॰वीराम् । अस्मे इति । रयिम् । आ । ईरयध्वम् ॥२॥

**अयं वो यज्ञ ऽऋभवोऽकारि यमा मनुष्वत्प्रदिवो दधिध्वे ।**
**प्र वोऽच्छा जुजुषाणासो ऽअस्थुरभूत विश्वे ऽअग्रियोत वाजाः ॥३॥**
अयम् । वः । यज्ञः । ऋभवः । अकारि । यम् । आ । मनुष्वत् ।
प्र॰दिवः । दधिध्वे ॥ प्र । वः । अच्छ । जुजुषाणासः ।
अस्थुः । अभूत । विश्वे । अग्रिया । उत । वाजाः ॥३॥

**अभूदु वो विधते रत्नधेयमिदा नरो दाशुषे मर्त्याय ।**
**पिबत वाजा ऽऋभवो ददे वो महि तृतीयं सवनं मदाय ॥४॥**
अभूत् । ऊँ इति । वः । विधते । रत्न॰धेयम् । इदा ।
नरः । दाशुषे । मर्त्याय ॥ पिबत । वाजाः । ऋभवः ।
ददे । वः । महि । तृतीयम् । सवनम् । मदाय ॥४॥

**आ वाजा यातोप न ऽऋभुक्षा महो नरो द्रविणसो गृणानाः ।**
**आ वः पीतयोऽभिपित्वे ऽअह्नामिमा ऽअस्तं नवस्वइव ग्मन् ॥५॥ ( ३ )**
आ । वाजाः । यात । उप । नः । ऋभुक्षाः । महः । नरः ।
द्रविणसः । गृणानाः ॥ आ । वः । पीतयः । अभि॰पित्वे ।
अह्नाम् । इमाः । अस्तम् । नवस्वः॰इव । ग्मन् ॥५॥

**आ नपातः शवसो यातनोपेमं यज्ञं नमसा हूयमानाः ।**
**सजोषसः सूरयो यस्य च स्थ मध्वः पात रत्नधा ऽइन्द्रवन्तः ॥६॥**
आ । नपातः । शवसः । यातन । उप । इमम् । यज्ञम् ।
नमसा । हूयमानाः ॥ स॰जोषसः । सूरयः । यस्य । च ।
स्थ । मध्वः । पात । रत्न॰धाः । इन्द्र॰वन्तः ॥६॥

**सजोषा ऽइन्द्र वरुणेन सोमं सजोषाः पाहि गिर्वणो मरुद्भिः ।**
**अग्रेपाभिर्ऋतुपाभिः सजोषा ग्नास्पत्नीभी रत्नधाभिः सजोषाः ॥७॥**
स॰जोषाः । इन्द्र । वरुणेन । सोमम् । स॰जोषाः । पाहि ।
गिर्वणः । मरुत्॰भिः ॥ अग्रे॰पाभिः । ऋतु॰पाभिः ।
स॰जोषाः । ग्नाः । पत्नीभिः । रत्न॰धाभिः । स॰जोषाः ॥७॥

**सजोषस ऽआदित्यैर्मादयध्वं सजोषस ऽऋभवः पर्वतेभिः ।**
**सजोषसो दैव्येना सवित्रा सजोषसः सिन्धुभी रत्नधेभिः ॥८॥**
स॰जोषसः । आदित्यैः । मादयध्वम् । स॰जोषसः । ऋभवः । पर्वतेभिः ॥
स॰जोषसः । दैव्येन । सवित्रा । स॰जोषसः । सिन्धु॰भिः । रत्न॰धेभिः ॥८॥

**ये ऽअश्विना ये पितरा य ऽऊती धेनुं ततक्षुर्ऋभवो ये ऽअश्वा ।**
**ये ऽअंसत्रा य ऽऋधग्रोदसी ये विभ्वो नरः स्वपत्यानि चक्रुः ॥९॥**
ये । अश्विना । ये । पितरा । ये । ऊती । धेनुम् । ततक्षुः ।
ऋभवः । ये । अश्वा ॥ ये । अंसत्रा । ये । ऋधक् । रोदसी इति ।
ये । वि॰भ्वः । नरः । सु॰अपत्यानि । चक्रुः ॥९॥

**ये गोमन्तं वाजवन्तं सुवीरं रयिं धत्थ वसुमन्तं पुरुक्षुम् ।**
**ते ऽअग्रेपा ऽऋभवो मन्दसाना ऽअस्मे धत्त ये च रातिं गृणन्ति ॥१०॥**
ये । गो॰मन्तम् । वाज॰वन्तम् । सु॰वीरम् । रयिम् । धत्थ ।
वसु॰मन्तम् । पुरु॰क्षुम् ॥ ते । अग्रे॰पाः । ऋभवः । मन्दसानाः ।
अस्मे इति । धत्त । ये । च । रातिम् । गृणन्ति ॥१०॥

**नापाभूत न वोऽतीतृषामानिःशस्ता ऽऋभवो यज्ञे ऽअस्मिन् ।**
**समिन्द्रेण मदथ सं मरुद्भिः सं राजभी रत्नधेयाय देवाः ॥११॥ (४) [ ९३५ ]**

न । अप॑ । अ॒भू॒त । न । व॒ः । अ॒ती॒तृ॒षा॒म । अनि॑:ऽशस्ताः ।
ऋ॒भ॒व॒ः । य॒ज्ञे । अ॒स्मिन् ॥ सम् । इन्द्रे॑ण । मद॑थ । सम् ।
म॒रुत्॑ऽभिः । सम् । राज॑ऽभिः । र॒त्न॒ऽधे॒या॑य । दे॒वा॒ः ॥११॥

## ( ३५ )

९ वामदेवो गौतमः । ऋभवः । त्रिष्टुप् ।

**इ॒होप॑ यात शवसो नपात॒ः सौध॑न्वना ऽऋभवो॒ माप॑ भूत ।**
**अ॒स्मिन्हि व॒ः सव॑ने रत्न॒धेय॒ं गम॒न्त्विन्द्र॒मनु॒ वो॒ मदा॑सः ॥१॥**
इ॒ह । उप॑ । या॒त । श॒व॒स॒ः । न॒पा॒त॒ः । सौध॑न्वनाः ।
ऋ॒भ॒व॒ः । मा । अप॑ । भू॒त ॥ अ॒स्मिन् । हि । व॒ः । सव॑ने ।
र॒त्न॒ऽधेय॑म् । गम॑न्तु । इन्द्र॑म् । अनु॑ । व॒ः । मदा॑सः ॥१॥

**आग॑न्नृभू॒णामि॒ह रत्न॒धेय॒मभू॒त्सोम॑स्य॒ सुषु॑तस्य पी॒तिः ।**
**सु॒कृ॒त्यया॒ यत्स्व॑प॒स्यया॑ चँ॒ ऽएकं॑ विच॒क्र चम॒सं च॑तु॒र्धा ॥२॥**
आ । अ॒ग॒न् । ऋ॒भू॒णाम् । इ॒ह । र॒त्न॒ऽधेय॑म् । अभू॑त् । सोम॑स्य ।
सु॒ऽसु॑तस्य । पी॒तिः ॥ सु॒ऽकृ॒त्यया॑ । यत् । सु॒ऽअ॒प॒स्यया॑ ।
च॒ । एक॑म् । वि॒ऽच॒क्र । च॒म॒सम् । च॒तु॒ःऽधा ॥२॥

**व्य॑कृणोत चम॒सं च॑तु॒र्धा सखे॒ वि शि॒क्षेत्य॑ब्रवीत ।**
**अथै॑त वाजा ऽअ॒मृत॑स्य॒ पन्थां॑ ग॒णं दे॒वाना॑मृभवः सुहस्ताः ॥३॥**
वि । अ॒कृ॒णो॒त॒ । च॒म॒सम् । च॒तु॒ःऽधा । सखे॑ । वि ।
शि॒क्ष॒ । इति॑ । अ॒ब्र॒वी॒त ॥ अथ॑ । ऐ॒त॒ । वा॒जा॒ः । अ॒मृत॑स्य ।
पन्था॑म् । ग॒णम् । दे॒वाना॑म् । ऋ॒भ॒व॒ः । सु॒ऽह॒स्ता॒ः ॥३॥

**कि॒मय॑ः स्विच्चम॒स ऽए॒ष ऽआ॑स॒ यं काव्ये॑न च॒तुरो॑ विच॒क्र ।**
**अथा॑ सुनुध्व॒ं सव॑न॒ं मदा॑य पा॒त ऽऋ॑भवो॒ मधु॑नः सो॒म्यस्य॑ ॥४॥**

कि॒म्॒ऽमय॑ः । स्वि॒त् । च॒म॒सः । ए॒षः । आ॒स॒ । यम् ।
काव्ये॑न । च॒तुर॑ः । वि॒ऽच॒क्र ॥ अथ॑ । सु॒नु॒ध्व॒म् ।
सव॑नम् । मदा॑य । पा॒त । ऋ॒भ॒व॒ः । मधु॑नः । सो॒म्यस्य॑ ॥४॥

शच्या॑कर्त्त पि॒तरा॒ युवा॑ना॒ शच्या॑कर्त्त चम॒सं दे॑व॒पान॑म् ।
शच्या॒ हरी॒ धनु॑तरावतष्टेन्द्र॒वाहा॑वृभवो वाजरत्नाः ॥५॥ (५)
शच्या॑ । अ॒क॒र्त्त॒ । पि॒तरा॑ । युवा॑ना । शच्या॑ । अ॒क॒र्त॒ । च॒म॒सम् । दे॒व॒ऽपान॑म् ॥
शच्या॑ । हरी॒ इति॑ । धनु॑ऽतरौ । अ॒त॒ष्ट॒ । इ॒न्द्र॒ऽवाहौ॑ । ऋ॒भ॒व॒ः । वा॒ज॒ऽर॒त्ना॒ः ॥५॥

यो व॑ः सुनोत्य॑भिपि॒त्वे ऽअह्नां॑ ती॒व्रं वा॑जास॒ः सव॑न॒ं मदा॑य ।
तस्मै॑ र॒यिमृ॑भव॒ः सर्व॑वी॒रमा त॑क्षत वृषणो मन्दसा॒नाः ॥६॥
यः । व॒ः । सु॒नोति॑ । अ॒भि॒ऽपि॒त्वे । अह्ना॑म् । ती॒व्रम् ।
वा॒जा॒स॒ः । सव॑नम् । मदा॑य ॥ तस्मै॑ । र॒यिम् । ऋ॒भ॒व॒ः ।
सर्व॑ऽवीरम् । आ । त॒क्ष॒त॒ । वृ॒ष॒ण॒ः । म॒न्द॒सा॒नाः ॥६॥

प्रा॒तः सु॒तम॑पिबो हर्यश्व॒ माध्यं॑दि॒नं सव॑न॒ं केव॑लं ते ।
समृ॒भुभि॑ः पिबस्व रत्न॒धेभि॒ः सखी॒ँर्या॒ँ ऽइन्द्र चकृ॒षे सु॑कृ॒त्या ॥७॥
प्रा॒तरिति॑ । सु॒तम् । अ॒पि॒ब॒ः । ह॒रि॒ऽअ॒श्व॒ । माध्य॑न्दिनम् ।
सव॑नम् । केव॑लम् । ते॒ ॥ सम् । ऋ॒भु॒ऽभि॑ः । पि॒ब॒स्व॒ ।
र॒त्न॒ऽधेभि॑ः । सखी॑न् । यान् । इ॒न्द्र॒ । च॒कृ॒षे । सु॒ऽकृ॒त्या ॥७॥

ये दे॒वासो॒ ऽअभ॑वता सुकृ॒त्या श्ये॒ना इ॒वेदधि॑ दि॒वि नि॑षे॒द ।
ते रत्नं॑ धात शवसो नपात॒ः सौध॑न्वना॒ ऽअभ॑वतामृता॑सः ॥८॥
ये । दे॒वास॑ः । अभ॑वत । सु॒ऽकृ॒त्या । श्ये॒नाःऽइ॑व । इत् ।
अधि॑ । दि॒वि । नि॒ऽसे॒द ॥ ते । रत्न॑म् । धा॒त॒ । श॒व॒स॒ः ।
न॒पा॒त॒ः । सौध॑न्वनाः । अभ॑वत । अ॒मृता॑सः ॥८॥

**यत्तृतीयं सवनं रत्नधेयमकृणुध्वं स्वपस्या सुहस्ताः ।**

**तदृभवः परिषिक्तं व ऽएतत्सं मदेभिरिन्द्रियेभिः पिबध्वम् ॥९॥ ( ६ ) [ १४४ ]**

यत् । तृतीयम् । सवनम् । रत्न०धेयम् । अकृणुध्वम् ।

सु०अपस्या । सु०हस्ताः ॥ तत् । ऋभवः । परि०सिक्तम् ।

वः । एतत् । सम् । मदेभिः । इन्द्रियेभिः । पिबध्वम् ॥९॥

## ( ३६ )

**९ वामदेवो गौतमः । ऋभवः । जगती, ९ त्रिष्टुप् ।**

**अनश्वो जातो ऽअनभीशुरुक्थ्यो ३ रथस्त्रिचक्रः परि वर्त्तते रजः ।**

**महत्तद्वो देव्यस्य प्रवाचनं द्यामृभवः पृथिवीं यच्च पुष्यथ ॥१॥**

अनश्वः । जातः । अनभीशुः । उक्थ्यः । रथः । त्रि०चक्रः ।

परि । वर्त्तते । रजः ॥ महत् । तत् । वः । देव्यस्य । प्र०वाचनम् ।

द्याम् । ऋभवः । पृथिवीम् । यत् । च । पुष्यथ ॥१॥

**रथं ये चक्रुः सुवृतं सुचेतसोऽविह्वरन्तं मनसस्परि ध्यया ।**

**ताँ ऽऊ न्वस्य सवनस्य पीतय ऽआ वो वाजा ऽऋभवो वेदयामसि ॥२॥**

रथम् । ये । चक्रुः । सु०वृतम् । सु०चेतसः । अवि०ह्वरन्तम् ।

मनसः । परि । ध्यया ॥ तान् । ऊँ इति । नु । अस्य । सवनस्य ।

पीतये । आ । वः । वाजाः । ऋभवः । वेदयामसि ॥२॥

**तद्वो वाजा ऽऋभवः सुप्रवाचनं देवेषु विभ्वो ऽअभवन्महित्वनम् ।**

**जिव्री यत्सन्ता पितरा सनाजुरा पुनर्युवाना चरथाय तक्षथ ॥३॥**

तत् । वः । वाजाः । ऋभवः । सु०प्रवाचनम् । देवेषु । वि०भ्वः ।

अभवत् । महि०त्वनम् ॥ जिव्री इति । यत् । सन्ता । पितरा ।

सना०जुरा । पुनः । युवाना । चरथाय । तक्षथ ॥३॥

**एकं वि चक्र चमसं चतुर्वयं निश्चर्मणो गामरिणीत धीतिभिः ।**
**अथा देवेष्वमृतत्वमानश श्रुष्टी वाजा ऽऋभवस्तद्व ऽउक्थ्यम् ॥४॥**
एकम् । वि । चक्र । चमसम् । चतुःऽवयम् । निः । चर्मणः ।
गाम् । अरिणीत । धीतिऽभिः ॥ अथ । देवेषु । अमृतऽत्वम् ।
आनश । श्रुष्टी । वाजाः । ऋभवः । तत् । वः । उक्थ्यम् ॥४॥

**ऋभुतो रयिः प्रथमश्रवस्तमो वाजश्रुतासो यमजीजनन्नरः ।**
**विभ्वतष्टो विदथेषु प्रवाच्यो यं देवासोऽवथा स विचर्षणिः ॥५॥ (७)**
ऋभुतः । रयिः । प्रथमश्रवःऽतमः । वाजऽश्रुतासः । यम् ।
अजीजनन् । नरः ॥ विभ्वऽतष्टः । विदथेषु । प्रऽवाच्यः ।
यम् । देवासः । अवथ । सः । विऽचर्षणिः ॥५॥

**स वाज्यर्वा स ऽऋषिर्वचस्यया स शूरो ऽअस्ता पृतनासु दुष्टरः ।**
**स रायस्पोषं स सुवीर्यं दधे यं वाजो विभ्वाँ ऽऋभवो यमाविषुः ॥६॥**
सः । वाजी । अर्वा । सः । ऋषिः । वचस्यया । सः । शूरः ।
अस्ता । पृतनासु । दुस्तरः । सः । रायः । पोषम् । सः । सुऽवीर्यम् ।
दधे । यम् । वाजः । विऽभ्वा । ऋभवः । यम् । आविषुः ॥६॥

**श्रेष्ठं वः पेशो ऽअधि धायि दर्शतं स्तोमो वाजा ऽऋभवस्तं जुजुष्टन ।**
**धीरासो हि ष्ठा कवयो विपश्चितस्तान्व ऽएना ब्रह्मणा वेदयामसि ॥७॥**
श्रेष्ठम् । वः । पेशः । अधि । धायि । दर्शतम् । स्तोमः । वाजाः ।
ऋभवः । तम् । जुजुष्टन ॥ धीरासः । हि । स्थ । कवयः ।
विपःऽचितः । तान् । वः । एना । ब्रह्मणा । आ । वेदयामसि ॥७॥

**यूयमस्मभ्यं धिषणाभ्यस्परि विद्वांसो विश्वा नर्याणि भोजना ।**
**द्युमन्तं वाजं वृषशुष्ममुत्तममा नो रयिमृभवस्तक्षता वयः ॥८॥**

यूयम् । अस्मभ्यम् । धिषणाभ्यः । परि । विद्वांसः । विश्वा ।
नर्याणि । भोजना ॥ द्युऽमन्तम् । वाजम् । वृषऽशुष्मम् । उत्ऽतमम् ।
आ । नः । रयिम् । ऋभवः । तक्षत । आ । वयः ॥८॥

इह प्रजामिह रयिं रराणा ऽइह श्रवो वीरवत्तक्षता नः ।
येन वयं चितयेमात्यन्यान्तं वाजं चित्रमृभवो ददा नः ॥९॥ (८) [ १५३ ]
इह । प्रऽजाम् । इह । रयिम् । रराणाः । इह । श्रवः ।
वीरऽवत् । तक्षत । नः ॥ येन । वयम् । चितयेम । अति ।
अन्यान् । तम् । वाजम् । चित्रम् । ऋभवः । दद । नः ॥९॥

## ( ३७ )

८ वामदेवो गौतमः । ऋभवः । त्रिष्टुप्, ५-८ अनुष्टुप् ।

उप नो वाजा ऽअध्वरमृभुक्षा देवा यात पथिभिर्देवयानैः ।
यथा यज्ञं मनुषो विक्ष्वा ३ सु दधिध्वे रण्वाः सुदिनेष्वह्नाम् ॥१॥
उप । नः । वाजाः । अध्वरम् । ऋभुक्षाः । देवाः । यात ।
पथिऽभिः । देवऽयानैः ॥ यथा । यज्ञम् । मनुषः । विक्षु ।
आसु । दधिध्वे । रण्वाः । सुऽदिनेषु । अह्नाम् ॥१॥

ते वो हृदे मनसे सन्तु यज्ञा जुष्टासो ऽअद्य घृतनिर्णिजो गुः ।
प्र वः सुतासो हरयन्त पूर्णाः क्रत्वे दक्षाय हर्षयन्त पीताः ॥२॥
ते । वः । हृदे । मनसे । सन्तु । यज्ञाः । जुष्टासः ।
अद्य । घृतऽनिर्निजः । गुः ॥ प्र । वः । सुतासः ।
हरयन्त । पूर्णाः । क्रत्वे । दक्षाय । हर्षयन्त । पीताः ॥२॥

त्र्युदायं देवहितं यथा वः स्तोमो वाजा ऽऋभुक्षणो ददे वः ।
जुह्वे मनुष्वदुपरासु विक्षु युष्मे सचा बृहद्दिवेषु सोमम् ॥३॥

त्रि॰उदायम् । देव॰हिंतम् । यथा । वः । स्तोमः । वाजाः ।
ऋभुक्षणः । ददे । वः ॥ जुह्वे । मनुष्वत् । उपरासु ।
विक्षु । युष्मे इति । सचा । बृहत्॰दिवेषु । सोमम् ॥३॥

पीवोअश्वाः शुचद्रथा हि भूतायःशिप्रा वाजिनः सुनिष्काः ।
इन्द्रस्य सूनो शवसो नपातोऽनु वश्चेत्यग्रियं मदाय ॥४॥
पीवः२अश्वाः । शुचत्॰रथाः । हि । भूत । आयः२शिप्राः ।
वाजिनः । सु॰निष्काः ॥ इन्द्रस्य । सूनो इति । शवसः ।
नपातः । अनु । वः । चेति । अग्रियम् । मदाय ॥४॥

ऋभुमृभुक्षणो रयिं वाजे वाजिन्तमं युजम् ।
इन्द्रस्वन्तं हवामहे सदासातममश्विनम् ॥५॥ (९)
ऋभुम् । ऋभुक्षणः । रयिम् । वाजे । वाजिन्॰तमम् । युजम् ॥
इन्द्रस्वन्तम् । हवामहे । सदा॰सातमम् । अश्विनम् ॥५॥

सेदृभवो यमवथ यूयमिन्द्रश्च मर्त्यम् ।
स धीभिरस्तु सनिता मेधसाता सो ऽअर्वता ॥६॥
सः । इत् । ऋभवः । यम् । अवथ । यूयम् । इन्द्रः । च । मर्त्यम् ॥
सः । धीभिः । अस्तु । सनिता । मेध॰साता । सः । अर्वता ॥६॥

वि नो वाजा ऽऋभुक्षणः पथश्चितन यष्टवे ।
अस्मभ्यं सूरयः स्तुता विश्वा ऽआशास्तरीषणि ॥७॥
वि । नः । वाजाः । ऋभुक्षणः । पथः । चितन । यष्टवे ॥
अस्मभ्यम् । सूरयः । स्तुताः । विश्वाः । आशाः । तरीषणि ॥७॥

तं नो वाजा ऽऋभुक्षण ऽइन्द्र नासत्या रयिम् ।
समश्वं चर्षणिभ्य ऽआ पुरु शस्त मघत्तये ॥८॥ (१०) [ ९६१ ]

तम् । नः । वाजाः । ऋभुक्षणः । इन्द्र । नासत्या । रयिम् ॥
सम् । अश्वम् । चर्षणि०भ्यः । आ । पुरु । शस्त । मघत्तये ॥८॥

## ( ३८ )

१० वामदेवो गौतमः । दधिक्राः, १ द्यावापृथिवी । त्रिष्टुप् ।

**उतो हि वां दात्रा सन्ति पूर्वा या पूरुभ्यस्त्रसदस्युर्नितोशे ।**
**क्षेत्रासां ददथुरुर्वरासां घनं दस्युभ्यो ऽअभिभूतिमुग्रम् ॥१॥**
उतो इति । हि । वाम् । दात्रा । सन्ति । पूर्वा । या । पूरु०भ्यः ।
त्रसदस्युः । नि०तोशे ॥ क्षेत्र०साम् । ददथुः । उर्वरा०साम् ।
घनम् । दस्यु०भ्यः । अभि०भूतिम् । उग्रम् ॥१॥

**उत वाजिनं पुरुनिष्षिध्वानं दधिक्रामु ददथुर्विश्वकृष्टिम् ।**
**ऋजिष्यं श्येनं प्रुषितप्सुमाशुं चर्कृत्यमर्यो नृपतिं न शूरम् ॥२॥**
उत । वाजिनम् । पुरुनिः२सिध्वानम् । दधि०क्राम् । ऊँ इति ।
ददथुः । विश्व०कृष्टिम् ॥ ऋजिष्यम् । श्येनम् । प्रुषित०प्सुम् ।
आशुम् । चर्कृत्यम् । अर्यः । नृ०पतिम् । न । शूरम् ॥२॥

**यं सीमनु प्रवतेव द्रवन्तं विश्वः पूरुर्मदति हर्षमाणः ।**
**पड्भिर्गृध्यन्तं मेधयुं न शूरं रथतुरं वातमिव ध्रजन्तम् ॥३॥**
यम् । सीम् । अनु । प्रवताऽइव । द्रवन्तम् । विश्वः । पूरुः ।
मदति । हर्षमाणः ॥ पट्०भिः । गृध्यन्तम् । मेध०युम् ।
न । शूरम् । रथ०तुरम् । वातम्ऽइव । ध्रजन्तम् ॥३॥

**यः स्मारुन्धानो गध्या समत्सु सनुतरश्चरति गोषु गच्छन् ।**
**आविर्ऋजीको विदथा निचिक्यत्तिरो ऽअरतिं पर्याप ऽआयोः ॥४॥**

यः । स्म । आ॰रुन्धानः । गध्या । समत्॰सु । सनु॰तरः ।
चरति । गोषु । गच्छन् ॥ आविः२ऋजीकः । विदथा ।
नि॰चिक्यत् । तिरः । अरतिम् । परि । आपः । आयोः ॥४॥

**उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो भरेषु ।**
**नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ॥५॥ ( ११ )**
उत । स्म । एनम् । वस्त्र॰मथिम् । न । तायुम् । अनु ।
क्रोशन्ति । क्षितयः । भरेषु ॥ नीचा । अयमानम् । जसुरिम् ।
न । श्येनम् । श्रवः । च । अच्छ । पशु॰मत् । च । यूथम् ॥५॥

**उत स्मासु प्रथमः सरिष्यन्नि वेवेति श्रेणिभी रथानाम् ।**
**स्रजं कृण्वानो जन्यो न शुभ्वा रेणुं रेरिहत्किरणं ददश्वान् ॥६॥**
उत । स्म । आसु । प्रथमः । सरिष्यन् । नि । वेवेति ।
श्रेणि॰भिः । रथानाम् ॥ स्रजम् । कृण्वानः । जन्यः ।
न । शुभ्वा । रेणुम् । रेरिहत् । किरणम् । ददश्वान् ॥६॥

**उत स्य वाजी सहुरिरृतावा शुश्रूषमाणस्तन्वा समर्ये ।**
**तुरं यतीषु तुरयन्नृजिप्योऽधि भ्रुवोः किरते रेणुमृञ्जन् ॥७॥**
उत । स्यः । वाजी । सहुरिः । ऋत॰वा । शुश्रूषमाणः ।
तन्वा । स॰मर्ये ॥ तुरम् । यतीषु । तुरयन् । ऋजिप्यः ।
अधि । भ्रुवोः । किरते । रेणुम् । ऋञ्जन् ॥७॥

**उत स्मास्य तन्यतोरिव द्योरृघायतो ऽअभियुजो भयन्ते ।**
**यदा सहस्रमभि षीमयोधीदुर्वर्तुः स्मा भवति भीम ऽऋञ्जन् ॥८॥**
उत । स्म । अस्य । तन्यतोःऽइव । द्योः । ऋघायतः ।
अभि॰युजः । भयन्ते ॥ यदा । सहस्रम् । अभि । सीम् ।
अयोधीत् । दुः२वर्तुः । स्म । भवति । भीमः । ऋञ्जन् ॥८॥

उत स्मा॑स्य पनयन्ति जना॑ जू॒तिं कृ॑ष्टि॒प्रो ऽअ॒भिभू॑तिमा॒शोः ।
उ॒तैनमाहुः समि॒थे वि॒यन्तः परा॑ दधि॒क्रा ऽअ॑सरत्स॒हस्रैः ॥९॥
उ॒त । स्म॒ । अ॒स्य॒ । प॒न॒य॒न्ति॒ । जना॑ः । जू॒तिम् । कृ॒ष्टि॒ऽप्रः ।
अ॒भि॒ऽभूतिम् । आ॒शोः ॥ उ॒त । ए॒न॒म् । आ॒हु॒ः । स॒म्ऽइ॒थे ।
वि॒ऽयन्त॑ः । परा॑ । द॒धि॒ऽक्राः । अ॒स॒र॒त् । स॒हस्रैः ॥९॥

आ द॑धि॒क्राः शव॑सा॒ पञ्च॑ कृ॒ष्टीः सूर्य॑इव॒ ज्योति॑षा॒पस्त॑तान ।
स॒ह॒स्र॒साः श॑त॒सा वा॒ज्यर्वा॑ पृ॒णक्तु॒ मध्वा॒ सम॒िमा वचां॑सि ॥१०॥ ( १२ ) [ ९७१ ]
आ । द॒धि॒ऽक्राः । शव॑सा । पञ्च॑ । कृ॒ष्टीः । सूर्य॑ःऽइव ।
ज्योति॑षा । अ॒पः । त॒ता॒न ॥ स॒ह॒स्र॒ऽसाः । श॒त॒ऽसाः । वा॒जी ।
अर्वा॑ । पृ॒णक्तु॑ । मध्वा॑ । सम् । इ॒मा । वचां॑सि ॥१०॥

# ( ३९ )

६ वामदेवो गौतमः । दधिक्राः । त्रिष्टुप्, ६ अनुष्टुप् ।

आ॒शुं द॑धि॒क्रां तमु॒ नु ष्ट॑वाम दि॒वस्पृ॑थि॒व्या ऽउ॒त च॑र्किराम ।
उ॒च्छन्ती॒र्माम॒ुषस॑ः सूद॒यन्त्वति॒ विश्वा॑नि दुरि॒ताानि॑ पर्षन् ॥१॥
आ॒शुम् । द॒धि॒ऽक्राम् । तम् । ऊँ इति॑ । नु । स्त॒वा॒म ।
दि॒वः । पृ॒थि॒व्याः । उ॒त । च॒र्कि॒रा॒म ॥ उ॒च्छन्ती॑ः । माम् ।
उ॒षस॑ः । सू॒द॒य॒न्तु॒ । अति॑ । विश्वा॑नि । दुः॒ऽइ॒ताानि॑ । प॒र्ष॒न् ॥१॥

म॒हश्च॒र्कर्म्यर्व॑तः क्रतु॒प्रा द॑धि॒क्राव्ण॑ः पु॒रुवार॑स्य वृष्ण॑ः ।
यं पू॒रुभ्यो॑ दीदि॒वांस॒ं नाग्निं द॒दथु॒र्मित्रावरुणा॒ ततु॑रिम् ॥२॥
म॒हः । च॒र्कर्मि॒ । अर्व॑तः । क्र॒तु॒ऽप्राः । द॒धि॒ऽक्राव्ण॑ः ।
पु॒रु॒ऽवार॑स्य । वृष्ण॑ः ॥ यम् । पू॒रु॒ऽभ्य॑ः । दी॒दि॒ऽवांस॑म् ।
न । अ॒ग्निम् । द॒दथु॑ः । मि॒त्रा॒वरु॒णा॒ । ततु॑रिम् ॥२॥

**यो ऽअश्वस्य दधिक्राव्णो ऽअकारीत्समिद्धे ऽअग्ना ऽउषसो व्युष्टौ ।**
**अनागसं तमदितिः कृणोतु स मित्रेण वरुणेना सजोषाः ॥३॥**
यः । अश्वस्य । दधि॰क्राव्णः । अकारीत् । सम्॰इद्धे ।
अग्नौ । उषसः । वि॰उष्टौ ॥ अनागसम् । तम् । अदितिः ।
कृणोतु । सः । मित्रेण । वरुणेन । स॰जोषाः ॥३॥

**दधिक्राव्ण ऽइष ऽऊर्जो महो यदमन्महि मरुतां नाम भद्रम् ।**
**स्वस्तये वरुणं मित्रमग्निं हवामह ऽइन्द्रं वज्रबाहुम् ॥४॥**
दधि॰क्राव्णः । इषः । ऊर्जः । महः । यत् । अमन्महि ।
मरुताम् । नाम । भद्रम् ॥ स्वस्तये । वरुणम् । मित्रम् ।
अग्निम् । हवामहे । इन्द्रम् । वज्र॰बाहुम् ॥४॥

**इन्द्रमिवेदुभये वि ह्वयन्त ऽउदीराणा यज्ञमुपप्रयन्तः ।**
**दधिक्रामु सूदनं मर्त्याय ददथुर्मित्रावरुणा नो ऽअश्वम् ॥५॥**
इन्द्रम्ऽइव । इत् । उभये । वि । ह्वयन्ते । उत्॰ईराणाः ।
यज्ञम् । उप॰प्रयन्तः ॥ दधि॰क्राम् । ॐ इति । सूदनम् ।
मर्त्याय । ददथुः । मित्रावरुणा । नः । अश्वम् ॥५॥

**दधिक्राव्णो ऽअकारिषं जिष्णोरश्वस्य वाजिनः ।**
**सुरभि नो मुखा करत्प्र ण ऽआयूंषि तारिषत् ॥६॥ (१३) [ १७७ ]**
दधि॰क्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः ॥
सुरभि । नः । मुखा । करत् । प्र । नः । आयूंषि । तारिषत् ॥६॥

## ( ४० )

**५ वामदेवो गौतमः । दधिक्रावा, ५ सूर्यः । जगती, १ त्रिष्टुप् ।**

**दधिक्राव्ण ऽइदु नु चर्किराम विश्वा ऽइन्मामुषसः सूदयन्तु ।**
**अपामग्नेरुषसः सूर्यस्य बृहस्पतेराङ्गिरसस्य जिष्णोः ॥१॥**

दधि०क्राव्णः । इत् । ऊँ इति । नु । चर्किराम । विश्वा ।
इत् । माम् उषसः । सूदयन्तु ॥ अपाम् । अग्नेः ।
उषसः सूर्यस्य । बृहस्पतेः । आङ्गिरसस्य । जिष्णोः ॥१॥

**सत्वा भरिषो गविषो दुवन्यसच्छ्रवस्यादिष ऽउषसस्तुरण्यसत् ।**
**सत्यो द्रवो द्रवरः पतङ्गरो दधिक्रावेषमूर्जं स्वर्जनत् ॥२॥**
सत्वा । भरिषः । गो०इषः । दुवन्य०सत् । श्रवस्यात् ।
इषः । उषसः । तुरण्य०सत् ॥ सत्यः । द्रवः । द्रवरः ।
पतङ्गरः । दधि०क्रावा । इषम् । ऊर्जम् । स्वः । जनत् ॥२॥

**उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः ।**
**श्येनस्येव ध्रजतो ऽअङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः ॥३॥**
उत । स्म । अस्य । द्रवतः । तुरण्यतः । पर्णम् । न । वेः ।
अनु । वाति । प्र०गर्धिनः ॥ श्येनस्यऽइव । ध्रजतः अङ्कसम् ।
परि । दधि०क्राव्णः । सह । ऊर्जा । तरित्रतः ॥३॥

**उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो ऽअपिकक्ष ऽआसनि ।**
**क्रतुं दधिक्रा ऽअनु संतवीत्वत्पथामङ्कांस्यन्वापनीफणत् ॥४॥**
उत । स्यः । वाजी । क्षिपणिम् । तुरण्यति । ग्रीवायाम् ।
बद्धः । अपि०कक्षे । आसनि ॥ क्रतुम् । दधि०क्राः । अनु ।
सम्०तवीत्वत् । पथाम् । अङ्कांसि । अनु । आ०पनीफणत् ॥४॥

**हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऽऋतजा ऽअद्रिजा ऽऋतम् ॥५॥ (१४) [ ९४२ ]**
हंसः । शुचि०सत् । वसुः । अन्तरिक्ष०सत् । होता । वेदि०सत् ।
अतिथिः । दुरोण०सत् ॥ नृ०सत् । वर०सत् । ऋत०सत् ।
व्योम०सत् । अप्०जाः । गो०जाः । ऋत०जाः । अद्रि०जाः । ऋतम् ॥५॥

# ( ४१ )

११ वामदेवो गौतमः । इन्द्रवरुणौ । त्रिष्टुप् ।

**इन्द्रा को वां वरुणा सुम्नमाप स्तोमो हविष्माँ ऽअमृतो न होता ।**
**यो वां हृदि क्रतुमाँ ऽअस्मदुक्तः पस्पर्शदिन्द्रावरुणा नमस्वान् ॥१॥**

इन्द्रा । कः । वाम् । वरुणा । सुम्नम् । आप । स्तोमः ।
हविष्मान् । अमृतः । न । होता ॥ यः । वाम् । हृदि ।
क्रतु०मान् । अस्मत् । उक्तः । पस्पर्शत् । इन्द्रावरुणा । नमस्वान् ॥१॥

**इन्द्रा ह यो वरुणा चक्र ऽआपी देवौ मर्त्तः सख्याय प्रयस्वान् ।**
**स हन्ति वृत्रा समिथेषु शत्रूनवोभिर्वा महद्भिः स प्र शृण्वे ॥२॥**

इन्द्रा । ह । यः । वरुणा । चक्रे । आपी इति । देवौ । मर्त्तः ।
सख्याय । प्रयस्वान् ॥ सः । हन्ति । वृत्रा । सम्०इथेषु । शत्रून् ।
अवः२भिः । वा । महत्०भिः । सः । प्र । शृण्वे ॥२॥

**इन्द्रा ह रत्नं वरुणा धेष्ठेत्था नृभ्यः शशमानेभ्यस्ता ।**
**यदी सखाया सख्याय सोमैः सुतेभिः सुप्रयसा मादयैते ॥३॥**

इन्द्रा । ह । रत्नम् । वरुणा । धेष्ठा । इत्था । नृ०भ्यः ।
शशमानेभ्यः । ता ॥ यदि । सखाया । सख्याय ।
सोमैः । सुतेभिः । सु०प्रयसा । मादयैते इति ॥३॥

**इन्द्रा युवं वरुणा दिद्युमस्मिन्नोजिष्ठमुग्रा नि वधिष्टं वज्रम् ।**
**यो नो दुरेवो वृकतिर्दभीतिस्तस्मिन्मिमाथामभिभूत्योजः ॥४॥**

इन्द्रा । युवम् । वरुणा । दिद्युम् । अस्मिन् । ओजिष्ठम् ।
उग्रा । नि । वधिष्टम् । वज्रम् ॥ यः । नः । दुः२एवः ।
वृकतिः । दभीतिः । तस्मिन् । मिमाथाम् । अभि०भूति । ओजः ॥४॥

इन्द्रा युवं वरुणा भूतमस्या धियः प्रेतारा वृषभेव धेनोः ।
सा नो दुहीयद्यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥५॥ (१५)
इन्द्रा । युवम् । वरुणा । भूतम् । अस्याः । धियः ।
प्रेतारा । वृषभाऽइव । धेनोः ॥ सा । नः । दुहीयत् ।
यवसाऽइव । गत्वी । सहस्र०धारा । पयसा । मही । गौः ॥५॥

तोके हिते तनय ऽउर्वरासु सूरो दृशीके वृषणश्च पौंस्ये ।
इन्द्रा नो ऽअत्र वरुणा स्यातामवोभिर्दस्मा परितक्म्यायाम् ॥६॥
तोके । हिते । तनये । उर्वरासु । सूरः । दृशीके । वृषणः ।
च । पौंस्ये ॥ इन्द्रा । नः । अत्र । वरुणा । स्याताम् ।
अवः२भिः । दस्मा । परि०तक्म्यायाम् ॥६॥

युवामिद्ध्यवसे पूर्व्याय परि प्रभूती गविषः स्वापी ।
वृणीमहे सख्याय प्रियाय शूरा मंहिष्ठा पितरेव शम्भू ॥७॥
युवाम् । इत् । हि । अवसे । पूर्व्याय । परि । प्रभूती इति ।
प्र०भूती । गो०इषः । स्वापी इति सु०आपी ॥ वृणीमहे । सख्याय ।
प्रियाय । शूरा । मंहिष्ठा । पितराऽइव । शम्भू इति शम्०भू ॥७॥

ता वां धियोऽवसे वाजयन्तीराजिं न जग्मुर्युवयूः सुदानू ।
श्रिये न गाव ऽउप सोममस्थुरिन्द्रं गिरो वरुणं मे मनीषाः ॥८॥
ताः । वाम् । धियः । अवसे । वाज०यन्तीः । आजिम् । न ।
जग्मुः । युव०यूः । सुदानू इति सु०दानू ॥ श्रिये । न । गावः । उप ।
सोमम् । अस्थुः । इन्द्रम् । गिरः । वरुणम् । मे । मनीषाः ॥८॥

इमा ऽइन्द्रं वरुणं मे मनीषा ऽअग्मन्नुप द्रविणमिच्छमानाः ।
उपेमस्थुर्जोष्टारइव वस्वो रघ्वीरिव श्रवसो भिक्षमाणाः ॥९॥

इमाः । इन्द्रम् । वरुणम् । मे । मनीषाः । अग्मन् ।
उप । द्रविणम् । इच्छमानाः ॥ उप । ईम् । अस्थुः । जोष्टारःऽइव ।
वस्वः । रघ्वीःऽइव । श्रवसः । भिक्षमाणाः ॥९॥

**अश्व्यस्य त्मना रथ्यस्य पुष्टेर्नित्यस्य रायः पतयः स्याम ।**
**ता चक्राणा ऊतिभिर्नव्यसीभिरस्मत्रा रायो नियुतः सचन्ताम् ॥१०॥**
अश्व्यस्य । त्मना । रथ्यस्य । पुष्टेः । नित्यस्य ।
रायः । पतयः । स्याम ॥ ता । चक्राणौ । ऊति०भिः ।
नव्यसीभिः । अस्म०त्रा । रायः । नि०युतः । सचन्ताम् ॥१०॥

**आ नो बृहन्ता बृहतीभिरूती ऽइन्द्र यातं वरुण वाजसातौ ।**
**यद्दिद्यवः पृतनासु प्रक्रीळान्तस्य वां स्याम सनितार ऽआजेः ॥११॥ ( १६ ) [ ९९३ ]**
आ । नः । बृहन्ता । बृहतीभिः । ऊती । इन्द्र ।
यातम् । वरुण । वाज०सातौ ॥ यत् । दिद्यवः । पृतनासु ।
प्र०क्रीळान् । तस्य । वाम् । स्याम । सनितारः । आजेः ॥११॥

## ( ४२ )

१० त्रसदस्युः पौरुकुत्स्यः । १-६ त्रसदस्योरात्मस्तवः, ७-१० इन्द्रावरुणौ । त्रिष्टुप् ।

**मम द्विता राष्ट्रं क्षत्रियस्य विश्वायोर्विश्वे ऽअमृता यथा नः ।**
**क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥१॥**
मम । द्विता । राष्ट्रम् । क्षत्रियस्य । विश्व०आयोः ।
विश्वे । अमृताः । यथा । नः ॥ क्रतुम् । सचन्ते । वरुणस्य ।
देवाः । राजामि । कृष्टेः । उपमस्य । वव्रेः ॥१॥

**अहं राजा वरुणो मह्यं तान्यसुर्याणि प्रथमा धारयन्त ।**
**क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥२॥**

अहम् । राजा । वरुणः । मह्यम् । तानि । असुर्याणि ।
प्रथमा । धारयन्त ॥ क्रतुम् । सचन्ते । वरुणस्य ।
देवाः । राजामि । कृष्टेः । उपमस्य । वव्रेः ॥२॥

**अहमिन्द्रो वरुणस्ते महित्वोर्वी गभीरे रजसी सुमेके ।**
**त्वष्टेव विश्वा भुवनानि विद्वान्त्समैरयं रोदसी धारयं च ॥३॥**
अहम् । इन्द्रः । वरुणः । ते इति । महि०त्वा । उर्वी इति । गभीरे इति ।
रजसी इति । सुमेके इति सु०मेके ॥ त्वष्टाऽइव । विश्वा । भुवनानि ।
विद्वान् । सम् । ऐरयम् । रोदसी इति । धारयम् । च ॥३॥

**अहमपो ऽअपिन्वमुक्षमाणा धारयं दिवं सदन ऽऋतस्य ।**
**ऋतेन पुत्रो ऽअदितेर्ऋतावोत त्रिधातु प्रथयद्वि भूम ॥४॥**
अहम् । अपः । अपिन्वम् । उक्षमाणाः । धारयम् ।
दिवम् । सदने । ऋतस्य ॥ ऋतेन । पुत्रः । अदितेः ।
ऋत०वा । उत । त्रि०धातु । प्रथयत् । वि । भूम ॥४॥

**मां नरः स्वश्वा वाजयन्तो मां वृताः समरणे हवन्ते ।**
**कृणोम्याजिं मघवाहमिन्द्र ऽइयर्मि रेणुमभिभूत्योजाः ॥५॥ (१७)**
माम् । नरः । सु०अश्वाः । वाज०यन्तः । माम् । वृताः ।
सम्०अरणे । हवन्ते ॥ कृणोमि । आजिम् । मघ०वा ।
अहम् । इन्द्रः । इयर्मि । रेणुम् । अभिभूति०ओजाः ॥५॥

**अहं ता विश्वा चकरं नकिर्मा दैव्यं सहो वरते ऽअप्रतीतम् ।**
**यन्मा सोमासो ममदन्यदुक्थोभे भयेते रजसी ऽअपारे ॥६॥**
अहम् । ता । विश्वा । चकरम् । नकिः । मा । दैव्यम् । सहः ।
वरते । अप्रति०इतम् ॥ यत् । मा । सोमासः । ममदन् । यत् ।
उक्था । उभे इति । भयेते इति । रजसी इति । अपारे इति ॥६॥

**विदुष्टे विश्वा भुवनानि तस्य ता प्र ब्रवीषि वरुणाय वेधः ।**
**त्वं वृत्राणि शृण्विषे जघन्वान्त्वं वृताँ ऽअरिणा ऽइन्द्र सिन्धून् ॥७॥**
विदुः । ते । विश्वा । भुवनानि । तस्य । ता । प्र । ब्रवीषि ।
वरुणाय । वेधः ॥ त्वम् । वृत्राणि । शृण्विषे । जघन्वान् ।
त्वम् । वृतान् । अरिणाः । इन्द्र । सिन्धून् ॥७॥

**अस्माकमत्र पितरस्त ऽआसन्त्सप्त ऽऋषयो दौर्गहे बध्यमाने ।**
**त ऽआयजन्त त्रसदस्युमस्या ऽइन्द्रं न वृत्रतुरमर्द्धदेवम् ॥८॥**
अस्माकम् । अत्र । पितरः । ते । आसन् । सप्त । ऋषयः ।
दौः२गहे । बध्यमाने ॥ ते । आ । अयजन्त । त्रसदस्युम् ।
अस्याः । इन्द्रम् । न । वृत्र०तुरम् । अर्द्ध०देवम् ॥८॥

**पुरुकुत्सानी हि वामदाशद्धव्येभिरिन्द्रावरुणा नमोभिः ।**
**अथा राजानं त्रसदस्युमस्या वृत्रहणं ददथुरर्द्धदेवम् ॥९॥**
पुरु०कुत्सानी । हि । वाम् । अदाशत् । हव्येभिः ।
इन्द्रावरुणा । नमः२भिः ॥ अथ । राजानम् । त्रसदस्युम् ।
अस्याः । वृत्र०हनम् । ददथुः । अर्द्ध०देवम् ॥९॥

**राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः ।**
**तां धेनुमिन्द्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम् ॥१०॥ ( १८ ) [ १००३ ]**
राया । वयम् । सस०वांसः । मदेम । हव्येन । देवाः ।
यवसेन । गावः ॥ ताम् । धेनुम् । इन्द्रावरुणा । युवम् ।
नः । विश्वाहा । धत्तम् । अनप०स्फुरन्तीम् ॥१०॥

# ( ४३ )

७ पुरुमीळ्हाजमीळ्हौ सौहोत्रौ । अश्विनौ । त्रिष्टुप् ।

क ऽउ श्रवत्कतमो यज्ञियानां वन्दारु देवः कतमो जुषाते ।
कस्येमां देवीममृतेषु प्रेष्ठां हृदि श्रेषाम सुष्टुतिं सुहव्याम् ॥१॥
कः । ऊँ इति । श्रवत् । कतमः । यज्ञियानाम् । वन्दारु ।
देवः । कतमः । जुषाते ॥ कस्य । इमाम् । देवीम् ।
अमृतेषु । प्रेष्ठाम् । हृदि । श्रेषाम । सु०स्तुतिम् । सु०हव्याम् ॥१॥

को मृळाति कतम ऽआगमिष्ठो देवानामु कतमः शंभविष्ठः ।
रथं कमाहुर्द्रवदश्वमाशुं यं सूर्यस्य दुहितावृणीत ॥२॥
कः । मृळाति । कतमः । आ०गमिष्ठः । देवानाम् ।
ऊँ इति । कतमः । शम्०भविष्ठः ॥ रथम् । कम् । आहुः ।
द्रवत्०अश्वम् । आशुम् । यम् । सूर्यस्य । दुहिता । अवृणीत ॥२॥

मक्षू हि ष्मा गच्छथ ऽईवतो द्यूनिन्द्रो न शक्तिं परितक्म्यायाम् ।
दिव ऽआजाता दिव्या सुपर्णा कया शचीनां भवथः शचिष्ठा ॥३॥
मक्षु । हि । स्म । गच्छथः । ईवतः । द्यून् । इन्द्रः । न ।
शक्तिम् । परि०तक्म्यायाम् ॥ दिवः । आ०जाता । दिव्या ।
सु०पर्णा । कया । शचीनाम् । भवथः । शचिष्ठा ॥३॥

का वां भूदुपमातिः कया न ऽआश्विना गमथो हूयमाना ।
को वां महश्चित्त्यजसो ऽअभीक ऽउरुष्यतं माध्वी दस्रा न ऽऊती ॥४॥
का । वाम् । भूत् । उप०मातिः । कया । नः । आ । अश्विना ।
गमथः । हूयमाना ॥ कः । वाम् । महः । चित् । त्यजसः ।
अभीके । उरुष्यतम् । माध्वी इति । दस्रा । नः । ऊती ॥४॥

**उरु वां रथः परि नक्षति द्यामा यत्समुद्रादभि वर्त्तते वाम् ।**
**मध्वा माध्वी मधु वां प्रुषायन्यत्सीं वां पृक्षो भुरजन्त पक्वाः ॥५॥**

उरु । वाम् । रथः । परि । नक्षति । द्याम् । आ । यत् ।
समुद्रात् । अभि । वर्त्तते । वाम् ॥ मध्वा । माध्वी इति । मधु ।
वाम् । प्रुषायन् । यत् । सीम् । वाम् । पृक्षः । भुरजन्त । पक्वाः ॥५॥

**सिन्धुर्ह वां रसया सिञ्चदश्वान्घृणा वयोऽरुषासः परि ग्मन् ।**
**तदू षु वामजिरं चेति यानं येन पती भवथः सूर्यायाः ॥६॥**

सिन्धुः । ह । वाम् । रसया । सिञ्चत् । अश्वान् । घृणा । वयः ।
अरुषासः । परि । ग्मन् ॥ तत् । ऊँ इति । सु । वाम् अजिरम् ।
चेति । यानम् । येन । पती इति । भवथः । सूर्यायाः ॥६॥

**इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।**
**उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥७॥ ( १९ ) [ १०१० ]**

इह०इह । यत् । वाम् । समना । पपृक्षे । सा । इयम् ।
अस्मे इति । सु०मतिः । वाज०रत्ना ॥ उरुष्यतम् । जरितारम् ।
युवम् । ह । श्रितः । कामः । नासत्या । युवद्रिक् ॥७॥

# ( ४४ )

७ पुरुमीळ्हाजमीळ्हौ सौहोत्रौ । अश्विनौ । त्रिष्टुप् ।

**तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना संगतिं गोः ।**
**यः सूर्यां वहति वन्धुरायुर्गिर्वाहसं पुरुतमं वसूयुम् ॥१॥**

तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । पृथु०ज्रयम् ।
अश्विना । सम्०गतिम् । गोः ॥ यः । सूर्याम् । वहति ।
वन्धुर०युः । गिर्वाहसम् । पुरु०तमम् । वसु०युम् ॥१॥

युवं श्रियमश्विना देवता तां दिवो नपाता वनथः शचीभिः ।
युवोर्वपुरभि पृक्षः सचन्ते वहन्ति यत्ककुहासो रथे वाम् ॥२॥
युवम् । श्रियम् । अश्विना । देवता । ताम् । दिवः ।
नपाता । वनथः । शचीभिः ॥ युवोः । वपुः । अभि ।
पृक्षः । सचन्ते । वहन्ति । यत् । ककुहासः । रथे । वाम् ॥२॥

को वामद्या करते रातहव्य ऽऊतये वा सुतपेयाय वार्कैः ।
ऋतस्य वा वनुषे पूर्व्याय नमो येमानो ऽअश्विना ववर्तत् ॥३॥
कः । वाम् । अद्य । करते । रात०हव्यः । ऊतये ।
वा । सुत०पेयाय । वा । अर्कैः ॥ ऋतस्य । वा । वनुषे ।
पूर्व्याय । नमः । येमानः । अश्विना । आ । ववर्तत् ॥३॥

हिरण्ययेन पुरुभू रथेनेमं यज्ञं नासत्योप यातम् ।
पिबाथ ऽइन्मधुनः सोम्यस्य दधथो रत्नं विधते जनाय ॥४॥
हिरण्ययेन । पुरुभू इति पुरु०भू । रथेन । इमम् ।
यज्ञम् । नासत्या । उप । यातम् ॥ पिबाथः । इत् ।
मधुनः । सोम्यस्य । दधथः । रत्नम् । विधते । जनाय ॥४॥

आ नो यातं दिवो ऽअच्छा पृथिव्या हिरण्ययेन सुवृता रथेन ।
मा वामन्ये नि यमन्देवयन्तः सं यद्ददे नाभिः पूर्व्या वाम् ॥५॥
आ । नः । यातम् । दिवः । अच्छ । पृथिव्याः । हिरण्ययेन ।
सु०वृता । रथेन ॥ मा । वाम् । अन्ये । नि । यमन् ।
देव०यन्तः । सम् । यत् । ददे । नाभिः । पूर्व्या । वाम् ॥५॥

नू नो रयिं पुरुवीरं बृहन्तं दस्रा मिमाथामुभयेष्वस्मे ।
नरो यद्वामश्विना स्तोममावन्त्सधस्तुतिमाजमीळ्हासो ऽअग्मन् ॥६॥

नु । नः । रयिम् । पुरु॰वीरम् । बृहन्तम् । दस्रा । मिमाथाम् ।
उभयेषु । अस्मे इति ॥ नरः । यत् । वाम् । अश्विना । स्तोमम् ।
आवन् । सध॰स्तुतिम् । आज॰मीळ्हासः । अग्मन् ॥६॥

**इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।**
**उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥७॥ ( २० ) [ १०१७ ]**
इह॰इह । यत् । वाम् । समना । पपृक्षे । सा । इयम् ।
अस्मे इति । सु॰मतिः । वाज॰रत्ना ॥ उरुष्यतम् । जरितारम् ।
युवम् । ह । श्रितः । कामः । नासत्या । युवद्रिक् ॥७॥

## ( ४५ )

७ वामदेवो गौतमः । अश्विनौ । जगती, ७ त्रिष्टुप् ।

**एष स्य भानुरुदियर्त्ति युज्यते रथः परिज्मा दिवो ऽअस्य सानवि ।**
**पृक्षासो ऽअस्मिन्मिथुना ऽअधि त्रयो दृतिस्तुरीयो मधुनो वि रप्शते ॥१॥**
एषः । स्यः । भानुः । उत् । इयर्त्ति । युज्यते । रथः । परि॰ज्मा ।
दिवः । अस्य । सानवि ॥ पृक्षासः । अस्मिन् । मिथुनाः । अधि ।
त्रयः । दृतिः । तुरीयः । मधुनः । वि । रप्शते ॥१॥

**उद्वां पृक्षासो मधुमन्त ऽईरते रथा ऽअश्वास ऽउषसो व्युष्टिषु ।**
**अपोर्णुवन्तस्तम ऽआ परीवृतं स्वर्ण शुक्रं तन्वन्त ऽआ रजः ॥२॥**
उत् । वाम् । पृक्षासः । मधु॰मन्तः । ईरते । रथाः ।
अश्वासः । उषसः । वि॰उष्टिषु ॥ अप॰ऊर्णुवन्तः । तमः । आ ।
परि॰वृतम् । स्वः । न । शुक्रम् । तन्वन्तः । आ । रजः ॥२॥

**मध्वः पिबतं मधुपेभिरासभिरुत प्रियं मधुने युञ्जाथां रथम् ।**
**आ वर्त्तनिं मधुना जिन्वथस्पथो दृतिं वहेथे मधुमन्तमश्विना ॥३॥**

मध्वः । पिबतम् । मधुऽपेभिः । आसऽभिः । उत । प्रियम् ।
मधुने । युञ्जाथाम् । रथम् ॥ आ । वर्त्तनिम् । मधुना जिन्वथः ।
पथः । दृतिम् । वहेथे इति । मधुऽमन्तम् । अश्विना ॥३॥

हंसासो ये वां मधुमन्तो ऽअस्रिधो हिरण्यपर्णा ऽउहुव ऽउषर्बुधः ।
उदप्रुतो मन्दिनो मन्दिनिस्पृशो मध्वो न मक्षः सवनानि गच्छथः ॥४॥
हंसासः । ये । वाम् । मधुऽमन्तः । अस्रिधः । हिरण्यऽपर्णाः ।
उहुवः । उषःऽबुधः ॥ उदऽप्रुतः । मन्दिनः । मन्दिऽनिस्पृशः ।
मध्वः । न । मक्षः । सवनानि । गच्छथः ॥४॥

स्वध्वरासो मधुमन्तो ऽअग्नय ऽउस्रा जरन्ते प्रति वस्तोरश्विना ।
यन्निक्तहस्तस्तरणिर्विचक्षणः सोमं सुषाव मधुमन्तमद्रिभिः ॥५॥
सुऽअध्वरासः । मधुऽमन्तः । अग्नयः । उस्रा । जरन्ते ।
प्रति । वस्तोः । अश्विना ॥ यत् । निक्तऽहस्तः । तरणिः ।
विऽचक्षणः । सोमम् । सुसाव । मधुऽमन्तम् । अद्रिऽभिः ॥५॥

आकेनिपासो ऽअहभिर्दविध्वतः स्वर्ण शुक्रं तन्वन्त ऽआ रजः ।
सूरश्चिदश्वान्युयुजान ऽईयते विश्वाँ ऽअनु स्वधया चेतथस्पथः ॥६॥
आकेऽनिपासः । अहऽभिः । दविध्वतः । स्वः । न ।
शुक्रम् । तन्वन्तः । आ । रजः ॥ सूरः । चित् । अश्वान् ।
युयुजानः । ईयते । विश्वान् । अनु । स्वधया । चेतथः । पथः ॥६॥

प्र वामवोचमश्विना धियंधा रथः स्वश्वो ऽअजरो यो ऽअस्ति ।
येन सद्यः परि रजांसि याथो हविष्मन्तं तरणिं भोजमच्छ ॥७॥ ( २१ ) [ १०२४ ]
प्र । वाम् । अवोचम् । अश्विना । धियम्ऽधाः । रथः ।
सुऽअश्वः । अजरः । यः । अस्ति ॥ येन । सद्यः । परि ।
रजांसि । याथः । हविष्मन्तम् । तरणिम् । भोजम् । अच्छ ॥७॥

## ( ४६ ) [ अथ पञ्चमोऽनुवाकः ॥५॥ सू. ४६-५८

७ वामदेवो गौतमः । इन्द्रवायू, १ वायुः । गायत्री ।

**अग्रं पिबा मधूनां सुतं वायो दिविष्टिषु ।**
**त्वं हि पूर्वपा ऽअसि ॥१॥**
अग्रम् । पिब । मधूनाम् । सुतम् । वायो इति । दिविष्टिषु ॥
त्वम् । हि । पूर्व०पाः । असि ॥१॥

**शतेना नो ऽअभिष्टिभिर्नियुत्वाँ ऽइन्द्रसारथिः ।**
**वायो सुतस्य तृम्पतम् ॥२॥**
शतेन । नः । अभिष्टि०भिः । नियुत्वान् । इन्द्र०सारथिः ॥
वायो इति । सुतस्य । तृम्पतम् ॥२॥

**आ वां सहस्रं हरय ऽइन्द्रवायू ऽअभि प्रयः ।**
**वहन्तु सोमपीतये ॥३॥**
आ । वाम् । सहस्रम् । हरयः । इन्द्रवायू इति । अभि । प्रयः ॥
वहन्तु । सोम०पीतये ॥३॥

**रथं हिरण्यवन्धुरमिन्द्रवायू स्वध्वरम् ।**
**आ हि स्थाथो दिविस्पृशम् ॥४॥**
रथम् । हिरण्य०वन्धुरम् । इन्द्रवायू इति । सु०अध्वरम् ॥
आ । हि । स्थाथः । दिवि०स्पृशम् ॥४॥

**रथेन पृथुपाजसा दाश्वांसमुप गच्छतम् ।**
**इन्द्रवायू ऽइहा गतम् ॥५॥**

रथेन । पृथु०पाजसा । दाश्वांसम् । उप । गच्छतम् ॥
इन्द्रवायू इति । इह । आ । गतम् ॥५॥

**इन्द्रवायू ऽअयं सुतस्तं देवेभिः सजोषसा ।**
**पिबतं दाशुषो गृहे ॥६॥**
इन्द्रवायू इति । अयम् । सुतः । तम् । देवेभिः । स०जोषसा ॥
पिबतम् । दाशुषः । गृहे ॥६॥

**इह प्रयाणमस्तु वामिन्द्रवायू विमोचनम् ।**
**इह वां सोमपीतये ॥७॥ ( २२ )** [ १०३१ ]
इह । प्र०यानम् । अस्तु । वाम् । इन्द्रवायू इति । वि०मोचनम् ॥
इह । वाम् । सोम०पीतये ॥७॥

## ( ४७ )

**४ वामदेवो गौतमः । इन्द्रवायू, १ वायुः । अनुष्टुप् ।**

**वायो शुक्रो ऽअयामि ते मध्वो ऽअग्रं दिविष्टिषु ।**
**आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥१॥**
वायो इति । शुक्रः । अयामि । ते । मध्वः । अग्रम् । दिविष्टिषु ॥
आ । याहि । सोम०पीतये । स्पार्हः । देव । नियुत्वता ॥१॥

**इन्द्रश्च वायवेषां सोमानां पीतिमर्हथः ।**
**युवां हि यन्तीन्दवो निम्नमापो न सध्र्यक् ॥२॥**
इन्द्रः । च । वायो इति । एषाम् । सोमानाम् । पीतिम् । अर्हथः ॥
युवाम् । हि । यन्ति । इन्दवः । निम्नम् । आपः । न । सध्र्यक् ॥२॥

**वायविन्द्रश्च शुष्मिणा सरथं शवसस्पती ।**
**नियुत्वन्ता न ऽऊतय ऽआ यातं सोमपीतये ॥३॥**

वायो इति । इन्द्रः । च । शुष्मिणा । स०रथम् । शवसः । पती इति ॥
नियुत्वन्ता । नः । ऊतये । आ । यातम् । सोमपीतये ॥३॥

**या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा ।**
**अस्मे ता यज्ञवाहसेन्द्रवायू नि यच्छतम् ॥४॥ (२३)** [१०३५]
याः । वाम् । सन्ति । पुरु०स्पृहः । नि०युतः । दाशुषे । नरा ॥
अस्मे इति । ताः । यज्ञ०वाहसा । इन्द्रवायू इति । नि । यच्छतम् ॥४॥

## (४८)

५ वामदेवो गौतमः । वायुः । अनुष्टुप् ।

**विहि होत्रा ऽअवीता विपो न रायो ऽअर्यः ।**
**वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥१॥**
विहि । होत्राः । अवीताः । विपः । न । रायः । अर्यः ॥
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥१॥

**निर्युवाणो ऽअशस्तीर्नियुत्वाँ ऽइन्द्रसारथिः ।**
**वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥२॥**
निः२युवानः । अशस्तीः । नियुत्वान् । इन्द्र०सारथिः ॥
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥२॥

**अनु कृष्णे वसुधिती येमाते विश्वपेशसा ।**
**वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥३॥**
अनु । कृष्णे इति। वसुधिती इति वसु०धिती । येमाते इति । विश्व०पेशसा ॥
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥३॥

वहन्तु त्वा मनोयुजो युक्तासो नवतिर्नव ।
वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥४॥
वहन्तु । त्वा । मनःऽयुजः । युक्तासः । नवतिः । नव ॥
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥४॥

वायो शतं हरीणां युवस्व पोष्याणाम् ।
उत वा ते सहस्रिणो रथ ऽआ यातु पाजसा ॥५॥ ( २४ ) [ १०४० ]
वायो इति । शतम् । हरीणाम् । युवस्व । पोष्याणाम् ॥
उत । वा । ते । सहस्रिणः । रथः । आ । यातु । पाजसा ॥५॥

## ( ४९ )

६ वामदेवो गौतमः । इन्द्राबृहस्पती । गायत्री ।

इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती ।
उक्थं मदश्च शस्यते ॥१॥
इदम् । वाम् । आस्ये । हविः । प्रियम् । इन्द्राबृहस्पती इति ॥
उक्थम् । मदः । च । शस्यते ॥१॥

अयं वां परि षिच्यते सोम ऽइन्द्राबृहस्पती ।
चारुर्मदाय पीतये ॥२॥
अयम् । वाम् । परि । सिच्यते । सोमः । इन्द्राबृहस्पती इति ॥
चारुः । मदाय । पीतये ॥२॥

आ न ऽइन्द्राबृहस्पती गृहमिन्द्रश्च गच्छतम् ।
सोमपा सोमपीतये ॥३॥
आ । नः । इन्द्राबृहस्पती इति । गृहम् । इन्द्रः । च । गच्छतम् ॥
सोम०पा । सोम०पीतये ॥३॥

**अस्मे ऽइन्द्राबृहस्पती रयिं धत्तं शतग्विनम् ।**
**अश्वावन्तं सहस्रिणम् ॥४॥**
अस्मे इति । इन्द्राबृहस्पती इति । रयिम् । धत्तम् । शत०ग्विनम् ॥
अश्व०वन्तम् । सहस्रिणम् ॥४॥

**इन्द्राबृहस्पती वयं सुते गीर्भिर्हवामहे ।**
**अस्य सोमस्य पीतये ॥५॥**
इन्द्राबृहस्पती इति । वयम् । सुते । गीःऽभिः । हवामहे ॥
अस्य । सोमस्य । पीतये ॥५॥

**सोममिन्द्राबृहस्पती पिबतं दाशुषो गृहे ।**
**मादयेथां तदोकसा ॥६॥ ( २५ )** [ १०४६ ]
सोमम् । इन्द्राबृहस्पती इति । पिबतम् । दाशुषः । गृहे ॥
मादयेथाम् । तत्०ओकसा ॥६॥

# ( ५० )

**११ वामदेवो गौतमः । बृहस्पतिः, १० - ११ इन्द्राबृहस्पती । त्रिष्टुप् , १० जगती ।**
**यस्तस्तम्भ सहसा वि ज्मो ऽअन्तान्बृहस्पतिस्त्रिषधस्थो रवेण ।**
**तं प्रत्नास ऽऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम् ॥१॥**
यः । तस्तम्भ । सहसा । वि । ज्मः । अन्तान् ।
बृहस्पतिः त्रि०सधस्थः । रवेण ॥ तम् । प्रत्नासः ।
ऋषयः । दीध्यानाः । पुरः । विप्राः । दधिरे । मन्द्र०जिह्वम् ॥१॥

**धुनेतयः सुप्रकेतं मदन्तो बृहस्पते ऽअभि ये नस्ततस्रे ।**
**पृषन्तं सृप्रमदब्धमूर्वं बृहस्पते रक्षतादस्य योनिम् ॥२॥**

धुन॰ईतयः । सु॰प्रकेतम् । मदन्तः । बृहस्पते । अभि ।
ये । नः । ततस्रे ॥ पृषन्तम् । सृप्रम् । अदब्धम् ।
ऊर्वम् । बृहस्पते । रक्षतात् । अस्य । योनिम् ॥२॥

**बृहस्पते या परमा परावदत ऽआ त ऽऋतस्पृशो नि षेदुः ।**
**तुभ्यं खाता ऽअवता ऽअद्रिदुग्धा मध्वः श्चोतन्त्यभितो विरप्शम् ॥३॥**
बृहस्पते । या । परमा । परा॰वत् । अतः । आ । ते ।
ऋत॰स्पृशः । नि । सेदुः ॥ तुभ्यम् । खाताः । अवताः ।
अद्रि॰दुग्धाः । मध्वः । श्चोतन्ति । अभितः । वि॰रप्शम् ॥३॥

**बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् ।**
**सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमांसि ॥४॥**
बृहस्पतिः । प्रथमम् । जायमानः । महः । ज्योतिषः ।
परमे । वि॰ओमन् ॥ सप्त॰आस्यः । तुवि॰जातः ।
रवेण । वि । सप्त॰रश्मिः । अधमत् । तमांसि ॥४॥

**स सुष्टुभा स ऽऋक्वता गणेन वलं रुरोज फलिगं रवेण ।**
**बृहस्पतिरुस्रियां हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥५॥ ( २६ )**
सः । सु॰स्तुभा । सः । ऋक्वता । गणेन । वलम् ।
रुरोज । फलि॰गम् । रवेण ॥ बृहस्पतिः । उस्रियाः ।
हव्य॰सूदः । कनिक्रदत् । वावशतीः । उत् । आजत् ॥५॥

**एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।**
**बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥६॥**
एव । पित्रे । विश्व॰देवाय । वृष्णे । यज्ञैः ।
विधेम । नमसा । हविःऽभिः ॥ बृहस्पते । सु॰प्रजाः ।
वीर॰वन्तः । वयम् । स्याम । पतयः । रयीणाम् ॥६॥

स ऽइद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येण ।
बृहस्पतिं यः सुभृतं बिभर्ति वल्गूयति वन्दते पूर्वभाजम् ॥७॥
सः । इत् । राजा । प्रति०जन्यानि । विश्वा । शुष्मेण ।
तस्थौ । अभि । वीर्येण ॥ बृहस्पतिम् । यः । सु०भृतम् ।
बिभर्ति । वल्गु०यति । वन्दते । पूर्व०भाजम् ॥७॥

स ऽइत्क्षेति सुधित ऽओकसि स्वे तस्मा ऽइळा पिन्वते विश्वदानीम् ।
तस्मै विशः स्वयमेवा नमन्ते यस्मिन्ब्रह्मा राजनि पूर्व ऽएति ॥८॥
सः । इत् । क्षेति । सु०धितः । ओकसि । स्वे । तस्मै ।
इळा । पिन्वते । विश्व०दानीम् ॥ तस्मै । विशः । स्वयम् ।
एव । नमन्ते । यस्मिन् । ब्रह्मा । राजनि । पूर्वः । एति ॥८॥

अप्रतीतो जयति सं धनानि प्रतिजन्यान्युत या सजन्या ।
अवस्यवे यो वरिवः कृणोति ब्रह्मणे राजा तमवन्ति देवाः ॥९॥
अप्रति०इतः । जयति । सम् । धनानि । प्रति०जन्यानि ।
उत । या । स०जन्या ॥ अवस्यवे । यः । वरिवः ।
कृणोति । ब्रह्मणे । राजा । तम् । अवन्ति । देवाः ॥९॥

इन्द्रश्च सोमं पिबतं बृहस्पतेऽस्मिन्यज्ञे मन्दसाना वृषण्वसू ।
आ वां विशन्त्विन्दवः स्वाभुवोऽस्मे रयिं सर्ववीरं नि यच्छतम् ॥१०॥
इन्द्रः । च । सोमम् । पिबतम् । बृहस्पते । अस्मिन् । यज्ञे ।
मन्दसाना । वृषण्वसू इति वृषण्०वसू ॥ आ । वाम् । विशन्तु । इन्दवः ।
सु०आभुवः । अस्मे इति । रयिम् । सर्व०वीरम् । नि । यच्छतम् ॥१०॥

बृहस्पत ऽइन्द्र वर्द्धतं नः सचा सा वां सुमतिर्भूत्वस्मे ।
अविष्टं धियो जिगृतं पुरंधीर्जजस्तमर्यो वनुषामरातीः ॥११॥ ( २७ ) [ १०५७ ]

बृहस्पते । इन्द्र । वर्द्धतम् । नः । सचा । सा । वाम् ।
सु॰मतिः । भूतु । अस्मे इति ॥ अविष्टम् । धियः जिगृतम् ।
पुरम्॰धीः । जजस्तम् । अर्यः । वनुषाम् । अरातीः ॥११॥

॥ इति तृतीयाष्टके सप्तमोऽध्यायः ॥ ७ ॥

# सप्तमाध्यायस्य मन्त्रवर्गानुक्रमणी



॥ इति शाङ्खायनसंहितायां तृतीयाष्टके सप्तमोऽध्यायः ॥

सप्तमाध्याये वर्गाः २७, सूक्तानि १८, ऋचः १४४)

# ॥ तृतीयाष्टकेऽष्टमोऽध्यायः॥

**अथाष्टमोऽध्यायः॥८॥ वर्गाः १-२६ ]** [ चतुर्थमण्डले सूक्तानि ५१-५८

पञ्चममण्डले सूक्तानि १-८

## ( ५१ )

११ वामदेवो गौतमः । उषाः । त्रिष्टुप् ।

**इदमु त्यत्पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।**
**नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥१॥**

इदम् । ऊँ इति । त्यत् । पुरु०तमम् । पुरस्तात् । ज्योतिः ।
तमसः । वयुन०वत् । अस्थात् ॥ नूनम् । दिवः । दुहितरः
वि०भातीः । गातुम् । कृणवन् । उषसः । जनाय ॥१॥

**अस्थुरु चित्रा ऽउषसः पुरस्तान्मिताइव स्वरवोऽध्वरेषु ।**
**व्यू व्रजस्य तमसो द्वारोच्छन्तीरव्रञ्छुचयः पावकाः ॥२॥**

अस्थुः । ऊँ इति । चित्राः । उषसः । पुरस्तात् । मिताःऽइव ।
स्वरवः । अध्वरेषु ॥ वि । ऊँ इति । व्रजस्य तमसः ।
द्वारा । उच्छन्तीः । अव्रन् । शुचयः । पावकाः ॥२॥

**उच्छन्तीरद्य चितयन्त भोजात्राधोदेयायोषसो मघोनीः ।**
**अचित्रे ऽअन्तः पणयः ससन्त्वबुध्यमानास्तमसो विमध्ये ॥३॥**

उच्छन्तीः । अद्य । चितयन्त । भोजान् । राधः२देयाय ।
उषसः । मघोनीः ॥ अचित्रे । अन्तरिति । पणयः ।
ससन्तु । अबुध्यमानाः । तमसः । वि०मध्ये ॥३॥

**कुवित्स देवीः सनयो नवो वा यामो बभूयादुषसो वो ऽअद्य ।**
**येना नवग्वे ऽअङ्गिरे दशग्वे सप्तास्ये रेवती रेवदूष ॥४॥**

कुवित् । सः । देवीः । सनयः । नवः । वा । यामः ।
बभूयात् । उषसः । वः । अद्य ॥ येन । नवऽग्वे । अङ्गिरे ।
दशऽग्वे । सप्तऽआस्ये । रेवतीः । रेवत् । ऊष ॥४॥

**यूयं हि देवीर्ऋतयुग्भिरश्वैः परिप्रयाथ भुवनानि सद्यः ।**
**प्रबोधयन्तीरुषसः ससन्तं द्विपाच्चतुष्पाच्चरथाय जीवम् ॥५॥ ( १ )**
यूयम् । हि । देवीः । ऋतयुक्ऽभिः । अश्वैः । परिऽप्रयाथ । ।
भुवनानि । सद्यः ॥ प्रऽबोधयन्तीः । उषसः । ससन्तम् ।
द्विऽपात् । चतुःऽपात् । चरथाय । जीवम् ॥५॥

**क्व स्विदासां कतमा पुराणी यया विधाना विदधुर्ऋभूणाम् ।**
**शुभं यच्छुभ्रा ऽउषसश्चरन्ति न वि ज्ञायन्ते सदृशीरजुर्याः ॥६॥**
क्व । स्वित् । आसाम् । कतमा । पुराणी । यया ।
विऽधाना । विऽदधुः । ऋभूणाम् ॥ शुभम् । यत् । शुभ्राः उषसः ।
चरन्ति । न । वि । ज्ञायन्ते । सऽदृशीः । अजुर्याः ॥६॥

**ता घा ता भद्रा ऽउषसः पुरासुरभिष्टिद्युम्ना ऽऋतजातसत्याः ।**
**यास्वीजानः शशमान ऽउक्थैः स्तुवञ्छंसन्द्रविणं सद्य ऽआप ॥७॥**
ताः । घ । ताः । भद्राः । उषसः । पुरा । आसुः ।
अभिष्टिऽद्युम्नाः । ऋतजातऽसत्याः ॥ यासु । ईजानः ।
शशमानः । उक्थैः । स्तुवन् । शंसन् । द्रविणम् । सद्यः । आप ॥७॥

**ता ऽआ चरन्ति समना पुरस्तात्समानतः समना पप्रथानाः ।**
**ऋतस्य देवीः सदसो बुधाना गवां न सर्गा ऽउषसो जरन्ते ॥८॥**
ताः । आ । चरन्ति । समना । पुरस्तात् । समानतः ।
समना । पप्रथानाः ॥ ऋतस्य । देवीः । सदसः ।
बुधानाः । गवाम् । न । सर्गाः । उषसः । जरन्ते ॥८॥

**ता ऽइन्वेईव समना समानीरमीतवर्णा ऽउषसश्चरन्ति ।**
**गूहन्तीरभ्वमसितं रुशद्भिः शुक्रास्तनूभिः शुचयो रुचानाः ॥९॥**
ताः । इत् । नु । एव । समना । समानीः । अमीत॰वर्णाः ।
उषसः । चरन्ति ॥ गूहन्तीः । अभ्वम् । असितम् ।
रुशत्॰भिः । शुक्राः । तनूभिः । शुचयः । रुचानाः ॥९॥

**रयिं दिवो दुहितरो विभातीः प्रजावन्तं यच्छतास्मासु देवीः ।**
**स्योनादा वः प्रतिबुध्यमानाः सुवीर्यस्य पतयः स्याम ॥१०॥**
रयिम् । दिवः । दुहितरः । वि॰भातीः । प्रजा॰वन्तम् । यच्छत ।
अस्मासु । देवीः ॥ स्योनात् । आ । वः ।
प्रति॰बुध्यमानाः । सु॰वीर्यस्य । पतयः । स्याम ॥१०॥

**तद्वो दिवो दुहितरो विभातीरुप ब्रुव ऽउषसो यज्ञकेतुः ।**
**वयं स्याम यशसो जनेषु तद्द्यौश्च धत्तां पृथिवी च देवी ॥११॥ ( २ ) [ १०६८ ]**
तत् । वः । दिवः । दुहितरः । वि॰भातीः । उप ।
ब्रुवे । उषसः । यज्ञ॰केतुः ॥ वयम् । स्याम । यशसः ।
जनेषु । तत् । द्यौः । च । धत्ताम् । पृथिवी । च । देवी ॥११॥

## ( ५२ )

७ वामदेवो गौतमः । उषाः । गायत्री ।

**प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः ।**
**दिवो ऽअदर्शि दुहिता ॥१॥**
प्रति । स्या । सूनरी । जनी । वि॰उच्छन्ती । परि । स्वसुः ॥
दिवः । अदर्शि । दुहिता ॥१॥

**अश्वेव चित्रारुषी माता गवामृतावरी ।**
**सखाभूदश्विनोरुषाः ॥२॥**

अश्वाऽइव । चित्रा । अरुषी । माता । गवाम् । ऋत०वरी ॥
सखा । अभूत् । अश्विनोः । उषाः ॥२॥

**उत सखास्यश्विनोरुत माता गवामसि ।**
**उतोषो वस्व ऽईशिषे ॥३॥**
उत । सखा । असि । अश्विनोः । उत । माता । गवाम् । असि ॥
उत । उषः । वस्वः । ईशिषे ॥३॥

**यावयद्द्वेषसं त्वा चिकित्वित्सूनृतावरि ।**
**प्रति स्तोमैरभुत्स्महि ॥४॥**
यवयत्०द्वेषसम् । त्वा । चिकित्वित् । सूनृता०वरि ॥
प्रति । स्तोमैः । अभुत्स्महि ॥४॥

**प्रति भद्रा ऽअदृक्षत गवां सर्गा न रश्मयः ।**
**ओषा ऽअप्रा ऽउरु ज्रयः ॥५॥**
प्रति । भद्राः । अदृक्षत । गवाम् । सर्गाः । न । रश्मयः ॥
आ । उषाः । अप्राः । उरु । ज्रयः ॥५॥

**आपप्रुषी विभावरि व्यावर्ज्योतिषा तमः ।**
**उषो ऽअनु स्वधामव ॥६॥**
आ०पप्रुषी । विभा०वरि । वि । आवः । ज्योतिषा । तमः ॥
उषः । अनु । स्वधाम् । अव ॥६॥

**आ द्यां तनोषि रश्मिभिरान्तरिक्षमुरु प्रियम् ।**
**उषः शुक्रेण शोचिषा ॥७॥ ( ३ )** [ १०७५ ]
आ । द्याम् । तनोषि । रश्मि०भिः । आ । अन्तरिक्षम् । उरु । प्रियम् ॥
उषः । शुक्रेण । शोचिषा ॥७॥

# (५३)

७ वामदेवो गौतमः । सविता । जगती ।

**तद्देवस्य सवितुर्वार्यं महद्वृणीमहे ऽअसुरस्य प्रचेतसः ।**
**छर्दिर्येन दाशुषे यच्छति त्मना तन्नो महाँ ऽउदयान्देवो ऽअक्तुभिः ॥१॥**
तत् । देवस्य । सवितुः । वार्यम् । महत् । वृणीमहे ।
असुरस्य । प्रचेतसः ॥ छर्दिः । येन । दाशुषे । यच्छति । त्मना ।
तत् । नः । महान् । उत् । अयान् । देवः । अक्तु०भिः ॥१॥

**दिवो धर्त्ता भुवनस्य प्रजापतिः पिशङ्गं द्रापिं प्रति मुञ्चते कविः ।**
**विचक्षणः प्रथयन्नापृणन्नुर्वजीजनत्सविता सुम्नमुक्थ्यम् ॥२॥**
दिवः । धर्त्ता । भुवनस्य । प्रजा०पतिः । पिशङ्गम् । द्रापिम् ।
प्रति । मुञ्चते । कविः ॥ वि०चक्षणः । प्रथयन् । आ०पृणन् ।
उरु । अजीजनत् । सविता । सुम्नम् । उक्थ्यम् ॥२॥

**आप्रा रजांसि दिव्यानि पार्थिवा श्लोकं देवः कृणुते स्वाय धर्मणे ।**
**प्र बाहू ऽअस्राक्सविता सवीमनि निवेशयन्प्रसुवन्नक्तुभिर्जगत् ॥३॥**
आ । अप्राः । रजांसि । दिव्यानि । पार्थिवा । श्लोकम् । देवः ।
कृणुते । स्वाय । धर्मणे ॥ प्र । बाहू इति । अस्राक् । सविता ।
सवीमनि । नि०वेशयन् । प्र०सुवन् । अक्तु०भिः । जगत् ॥३॥

**अदाभ्यो भुवनानि प्रचाकशद्व्रतानि देवः सविताभि रक्षते ।**
**प्रास्राग्बाहू भुवनस्य प्रजाभ्यो धृतव्रतो महो ऽअज्मस्य राजति ॥४॥**
अदाभ्यः । भुवनानि । प्र०चाकशत् । व्रतानि । देवः । सविता ।
अभि । रक्षते ॥ प्र । अस्राक् । बाहू इति । भुवनस्य ।
प्र०जाभ्यः । धृत०व्रतः । महः । अज्मस्य । राजति ॥४॥

त्रिरन्तरिक्षं सविता महित्वना त्री रजांसि परिभूस्त्रीणि रोचना ।
तिस्रो दिवः पृथिवीस्तिस्र ऽइन्वति त्रिभिर्व्रतैरभि नो रक्षति त्मना ॥५॥
त्रिः । अन्तरिक्षम् । सविता । महि०त्वना । त्री । रजांसि ।
परि०भूः । त्रीणि । रोचना ॥ तिस्रः । दिवः । पृथिवीः । तिस्रः ।
इन्वति । त्रि०भिः । व्रतैः । अभि । नः । रक्षति । त्मना ॥५॥

बृहत्सुम्नः प्रसवीता निवेशनो जगतः स्थातुरुभयस्य यो वशी ।
स नो देवः सविता शर्म यच्छत्वस्मे क्षयाय त्रिवरूथमंहसः ॥६॥
बृहत्०सुम्नः । प्र०सविता । नि०वेशनः । जगतः । स्थातुः ।
उभयस्य । यः । वशी ॥ सः । नः । देवः । सविता । शर्म ।
यच्छतु । अस्मे इति । क्षयाय । त्रि०वरूथम् । अंहसः ॥६॥

आगन्देव ऽऋतुभिर्वर्द्धतु क्षयं दधातु नः सविता सुप्रजामिषम् ।
स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयिमस्मे समिन्वतु ॥७॥ (४) [ १०८२ ]
आ । अगन् । देवः । ऋतु०भिः । वर्द्धतु । क्षयम् । दधातु । नः ।
सविता । सु०प्रजाम् । इषम् ॥ सः । नः । क्षपाभिः । अह०भिः । च ।
जिन्वतु । प्रजा०वन्तम् । रयिम् । अस्मे इति । सम् । इन्वतु ॥७॥

## (५४)

६ वामदेवो गौतमः । सविता । जगती, ६ त्रिष्टुप् ।

अभूद्देवः सविता वन्द्यो नु न ऽइदानीमह्न ऽउपवाच्यो नृभिः ।
वि यो रत्ना भजति मानवेभ्यः श्रेष्ठं नो ऽअत्र द्रविणं यथा दधत् ॥१॥
अभूत् । देवः । सविता । वन्द्यः । नु । नः । इदानीम् ।
अह्नः । उप०वाच्यः । नृ०भिः ॥ वि । यः । रत्ना । भजति ।
मानवेभ्यः । श्रेष्ठम् । नः । अत्र । द्रविणम् । यथा । दधत् ॥१॥

देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वं सुवसि भागमुत्तमम् ।
आदिद्दामानं सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥२॥
देवेभ्यः । हि । प्रथमम् । यज्ञियेभ्यः । अमृत॰त्वम् । सुवसि ।
भागम् । उत्॰तमम् ॥ आत् । इत् । दामानम् । सवितः । वि ।
ऊर्णुषे । अनूचीना । जीविता । मानुषेभ्यः ॥२॥

अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता ।
देवेषु च सवितर्मानुषेषु च त्वं नो ऽअत्र सुवतादनागसः ॥३॥
अचित्ती । यत् । चकृम । दैव्ये । जने । दीनैः । दक्षैः ।
प्र॰भूती । पुरुषत्वता ॥ देवेषु । च । सवितः । मानुषेषु ।
च । त्वम् । नः । अत्र । सुवतात् । अनागसः ॥३॥

न प्रमिये सवितुर्दैव्यस्य तद्यथा विश्वं भुवनं धारयिष्यति ।
यत्पृथिव्या वरिमन्ना स्वङ्गुरिर्वर्ष्मन्दिवः सुवति सत्यमस्य तत् ॥४॥
न । प्र॰मिये । सवितुः । दैव्यस्य । तत् । यथा । विश्वम् ।
भुवनम् । धारयिष्यति ॥ यत् । पृथिव्याः । वरिमन् । आ ।
सु॰अङ्गुरिः । वर्ष्मन् । दिवः । सुवति । सत्यम् । अस्य । तत् ॥४॥

इन्द्रज्येष्ठान्बृहद्भ्यः पर्वतेभ्यः क्षयाँ ऽएभ्यः सुवसि पस्त्यावतः ।
यथायथा पतयन्तो वियेमिर ऽएवैव तस्थुः सवितः सवाय ते ॥५॥
इन्द्र॰ज्येष्ठान् । बृहत्॰भ्यः । पर्वतेभ्यः । क्षयान् । एभ्यः ।
सुवसि । पस्त्य॰वतः ॥ यथा॰यथा । पतयन्तः । वि॰येमिरे ।
एव । एव । तस्थुः । सवितरिति । सवाय । ते ॥५॥

ये ते त्रिरहन्त्सवितः सवासो दिवेदिवे सौभगमासुवन्ति ।
इन्द्रो द्यावापृथिवी सिन्धुरद्भिरादित्यैर्नो ऽअदितिः शर्म यंसत् ॥६॥ (५) [१०८८]

ये । ते । त्रिः । अहन् । सवितरिति । सवासः । दिवेऽदिवे ।
सौभगम् । आऽसुवन्ति ॥ इन्द्रः । द्यावापृथिवी इति । सिन्धुः ।
अत्ऽभिः । आदित्यैः । नः । अदितिः । शर्म । यंसत् ॥६॥

# ( ५५ )

१० वामदेवो गौतमः । विश्वे देवाः । त्रिष्टुप्, ८ - १० गायत्री ।

**को वस्त्राता वसवः को वरूता द्यावाभूमी ऽअदिते त्रासीथां नः ।**
**सहीयसो वरुण मित्र मर्त्तात्को वोऽध्वरे वरिवो धाति देवाः ॥१॥**
कः । वः । त्राता । वसवः । कः । वरूता । द्यावाभूमी इति ।
अदिते । त्रासीथाम् । नः ॥ सहीयसः । वरुण । मित्र ।
मर्त्तात् । कः । वः । अध्वरे । वरिवः । धाति । देवाः ॥१॥

**प्र ये धामानि पूर्व्याण्यर्चान्वि यदुच्छान्वियोतारो ऽअमूराः ।**
**विधातारो वि ते दधुरजस्रा ऽऋतधीतयो रुरुचन्त दस्माः ॥२॥**
प्र । ये । धामानि । पूर्व्याणि । अर्चान् । वि । यत् ।
उच्छान् । विऽयोतारः । अमूराः ॥ विऽधातारः । वि । ते ।
दधुः । अजस्राः । ऋतऽधीतयः । रुरुचन्त । दस्माः ॥२॥

**प्र पस्त्याईमदितिं सिन्धुमर्कैः स्वस्तिमीळे सख्याय देवीम् ।**
**उभे यथा नो ऽअहनी निपात ऽउषासानक्ता करतामदब्धे ॥३॥**
प्र । पस्त्याम् । अदितिम् । सिन्धुम् । अर्कैः । स्वस्तिम् । ईळे ।
सख्याय । देवीम् ॥ उभे इति । यथा । नः । अहनी इति ।
निऽपातः । उषसानक्ता । करताम् । अदब्धे इति ॥३॥

**व्यर्यमा वरुणश्चेति पन्थामिषस्पतिः सुवितं गातुमग्निः ।**
**इन्द्राविष्णू नृवदु षु स्तवाना शर्म नो यन्तममवद्वरूथम् ॥४॥**

वि । अर्यमा । वरुणः । चेति । पन्थाम् । इषः । पतिः ।
सुवितम् । गातुम् । अग्निः ॥ इन्द्राविष्णू इति । नृ०वत् । ऊँ इति ।
सु । स्तवाना । शर्म । नः । यन्तम् । अम०वत् । वरूथम् ॥४॥

**आ पर्वतस्य मरुतामवांसि देवस्य त्रातुरव्रि भगस्य ।**
**पात्पतिर्जन्यादंहसो नो मित्रो मित्रियादुत न ऽउरुष्येत् ॥५॥ (६)**
आ । पर्वतस्य । मरुताम् । अवांसि । देवस्य । त्रातुः ।
अव्रि । भगस्य ॥ पात् । पतिः । जन्यात् । अंहसः ।
नः । मित्रः । मित्रियात् । उत । नः । उरुष्येत् ॥५॥

**नू रोदसी ऽअहिना बुध्न्येन स्तुवीत देवी ऽअप्येभिरिष्टैः ।**
**समुद्रं न संचरणे सनिष्यवो घर्मस्वरसो नद्यो ३ ऽअप व्रन् ॥६॥**
नु । रोदसी इति । अहिना । बुध्न्येन । स्तुवीत । देवी इति ।
अप्येभिः । इष्टैः ॥ समुद्रम् । न । सम्०चरणे ।
सनिष्यवः । घर्म०स्वरसः । नद्यः । अप । व्रन् ॥६॥

**देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् ।**
**नहि मित्रस्य वरुणस्य धासिमर्हामसि प्रमियं सान्वग्नेः ॥७॥**
देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता ।
त्रायताम् । अप्र०युच्छन् ॥ नहि । मित्रस्य । वरुणस्य ।
धासिम् । अर्हामसि । प्र०मियम् । सानु । अग्नेः ॥७॥

**अग्निरीशे वसव्यस्याग्निर्महः सौभगस्य ।**
**तान्यस्मभ्यं रासते ॥८॥**
अग्निः । ईशे । वसव्यस्य । अग्निः । महः । सौभगस्य ॥
तानि । अस्मभ्यम् । रासते ॥८॥

**उषो मघोन्या वह सूनृते वार्या पुरु ।**
**अस्मभ्यं वाजिनीवति ॥९॥**

उषः । मघोनि । आ । वह । सूनृते । वार्या । पुरु ॥
अस्मभ्यम् । वाजिनी०वति ॥९॥

**तत्सु नः सविता भगो वरुणो मित्रो ऽअर्यमा ।**
**इन्द्रो नो राधसा गमत् ॥१०॥ (७)** [ १०९८ ]

तत् । सु । नः । सविता । भगः । वरुणः । मित्रः । अर्यमा ॥
इन्द्रः । नः । राधसा । आ । गमत् ॥१०॥

## ( ५६ )

७ वामदेवो गौतमः । द्यावापृथिवी । त्रिष्टुप्, ५ - ७ गायत्री ।

**मही द्यावापृथिवी ऽइह ज्येष्ठे रुचा भवतां शुचयद्भिरर्कैः ।**
**यत्सीं वरिष्ठे बृहती विमिन्वन्रुवद्धोक्षा पप्रथानेभिरेवैः ॥१॥**

मही इति । द्यावापृथिवी इति । इह । ज्येष्ठे इति । रुचा ।
भवताम् । शुचयत्०भिः । अर्कैः ॥ यत् । सीम् । वरिष्ठे इति ।
बृहती इति । वि०मिन्वन् । रुवत् । ह । उक्षा । पप्रथानेभिः । एवैः ॥१॥

**देवी देवेभिर्यजते यजत्रैरमिनती तस्थतुरुक्षमाणे ।**
**ऋतावरी ऽअद्रुहा देवपुत्रे यज्ञस्य नेत्री शुचयद्भिरर्कैः ॥२॥**

देवी इति । देवेभिः । यजते इति । यजत्रैः । अमिनती इति ।
तस्थतुः । उक्षमाणे इति ॥ ऋतवरी इत्यृत०वरी । अद्रुहा ।
देवपुत्रे इति देव०पुत्रे । यज्ञस्य । नेत्री इति । शुचयत्०भिः । अर्कैः ॥२॥

**स ऽइत्स्वपा भुवनेष्वास य ऽइमे द्यावापृथिवी जजान ।**
**उर्वी गभीरे रजसी सुमेके ऽअवंशे धीरः शच्या समैरत् ॥३॥**

सः । इत् । सु॒ऽअपाः । भुवनेषु । आ॒स॒ । यः । इ॒मे इति॑ ।
द्यावापृथि॒वी इति॑ । ज॒जान॑ ॥ उ॒र्वी इति॑ । ग॒भी॒रे इति॑ । रज॑सी॒ इति॑ ।
सु॒मेके॒ इति॑ सु॒ऽमेके॑ । अ॒व॒ंशे । धीरः॑ । शच्या॑ । सम् । ऐ॒र॒त् ॥३॥

**नू रोदसी बृहद्भिर्नो वरूथैः पत्नीवद्भिरिषयन्ती सजोषाः ।**
**उरूची विश्वे यजते नि पातं धिया स्याम रथ्यः सदासाः ॥४॥**
नु । रो॒द॒सी॒ इति॑ । बृ॒हत्ऽभिः॑ । न॒ः । वरू॑थैः । पत्नी॑वत्ऽभिः ।
इ॒षय॑न्ती॒ इति॑ । स॒ऽजोषाः॑ ॥ उ॒रू॒ची इति॑ । विश्वे॒ इति॑ । य॒ज॒ते इति॑ ।
नि । पा॒त॒म् । धि॒या । स्या॒म॒ । र॒थ्यः॑ । स॒दा॒ऽसाः ॥४॥

**प्र वां महि द्यवी ऽअभ्युपस्तुतिं भरामहे ।**
**शुची ऽउप प्रशस्तये ॥५॥**
प्र । वा॒म् । महि॑ । द्य॒वी॒ इति॑ । अ॒भि । उप॑ऽस्तुतिम् । भ॒रा॒म॒हे॒ ॥
शु॒ची इति॑ । उप॑ । प्र॒ऽश॑स्तये ॥५॥

**पुनाने तन्वा मिथः स्वेन दक्षेण राजथः ।**
**ऊह्याथे सनादृतम् ॥६॥**
पु॒ना॒ने इति॑ । त॒न्वा॑ । मि॒थः । स्वेन॑ । दक्षे॑ण । रा॒ज॒थ॒ः ॥
ऊ॒ह्या॒थे॒ इति॑ । स॒नात् । ऋ॒तम् ॥६॥

**मही मित्रस्य साधथस्तरन्ती पिप्रती ऽऋतम् ।**
**परि यज्ञं नि षेदथुः ॥७॥ (८)** [ १९०५ ]
म॒ही इति॑ । मि॒त्रस्य॑ । सा॒ध॒थ॒ः । तर॑न्ती॒ इति॑ । पिप्र॑ती॒ इति॑ । ऋ॒तम् ॥
परि॑ । य॒ज्ञम् । नि । से॒द॒थु॒ः ॥७॥

# ( ५७ )

**८ वामदेवो गौतमः । १-३ क्षेत्रपतिः, ४ शुनः, ५, ८ शुनासीरौ, ६-७ सीता । अनुष्टुप्, ५ पुर उष्णिक्, २, ३, ८ त्रिष्टुप् ।**

**क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।**
**गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥१॥**
क्षेत्रस्य । पतिना । वयम् । हितेनऽइव । जयामसि ॥
गाम् । अश्वम् । पोषयित्नु । आ । सः । नः । मृळाति । ईदृशे ॥१॥

**क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो ऽअस्मासु धुक्ष्व ।**
**मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥२॥**
क्षेत्रस्य । पते । मधु०मन्तम् । ऊर्मिम् । धेनुःऽइव ।
पयः । अस्मासु । धुक्ष्व ॥ मधु०श्चुतम् । घृतम्ऽइव ।
सु०पूतम् । ऋतस्य । नः । पतयः । मृळयन्तु ॥२॥

**मधुमतीरोषधीर्द्याव ऽआपो मधुमन्नो भवत्वन्तरिक्षम् ।**
**क्षेत्रस्य पतिर्मधुमान्नो ऽअस्त्वरिष्यन्तो ऽअन्वेनं चरेम ॥३॥**
मधु०मतीः । ओषधीः । द्यावः । आपः । मधु०मत् ।
नः । भवतु । अन्तरिक्षम् ॥ क्षेत्रस्य । पतिः । मधु०मान् ।
नः । अस्तु । अरिष्यन्तः । अनु । एनम् । चरेम ॥३॥

**शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम् ।**
**शुनं वरत्रा बध्यन्तां शुनमष्ट्रामुदिङ्गय ॥४॥**
शुनम् । वाहाः । शुनम् । नरः । शुनम् । कृषतु । लाङ्गलम् ॥
शुनम् । वरत्राः । बध्यन्ताम् । शुनम् । अष्ट्राम् । उत् । इङ्गय ॥४॥

**शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः ।**
**तेनेमामुप सिञ्चतम् ॥५॥**

शुनासीरौ । इमाम् । वाचम् । जुषेथाम् । यत् । दिवि । चक्रथुः । पयः ॥
तेन । इमाम् । उप । सिञ्चतम् ॥५॥

अर्वाची सुभगे भव सीते वन्दामहे त्वा ।
यथा नः सुभगाससि यथा नः सुफलाससि ॥६॥
अर्वाची । सु॰भगे । भव । सीते । वन्दामहे । त्वा ॥
यथा । नः । सु॰भगा । असंसि । यथा । नः । सुफला । असंसि ॥६॥

इन्द्रः सीतां नि गृह्णातु तां पूषानु यच्छतु ।
सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ॥७॥
इन्द्रः । सीताम् । नि । गृह्णातु । ताम् । पूषा । अनु । यच्छतु ॥
सा । नः । पयस्वती । दुहाम् । उत्तराम्॰उत्तराम् । समाम् ॥७॥

शुनं नः फाला वि कृषन्तु भूमिं शुनं कीनाशा ऽअभि यन्तु वाहैः ।
शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम् ॥८॥ ( ९ ) [ १११३ ]
शुनम् । नः । फालाः । वि । कृषन्तु । भूमिम् । शुनम् ।
कीनाशाः । अभि । यन्तु । वाहैः ॥ शुनम् । पर्जन्यः ।
मधुना । पयः२भिः । शुनासीरा । शुनम् । अस्मासु । धत्तम् ॥८॥

## ( ५८ )

११ वामदेवो गौतमः । अग्निः, सूर्यो वाऽऽपो वा गावो वा घृतस्तुतिर्वा । त्रिष्टुप्, ११ जगती ।
समुद्रादूर्मिर्मधुमाँ ऽउदारदुपांशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥१॥
समुद्रात् । ऊर्मिः । मधु॰मान् । उत् । आरत् । उप । अंशुना ।
सम् अमृत॰त्वम् । आनट् ॥ घृतस्य । नाम । गुह्यम् । यत् ।
अस्ति । जिह्वा । देवानाम् । अमृतस्य । नाभिः ॥१॥

वयं नाम प्र ब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर ऽएतत् ॥२॥
वयम् । नाम । प्र । ब्रवाम । घृतस्य । अस्मिन् । यज्ञे ।
धारयाम । नमः२भिः ॥ उप । ब्रह्मा । शृणवत् । शस्यमानम् ।
चतुः२शृङ्गः । अवमीत् । गौरः । एतत् ॥२॥

चत्वारि शृङ्गा त्रयो ऽअस्य पादा द्वे शीर्षे सप्त हस्तासो ऽअस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ ऽआ विवेश ॥३॥
चत्वारि । शृङ्गा । त्रयः । अस्य । पादाः । द्वे इति ।
शीर्षे इति । सप्त । हस्तासः । अस्य ॥ त्रिधा । बद्धः ।
वृषभः । रोरवीति । महः । देवः । मर्त्यान् । आ । विवेश ॥३॥

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द्र ऽएकं सूर्य ऽएकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥४॥
त्रिधा । हितम् । पणि०भिः । गुह्यमानम् । गवि । देवासः घृतम् ।
अनु । अविन्दन् ॥ इन्द्रः । एकम् । सूर्यः । एकम् ।
जजान । वेनात् । एकम् । स्वधया । निः । ततक्षुः ॥४॥

एता ऽअर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे ।
घृतस्य धारा ऽअभि चाकशीमि हिरण्ययो वेतसो मध्य ऽआसाम् ॥५॥ ( १० )
एताः । अर्षन्ति । हृद्यात् । समुद्रात् । शत०व्रजाः । रिपुणा ।
न । अव०चक्षे ॥ घृतस्य । धाराः । अभि । चाकसीमि ।
हिरण्ययः । वेतसः । मध्ये । आसाम् ॥५॥

सम्यक्स्रवन्ति सरितो न धेना ऽअन्तर्हृदा मनसा पूयमानाः ।
एते ऽअर्षन्त्यूर्मयो घृतस्य मृगाइव क्षिपणोरीषमाणाः ॥६॥

सम्यक् । स्रवन्ति । सरितः । न । धेनाः । अन्तः ।
हृदा । मनसा । पूयमानाः ॥ एते । अर्षन्ति । ऊर्मयः
घृतस्य । मृगाःऽइव । क्षिपणोः । ईषमाणाः ॥६॥

**सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।**
**घृतस्य धारा ऽअरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥७॥**
सिन्धोःऽइव । प्र०अध्वने । शूघनासः । वात०प्रमियः ।
पतयन्ति । यह्वाः ॥ घृतस्य । धाराः । अरुषः । न ।
वाजी । काष्ठाः । भिन्दन् । ऊर्मिभिः । पिन्वमानः ॥७॥

**अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो ऽअग्निम् ।**
**घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥८॥**
अभि । प्रवन्त । समनाऽइव । योषाः । कल्याण्यः ।
स्मयमानासः । अग्निम् ॥ घृतस्य । धाराः । सम्०इधः ।
नसन्त । ताः । जुषाणः । हर्यति । जात०वेदाः ॥८॥

**कन्याइव वहतुमेतवा ऽउ ऽअञ्ज्यञ्जाना ऽअभि चाकशीमि ।**
**यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा ऽअभि तत्पवन्ते ॥९॥**
कन्याःऽइव । वहतुम् । एतवै । ऊँ इति । अञ्जि । अञ्जानाः ।
अभि । चाकशीमि ॥ यत्र । सोमः । सूयते । यत्र ।
यज्ञः । घृतस्य । धाराः । अभि । तत् । पवन्ते ॥९॥

**अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।**
**इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥१०॥**
अभि । अर्षत । सु०स्तुतिम् । गव्यम् । आजिम् । अस्मासु ।
भद्रा । द्रविणानि । धत्त ॥ इमम् । यज्ञम् । नयत । देवता ।
नः । घृतस्य । धाराः । मधु०मत् । पवन्ते ॥१०॥

**धामन्ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्य१न्तरायुषि ।**

**अपामनीके समिथे य ऽआभृतस्तमश्याम मधुमन्तं त ऽऊर्मिम् ॥११॥ ( ११ ) [ ११२४ ]**

धामन् । ते । विश्वम् । भुवनम् । अधि । श्रितम् । अन्तरिति ।
समुद्रे । हृदि । अन्तः । आयुषि ॥ अपाम् । अनीके । सम्०इथे ।
यः । आ०भृतः । तम् । अश्याम । मधु०मन्तम् । ते । ऊर्मिम् ॥११॥

॥ इति चतुर्थं मण्डलम् ॥

# ॥ अथ पञ्चमं मण्डलम् ॥

## ( १ ) [ अथ प्रथमोऽनुवाकः ॥१॥ सू. १-१४

१२ बुधागविष्ठिरावात्रेयौ । अग्निः । त्रिष्टुप् ।

**अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।**
**यह्वाइव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥१॥**

अबोधि । अग्निः । सम्०इधा । जनानाम् । प्रति । धेनुम्ऽइव ।
आ०यतीम् । उषसम् ॥ यह्वाःऽइव । प्र । वयाम् । उत्०जिहानाः ।
प्र । भानवः । सिस्रते । नाकम् । अच्छ ॥१॥

**अबोधि होता यजथाय देवानूर्ध्वो ऽअग्निः सुमनाः प्रातरस्थात् ।**
**समिद्धस्य रुशददर्शि पाजो महान्देवस्तमसो निरमोचि ॥२॥**

अबोधि । होता । यजथाय । देवान् । ऊर्ध्वः । अग्निः ।
सु०मनाः । प्रातः । अस्थात् ॥ सम्०इद्धस्य । रुशत् । अदर्शि ।
पाजः । महान् । देवः । तमसः । निः । अमोचि ॥२॥

**यदीं गणस्य रशनामजीगः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः ।**
**आद्दक्षिणा युज्यते वाजयन्त्युत्तानामूर्ध्वो ऽअधयज्जुहूभिः ॥३॥**

यत् । ईम् । गणस्य । रशनाम् । अजीगरिति । शुचिः । अङ्क्ते ।
शुचि०भिः । गो०भिः । अग्निः ॥ आत् । दक्षिणा । युज्यते ।
वाज०यन्ती । उत्तानाम् । ऊर्ध्वः । अधयत् । जुहूभिः ॥३॥

**अग्निमच्छा देवयतां मनांसि चक्षूंषीव सूर्ये सं चरन्ति ।**
**यदीं सुवाते ऽउषसा विरूपे श्वेतो वाजी जायते ऽअग्रे ऽअह्नाम् ॥४॥**

अग्निम् । अच्छे । देव०यताम् । मनांसि । चक्षूंषिऽइव । सूर्ये ।
सम् । चरन्ति ॥ यत् । ईम् । सुवाते । उषसा । विरूपे इति वि०रूपे ।
श्वेतः । वाजी । जायते । अग्रे । अह्नाम् ॥४॥

जनिष्ट हि जेन्यो ऽअग्रे ऽअह्नां हितो हितेष्वरुषो वनेषु ।
दमेदमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयान् ॥५॥
जनिष्ट । हि । जेन्यः । अग्रे । अह्नाम् । हितः । हितेषु ।
अरुषः । वनेषु ॥ दमे०दमे । सप्त । रत्ना ।
दधानः । अग्निः । होता । नि । ससाद । यजीयान् ॥५॥

अग्निर्होता न्यसीदद्यजीयानुपस्थे मातुः सुरभा ऽउ लोके ।
युवा कविः पुरुनिःष्ठ ऽऋतावा धर्ता कृष्टीनामुत मध्य ऽइद्धः ॥६॥ (१२)
अग्निः । होता । नि । असीदत् । यजीयान् । उप०स्थे ।
मातुः । सुरभौ । ऊँ इति । लोके ॥ युवा । कविः । पुरुनिःऽस्थ ।
ऋत०वा । धर्त्ता । कृष्टीनाम् । उत । मध्ये । इद्धः ॥६॥

प्र णु त्यं विप्रमध्वरेषु साधुमग्निं होतारमीळते नमोभिः ।
आ यस्ततान रोदसी ऽऋतेन नित्यं मृजन्ति वाजिनं घृतेन ॥७॥
प्र । नु । त्यम् । विप्रम् । अध्वरेषु । साधुम् । अग्निम् ।
होतारम् । ईळते । नमःऽभिः ॥ आ । यः । ततान ।
रोदसी इति । ऋतेन । नित्यम् । मृजन्ति । वाजिनम् । घृतेन ॥७॥

मार्जाल्यो मृज्यते स्वे दमूनाः कविप्रशस्तो ऽअतिथिः शिवो नः ।
सहस्रशृङ्गो वृषभस्तदोजा विश्वाँ ऽअग्ने सहसा प्रास्यन्यान् ॥८॥

मार्जाल्यः । मृज्यते । स्वे । दमूनाः । कवि॰प्रशस्तः । अतिथिः ।
शिवः । नः ॥ सहस्र॰शृङ्गः । वृषभः । तत्॰ओजा ।
विश्वान् । अग्ने । सहसा । प्र । असि । अन्यान् ॥८॥

**प्र सद्यो ऽअग्ने ऽअत्येष्यन्यानाविर्यस्मै चारुतमो बभूथ ।**
**ईळेन्यो वपुष्यो विभावा प्रियो विशामतिथिर्मानुषीणाम् ॥९॥**
प्र । सद्यः । अग्ने । अति । एषि । अन्यान् । आविः ।
यस्मै । चारु॰तमः । बभूथ ॥ ईळेन्यः । वपुष्यः ।
विभा॰वा । प्रियः । विशाम् । अतिथिः । मानुषीणाम् ॥९॥

**तुभ्यं भरन्ति क्षितयो यविष्ठ बलिमग्ने ऽअन्तित ऽओत दूरात् ।**
**आ भन्दिष्ठस्य सुमतिं चिकिद्धि बृहत्ते ऽअग्ने महि शर्म भद्रम् ॥१०॥**
तुभ्यम् । भरन्ति । क्षितयः । यविष्ठ । बलिम् । अग्ने । अन्तितः । आ ।
उत । दूरात् ॥ आ । भन्दिष्ठस्य । सु॰मतिम् । चिकिद्धि ।
बृहत् । ते । अग्ने । महि । शर्म । भद्रम् ॥१०॥

**आद्य रथं भानुमो भानुमन्तमग्ने तिष्ठ यजतेभिः समन्तम् ।**
**विद्वान्पथीनामुर्व१ऽन्तरिक्षमेह देवान्हविरद्याय वक्षि ॥११॥**
आ । अद्य । रथम् । भानु॰मः । भानु॰मन्तम् । अग्ने ।
तिष्ठ । यजतेभिः । सम्॰अन्तम् ॥ विद्वान् । पथीनाम् । उरु ।
अन्तरिक्षम् । आ । इह । देवान् । हविः२अद्याय । वक्षि ॥११॥

**अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे ।**
**गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रेत् ॥१२॥ (१३) [ ११३६ ]**
अवोचाम । कवये । मेध्याय । वचः । वन्दारु ।
वृषभाय । वृष्णे ॥ गविष्ठिरः । नमसा । स्तोमम् । अग्नौ ।
दिविऽइव । रुक्मम् । उरु॰व्यञ्चम् । अश्रेत् ॥१२॥

# ( २ )

१२ कुमार आत्रेयः, वृशो वा जानः, उभौ वा, २, ९ वृशो जानः ।
अग्निः । त्रिष्टुप्, १२ शक्वरी ।

**कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे ।**
**अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ ॥१॥**

कुमारम् । माता । युवतिः । सम्०उब्धम् । गुहा । बिभर्ति ।
न । ददाति । पित्रे ॥ अनीकम् । अस्य । न । मिनत् ।
जनासः । पुरः । पश्यन्ति । नि०हितम् । अरतौ ॥१॥

**कमेतं त्वं युवते कुमारं पेषी बिभर्षि महिषी जजान ।**
**पूर्वीर्हि गर्भः शरदो ववर्धापश्यं जातं यदसूत माता ॥२॥**

कम् । एतम् । त्वम् । युवते । कुमारम् । पेषी । बिभर्षि ।
महिषी । जजान ॥ पूर्वीः । हि । गर्भः । शरदः । ववर्ध ।
अपश्यम् । जातम् । यत् । असूत । माता ॥२॥

**हिरण्यदन्तं शुचिवर्णमारात्क्षेत्रादपश्यमायुधा मिमानम् ।**
**ददानो ऽअस्मा ऽअमृतं विपृक्वत्किं मामनिन्द्राः कृणवन्ननुक्थाः ॥३॥**

हिरण्य०दन्तम् । शुचि०वर्णम् । आरात् । क्षेत्रात् । अपश्यम् ।
आयुधा । मिमानम् ॥ ददानः । अस्मै । अमृतम् । विपृक्वत् ।
किम् । माम् । अनिन्द्राः । कृणवन् । अनुक्थाः ॥३॥

**क्षेत्रादपश्यं सनुतश्चरन्तं सुमद्यूथं न पुरु शोभमानम् ।**
**न ता ऽअगृभ्रन्नजनिष्ट हि षः पलिक्नीरिद्युवतयो भवन्ति ॥४॥**

क्षेत्रात् । अपश्यम् । सनुतरिति । चरन्तम् । सु०मत् । यूथम् ।
न । पुरु । शोभमानम् ॥ न । ताः । अगृभ्रन् । अजनिष्ट ।
हि । सः । पलिक्नीः । इत् । युवतयः । भवन्ति ॥४॥

के मे मर्यकं वि यवन्त गोभिर्न येषां गोपा ऽअरणश्चिदास ।
य ऽईं जगृभुरव ते सृजन्त्वाजाति पश्व ऽउप नश्चिकित्वान् ॥५॥ (१४)
के । मे । मर्यकम् । वि । यवन्त । गोभिः । न । येषाम् ।
गोपाः । अरणः । चित् । आस ॥ ये । ईम् । जगृभुः । अव । ते ।
सृजन्तु । आ । अजाति । पश्वः । उप । नः । चिकित्वान् ॥५॥

वसां राजानं वसतिं जनानामरातयो नि दधुर्मर्त्येषु ।
ब्रह्माण्यत्रेरव तं सृजन्तु निन्दितारो निन्द्यासो भवन्तु ॥६॥
वसाम् । राजानम् । वसतिम् । जनानाम् । अरातयः ।
नि । दधुः । मर्त्येषु ॥ ब्रह्माणि । अत्रेः । अव । तम् ।
सृजन्तु । निन्दितारः । निन्द्यासः । भवन्तु ॥६॥

शुनश्चिच्छेपं निदितं सहस्राद्यूपादमुञ्चो ऽअशमिष्ट हि षः ।
एवास्मदग्ने वि मुमुग्धि पाशान्होतश्चिकित्व ऽइह तू निषद्य ॥७॥
शुनःश्चित् । शेपम् । नि०दितम् । सहस्रात् । यूपात् । अमुञ्चः ।
अशमिष्ट । हि । सः ॥ एव । अस्मत् । अग्ने । वि । मुमुग्धि ।
पाशान् । होतरिति । चिकित्वः । इह । तु । नि०सद्य ॥७॥

हृणीयमानो ऽअप हि मदैयेः प्र मे देवानां व्रतपा ऽउवाच ।
इन्द्रो विद्वाँ ऽअनु हि त्वा चचक्ष तेनाहमग्ने ऽअनुशिष्ट ऽआगाम् ॥८॥
हृणीयमानः । अप । हि । मत् । ऐयेः । प्र । मे । देवानाम् ।
व्रत०पाः । उवाच ॥ इन्द्रः । विद्वान् । अनु । हि । त्वा । चचक्ष ।
तेन । अहम् । अग्ने । अनु०शिष्टः । आ । अगाम् ॥८॥

वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा ।
प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥९॥

वि । ज्योतिषा । बृहता । भाति । अग्निः । आविः ।
विश्वानि । कृणुते । महिऽत्वा ॥ प्र । अदेवीः । मायाः ।
सहते । दुःऽएवाः । शिशीते । शृङ्गे इति । रक्षसे । विऽनिक्षे ॥९॥

**उत स्वानासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ ।**
**मदे चिदस्य प्र रुजन्ति भामा न वरन्ते परिबाधो अदेवीः ॥१०॥**
उत । स्वानासः । दिवि । सन्तु । अग्नेः । तिग्मऽआयुधाः ।
रक्षसे । हन्तवै । ऊँ इति ॥ मदे । चित् । अस्य । प्र ।
रुजन्ति । भामाः । न । वरन्ते । परिऽबाधः । अदेवीः ॥१०॥

**एतं ते स्तोमं तुविजात विप्रो रथं न धीरः स्वपा अतक्षम् ।**
**यदीदग्ने प्रति त्वं देव हर्याः स्वर्वतीरप एना जयेम ॥११॥**
एतम् । ते । स्तोमम् । तुविऽजात । विप्रः । रथम् । न । धीरः ।
सुऽअपाः । अतक्षम् ॥ यदि । इत् । अग्ने । प्रति । त्वम् ।
देव । हर्याः । स्वःऽवतीः । अपः । एन । जयेम ॥११॥

**तुविग्रीवो वृषभो वावृधानोऽशत्र्वर्यः समजाति वेदः ।**
**इतीममग्निममृता अवोचन्बर्हिष्मते मनवे शर्म यंसद्धविष्मते मनवे शर्म यंसत् ॥१२॥ (१५) [ ११४८ ]**
तुविऽग्रीवः । वृषभः । ववृधानः । अशत्रु । अर्यः । सम् । अजाति ।
वेदः ॥ इति । इमम् । अग्निम् । अमृताः । अवोचन् । बर्हिष्मते ।
मनवे । शर्म । यंसत् । हविष्मते । मनवे । शर्म । यंसत् ॥१२॥

## ( ३ )

**१२ वसुश्रुत आत्रेयः । अग्निः, ३ मरुद्रुद्रविष्णवः । त्रिष्टुप्, १ विराट् ।**

**त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिद्धः ।**
**त्वे विश्वे सहसस्पुत्र देवास्त्वमिन्द्रो दाशुषे मर्त्याय ॥१॥**

त्वम् । अग्ने । वरुणः । जायसे । यत् । त्वम् । मित्रः ।
भवसि । यत् । सम्०इद्धः ॥ त्वे इति । विश्वे । सहसः ।
पुत्र । देवाः । त्वम् । इन्द्रः । दाशुषे । मर्त्याय ॥१॥

**त्वमर्यमा भवसि यत्कनीनां नाम स्वधावन्गुह्यं बिभर्षि ।**
**अञ्जन्ति मित्रं सुधितं न गोभिर्यद्दम्पती समनसा कृणोषि ॥२॥**
त्वम् । अर्यमा । भवसि । यत् । कनीनाम् । नाम । स्वधा०वन् ।
गुह्यम् । बिभर्षि ॥ अञ्जन्ति । मित्रम् । सु०धितम् । न । गोभिः ।
यत् । दम्पती इति दम्०पती । स०मनसा । कृणोषि ॥२॥

**तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम् ।**
**पदं यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनाम् ॥३॥**
तव । श्रिये । मरुतः । मर्जयन्त । रुद्र । यत् । ते ।
जनिम । चारु । चित्रम् ॥ पदम् । यत् । विष्णोः । उप०मम् ।
नि०धायि । तेन । पासि । गुह्यम् । नाम । गोनाम् ॥३॥

**तव श्रिया सुदृशो देव देवाः पुरू दधाना ऽअमृतं सपन्त ।**
**होतारमग्निं मनुषो नि षेदुर्दशस्यन्त ऽउशिजः शंसमायोः ॥४॥**
तव । श्रिया । सु०दृशः । देव । देवाः । पुरु । दधानाः ।
अमृतम् । सपन्त ॥ होतारम् । अग्निम् । मनुषः ।
नि । सेदुः । दशस्यन्तः । उशिजः । शंसम् । आयोः ॥४॥

**न त्वद्धोता पूर्वो ऽअग्ने यजीयान्न काव्यैः परो ऽअस्ति स्वधावः ।**
**विशश्च यस्या ऽअतिथिर्भवासि स यज्ञेन वनवद्देव मर्त्तान् ॥५॥**
न । त्वत् । होता । पूर्वः । अग्ने । यजीयान् । न । काव्यैः ।
परः । अस्ति । स्वधा०वः ॥ विशः । च । यस्याः । अतिथिः ।
भवासि । सः । यज्ञेन । वन०वत् । देव । मर्त्तान् ॥५॥

**वयमग्ने वनुयाम त्वोता वसूयवो हविषा बुध्यमानाः ।**
**वयं समर्ये विदथेष्वह्नां वयं राया सहसस्पुत्र मर्त्तान् ॥६॥ ( १६ )**
वयम् । अग्ने । वनुयाम । त्वा०ऊताः । वसु०यवः ।
हविषा । बुध्यमानाः ॥ वयम् । स०मर्ये । विदथेषु ।
अह्नाम् । वयम् । राया । सहसः । पुत्र । मर्त्तान् ॥६॥

**यो न ऽआगो ऽअभ्येनो भरात्यधीदघमघशंसे दधात ।**
**जही चिकित्वो ऽअभिशस्तिमेतामग्ने यो नो मर्चयति द्वयेन ॥७॥**
यः । नः । आगः । अभि । एनः । भराति । अधि । इत् ।
अघम् । अघ०शंसे । दधात ॥ जहि । चिकित्वः ।
अभि०शस्तिम् । एताम् । अग्ने । यः । नः । मर्चयति । द्वयेन ॥७॥

**त्वामस्या व्युषि देव पूर्वे दूतं कृण्वाना ऽअयजन्त हव्यैः ।**
**संस्थे यदग्न ऽईयसे रयीणां देवो मर्त्तैर्वसुभिरिध्यमानः ॥८॥**
त्वाम् । अस्याः । वि०उषि । देव । पूर्वे । दूतम् । कृण्वानाः ।
अयजन्त । हव्यैः ॥ सम्०स्थे । यत् । अग्ने । ईयसे ।
रयीणाम् । देवः । मर्त्तैः । वसु०भिः । इध्यमानः ॥८॥

**अव स्पृधि पितरं योधि विद्वान्पुत्रो यस्ते सहसः सून ऽऊहे ।**
**कदा चिकित्वो ऽअभि चक्षसे नोऽग्ने कदाँ ऽऋतचिद्यातयासे ॥९॥**
अव । स्पृधि । पितरम् । योधि । विद्वान् । पुत्रः । यः । ते ।
सहसः । सूनो इति । ऊहे ॥ कदा । चिकित्वः । अभि ।
चक्षसे । नः । अग्ने । कदा । ऋत०चित् । यातयासे ॥९॥

**भूरि नाम वन्दमानो दधाति पिता वसो यदि तज्जोषयासे ।**
**कुविद्देवस्य सहसा चकानः सुम्नमग्निर्वनते वावृधानः ॥१०॥**

भूरि । नाम । वन्दमानः । दधाति । पिता । वसो इति ।
यदि । तत् । जोषयासे ॥ कुवित् । देवस्य । सहसा । चकानः ।
सुम्नम् । अग्निः । वनते । ववृधानः ॥१०॥

**त्वमङ्ग जरितारं यविष्ठ विश्वान्यग्ने दुरितातिं पर्षि ।**
**स्तेना ऽअदृश्रन्रिपवो जनासोऽज्ञातकेता वृजिना ऽअभूवन् ॥११॥**
त्वम् । अङ्ग । जरितारम् । यविष्ठ । विश्वानि । अग्ने ।
दुःऽइता । अति । पर्षि ॥ स्तेनाः । अदृश्रन् । रिपवः ।
जनासः । अज्ञात०केताः । वृजिनाः । अभूवन् ॥११॥

**इमे यामासस्त्वद्रिगभूवन्वसवे वा तदिदागो ऽअवाचि ।**
**नाहायमग्निरभिशस्तये नो न रीषते वावृधानः परा दात् ॥१२॥ ( १७ ) [ ११६० ]**
इमे । यामासः । त्वद्रिक् । अभूवन् । वसवे । वा । तत् । इत् ।
आगः । अवाचि ॥ न । अह । अयम् । अग्निः । अभि०शस्तये ।
नः । न । रिषते । ववृधानः । परा । दात् ॥१२॥

# ( ४ )

११ वसुश्रुत आत्रेयः । अग्निः । त्रिष्टुप् ।

**त्वामग्ने वसुपतिं वसूनामभि प्र मन्दे ऽअध्वरेषु राजन् ।**
**त्वया वाजं वाजयन्तो जयेमाभि ष्याम पृत्सुतीर्मर्त्त्यानाम् ॥१॥**
त्वाम् । अग्ने । वसु०पतिम् । वसूनाम् । अभि । प्र । मन्दे ।
अध्वरेषु । राजन् ॥ त्वया । वाजम् । वाज०यन्तः ।
जयेम । अभि । स्याम । पृत्सुतीः । मर्त्त्यानाम् ॥१॥

**हव्यवाळग्निरजरः पिता नो विभुर्विभावा सुदृशीको ऽअस्मे ।**
**सुगार्हपत्याः समिषो दिदीह्यस्मद्र्यक्सं मिमीहि श्रवांसि ॥२॥**

हव्य०वाट् । अग्निः । अजरः । पिता । नः । वि०भुः ।
विभा०वा । सु०दृशीकः । अस्मे इति ॥ सु०गार्हपत्याः । सम् ।
इषः । दिदीहि । अस्मद्र्यक् । सम् । मिमीहि । श्रवांसि ॥२॥

**विशां कविं विश्पतिं मानुषीणां शुचिं पावकं घृतपृष्ठमग्निम् ।**
**नि होतारं विश्वविदं दधिध्वे स देवेषु वनते वार्याणि ॥३॥**
विशाम् । कविम् । विश्पतिम् । मानुषीणाम् । शुचिम् ।
पावकम् । घृत०पृष्ठम् । अग्निम् ॥ नि । होतारम् । विश्व०विदम् ।
दधिध्वे । सः । देवेषु । वनते । वार्याणि ॥३॥

**जुषस्वाग्न ऽइळया सजोषा यतमानो रश्मिभिः सूर्यस्य ।**
**जुषस्व नः समिधं जातवेद ऽआ च देवान्हविरद्याय वक्षि ॥४॥**
जुषस्व । अग्ने । इळया । स०जोषाः । यतमानः ।
रश्मि०भिः । सूर्यस्य ॥ जुषस्व । नः । सम्ऽइधम् । जात०वेदः ।
आ । च । देवान् । हविः२अद्याय । वक्षि ॥४॥

**जुष्टो दमूना ऽअतिथिर्दुरोण ऽइमं नो यज्ञमुप याहि विद्वान् ।**
**विश्वा ऽअग्ने ऽअभियुजो विहत्या शत्रूयतामा भरा भोजनानि ॥५॥ ( १८ )**
जुष्टः । दमूनाः । अतिथिः । दुरोणे । इमम् । नः । यज्ञम् ।
उप । याहि । विद्वान् ॥ विश्वाः । अग्ने । अभि०युजः ।
वि०हत्य । शत्रु०यताम् । आ । भर । भोजनानि ॥५॥

**वधेन दस्युं प्र हि चातयस्व वयः कृण्वानस्तन्वे३ स्वायै ।**
**पिपर्षि यत्सहसस्पुत्र देवान्त्सो ऽअग्ने पाहि नृतम वाजे ऽअस्मान् ॥६॥**
वधेन । दस्युम् । प्र । हि । चातयस्व । वयः । कृण्वानः ।
तन्वे । स्वायै ॥ पिपर्षि । यत् । सहसः। पुत्र देवान् ।
सः। अग्ने । पाहि । नृ०तम । वाजे । अस्मान् ॥६॥

वयं ते ऽअग्न ऽउक्थैर्विधेम वयं हव्यैः पावक भद्रशोचे ।
अस्मे रयिं विश्ववारं समिन्वास्मे विश्वानि द्रविणानि धेहि ॥७॥
वयम् । ते । अग्ने । उक्थैः । विधेम । वयम् । हव्यैः । पावक ।
भद्र०शोचे ॥ अस्मे इति । रयिम् । विश्व०वारम् । सम् ।
इन्व । अस्मे इति । विश्वानि । द्रविणानि । धेहि ॥७॥

अस्माकमग्ने ऽअध्वरं जुषस्व सहसः सूनो त्रिषधस्थ हव्यम् ।
वयं देवेषु सुकृतः स्याम शर्मणा नस्त्रिवरूथेन पाहि ॥८॥
अस्माकम् । अग्ने । अध्वरम् । जुषस्व । सहसः । सूनो इति ।
त्रि०सधस्थ । हव्यम् ॥ वयम् । देवेषु । सु०कृतः ।
स्याम । शर्मणा । नः । त्रि०वरूथेन । पाहि ॥८॥

विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिं पर्षि ।
अग्ने ऽअत्रिवन्नमसा गृणानो ३ऽस्माकं बोध्यविता तनूनाम् ॥९॥
विश्वानि । नः । दुः२गहा । जात०वेदः । सिन्धुम् । न ।
नावा । दुः२इता । अति । पर्षि ॥ अग्ने । अत्रि०वत् ।
नमसा । गृणानः । अस्माकम् । बोधि । अविता । तनूनाम् ॥९॥

यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ।
जातवेदो यशो ऽअस्मासु धेहि प्रजाभिरग्ने ऽअमृतत्वमश्याम् ॥१०॥
यः । त्वा । हृदा । कीरिणा । मन्यमानः । अमर्त्यम् ।
मर्त्यः । जोहवीमि ॥ जात०वेदः । यशः । अस्मासु । धेहि ।
प्र०जाभिः । अग्ने । अमृत०त्वम् । अश्याम् ॥१०॥

यस्मै त्वं सुकृते जातवेद ऽउ लोकमग्ने कृणवः स्योनम् ।
अश्विनं स पुत्रिणं वीरवन्तं गोमन्तं रयिं नशते स्वस्ति ॥११॥ ( १९ ) [ ११७१ ]

यस्मै । त्वम् । सु॒ऽकृते॑ । जात॑ऽवेदः । ऊँ इति॑ । लो॒कम् ।
अग्ने॑ । कृ॒णव॑ः । स्यो॒नम् ॥ अ॒श्विन॑म् । सः । पु॒त्रिण॑म् ।
वी॒रऽव॑न्तम् । गोऽम॑न्तम् । र॒यिम् । न॒श॒ते । स्व॒स्ति ॥११॥

# ( ५ )

**११ वसुश्रुत आत्रेयः । आप्रीसूक्तं = ( १ इध्मः समिद्धोऽग्निर्वा, २ नराशंसः, ३ इलः, ४ बर्हिः, ५ देवीर्द्वारः, ६ उषासानक्ता, ७ दैव्यौ होतारौ प्रचेतसौ, ८ तिस्रो देव्यः सरस्वतीळाभारत्यः, ९ त्वष्टा, १० वनस्पति, ११ स्वाहाकृतयः । गायत्री ।**

**सुस॑मिद्धाय शो॒चिषे॑ घृ॒तं ती॒व्रं जु॑होतन ।**
**अ॒ग्नये॑ जा॒तवे॑दसे ॥१॥**
सु॒ऽस॑मिद्धाय । शो॒चिषे॑ । घृ॒तम् । ती॒व्रम् । जु॒हो॒त॒न ॥
अ॒ग्नये॑ । जा॒त॒ऽवे॑दसे ॥१॥

**नरा॒शंस॑ः सुषूद॒ती॒मं य॒ज्ञमदा॑भ्यः ।**
**क॒विर्हि मधु॑हस्त्यः ॥२॥**
न॒रा॒शंस॑ः । सु॒सू॒द॒ति॒ । इ॒मम् । य॒ज्ञम् । अदा॑भ्यः ॥
क॒विः । हि । मधु॑ऽहस्त्यः ॥२॥

**ईळि॒तो ऽअ॑ग्न॒ ऽआ व॒हेन्द्रं॑ चि॒त्रमि॒ह प्रि॒यम् ।**
**सु॒खै रथे॑भिरू॒तये॑ ॥३॥**
ई॒ळि॒तः । अ॒ग्ने॒ । आ । व॒ह॒ । इन्द्र॑म् । चि॒त्रम् । इ॒ह । प्रि॒यम् ॥
सु॒ऽखैः । रथे॑भिः । ऊ॒तये॑ ॥३॥

**ऊर्ण॑म्रदा॒ वि प्र॑थस्वा॒भ्य१॒॑र्का ऽअ॑नूषत ।**
**भवा॑ नः शुभ्र सा॒तये॑ ॥४॥**
ऊर्ण॑ऽम्रदाः । वि । प्र॒थ॒स्व॒ । अ॒भि । अ॒र्काः । अ॒नू॒ष॒त ॥
भव॑ । न॒ः । शु॒भ्र॒ । सा॒तये॑ ॥४॥

**देवीर्द्वारो वि श्रयध्वं सुप्रायणा न ऽऊतये ।**
**प्रप्र यज्ञं पृणीतन ॥५॥ ( २० )**
देवीः । द्वारः । वि । श्रयध्वम् । सुप्र०अयनाः । नः । ऊतये ॥
प्र०प्र । यज्ञम् । पृणीतन ॥५॥

**सुप्रतीके वयोवृधा यह्वी ऽऋतस्य मातरा ।**
**दोषामुषासमीमहे ॥६॥**
सुप्रतीके इति सु०प्रतीके । वयःऽवृधा । यह्वी इति । ऋतस्य । मातरा ॥
दोषाम् । उषसम् । ईमहे ॥६॥

**वातस्य पत्मन्नीळिता दैव्या होतारा मनुषः ।**
**इमं नो यज्ञमा गतम् ॥७॥**
वातस्य । पत्मन् । ईळिता । दैव्या । होतारा । मनुषः ॥
इमम् । नः । यज्ञम् । आ । गतम् ॥७॥

**इळा सरस्वती मही तिस्रो देवीर्मयोभुवः ।**
**बर्हिः सीदन्त्वस्रिधः ॥८॥**
इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः ॥
बर्हिः । सीदन्तु । अस्रिधः ॥८॥

**शिवस्त्वष्टरिहा गहि विभुः पोष ऽउत त्मना ।**
**यज्ञेयज्ञे न ऽउदव ॥९॥**
शिवः । त्वष्टः । इह । आ । गहि । वि०भुः । पोषे । उत । त्मना ॥
यज्ञे०यज्ञे । नः । उत् । अव ॥९॥

**यत्र वेत्थ वनस्पते देवानां गुह्या नामानि ।**
**तत्र हव्यानि गामय ॥१०॥**
यत्र । वेत्थ । वनस्पते । देवानाम् । गुह्या । नामानि ॥
तत्र । हव्यानि । गमय ॥१०॥

**स्वाहाग्नये वरुणाय स्वाहेन्द्राय मरुद्भ्यः ।**
**स्वाहा देवेभ्यो हविः ॥११॥ ( २१ )** [ ११८२ ]
स्वाहा । अग्नये । वरुणाय । स्वाहा । इन्द्राय । मरुत्०भ्यः ॥
स्वाहा । देवेभ्यः । हविः ॥११॥

## ( ६ )

**१० वसुश्रुत आत्रेयः । अग्निः । पङ्क्तिः ।**

**अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।**
**अस्तमर्वन्त ऽआशवोऽस्तं नित्यासो वाजिन ऽइषं स्तोतृभ्य ऽआ भर ॥१॥**
अग्निम् । तम् । मन्ये । यः । वसुः । अस्तम् । यम् । यन्ति ।
धेनवः ॥ अस्तम् । अर्वन्तः । आशवः । अस्तम् । नित्यासः ।
वाजिनः । इषम् । स्तोतृ०भ्यः । आ । भर ॥१॥

**सो ऽअग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः ।**
**समर्वन्तो रघुद्रुवः सं सुजातासः सूरय ऽइषं स्तोतृभ्य ऽआ भर ॥२॥**
सः । अग्निः । यः । वसुः । गृणे । सम् । यम् ।
आ०यन्ति । धेनवः ॥ सम् । अर्वन्तः । रघु०द्रुवः । सम् ।
सु०जातासः । सूरयः । इषम् । स्तोतृ०भ्यः । आ । भर ॥२॥

**अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।**
**अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य ऽआ भर ॥३॥**

अग्निः । हि । वाजिनम् । विशे । ददाति ।
विश्व०चर्षणिः ॥ अग्निः । राये । सु०आभुवम् । सः ।
प्रीतः । याति । वार्यम् । इषम् । स्तोतृ०भ्यः । आ । भर ॥३॥

**आ ते ऽअग्न ऽइधीमहि द्युमन्तं देवाजरम् ।**
**यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य ऽआ भर ॥४॥**
आ । ते । अग्ने । इधीमहि । द्यु०मन्तम् । देव ।
अजरम् ॥ यत् । ह । स्या । ते । पनीयसी । सम्ऽइत् ।
दीदयति । द्यवि । इषम् । स्तोतृ०भ्यः । आ । भर ॥४॥

**आ ते ऽअग्न ऽऋचा हविः शुक्रस्य शोचिषस्पते ।**
**सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यं हूयत ऽइषं स्तोतृभ्य ऽआ भर ॥५॥ (२२)**
आ । ते । अग्ने । ऋचा । हविः । शुक्रस्य । शोचिषः ।
पते ॥ सु०चन्द्र । दस्म । विश्पते । हव्य०वाट् । तुभ्यम् ।
हूयते । इषम् । स्तोतृ०भ्यः । आ । भर ॥५॥

**प्रो त्ये ऽअग्नयोऽग्निषु विश्वं पुष्यन्ति वार्यम् ।**
**ते हिन्विरे त ऽइन्विरे त ऽइषण्यन्त्यानुषगिषं स्तोतृभ्य ऽआ भर ॥६॥**
प्रो इति । त्ये । अग्नयः । अग्निषु । विश्वम् । पुष्यन्ति ।
वार्यम् ॥ ते । हिन्विरे । ते । इन्विरे । ते । इषण्यन्ति ।
आनुषक् । इषम् । स्तोतृ०भ्यः । आ । भर ॥६॥

**तव त्ये ऽअग्ने ऽअर्चयो महि व्राधन्त वाजिनः ।**
**ये पत्वभिः शफानां व्रजा भुरन्त गोनामिषं स्तोतृभ्य ऽआ भर ॥७॥**
तव । त्ये । अग्ने । अर्चयः । महि । व्राधन्त ।
वाजिनः ॥ ये । पत्व०भिः । शफानाम् । व्रजा ।
भुरन्त । गोनाम् । इषम् । स्तोतृ०भ्यः । आ । भर ॥७॥

**नवा नो ऽअग्न ऽआ भर स्तोतृभ्यः सुक्षितीरिषः ।**

**ते स्याम य ऽआनृचुस्त्वादूतासो दमेदम ऽइषं स्तोतृभ्य ऽआ भर ॥८॥**

नवाः । नः । अग्ने । आ । भर । स्तोतृ०भ्यः ।

सु०क्षितीः । इषः ॥ ते । स्याम । ये । आनृचुः ।

त्वा०दूतासः । दमे०दमे । इषम् । स्तोतृ०भ्यः । आ । भर ॥८॥

**उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष ऽआसनि ।**

**उतो न ऽउत्पुपूर्या ऽउक्थेषु शवसस्पत ऽइषं स्तोतृभ्य ऽआ भर ॥९॥**

उभे इति । सु०चन्द्र । सर्पिषः । दर्वी इति । श्रीणीषे ।

आसनि ॥ उतो इति । नः । उत् । पुपूर्याः । उक्थ्येषु ।

शवसः । पते । इषम् । स्तोतृ०भ्यः । आ । भर ॥९॥

**एवाँ ऽअग्निमजुर्यमुर्गीर्भिर्यज्ञेभिरानुषक् ।**

**दधदस्मे सुवीर्यमुत त्यदाश्वश्व्यमिषं स्तोतृभ्य ऽआ भर ॥१०॥ ( २३ ) [ ११९२ ]**

एव । अग्निम् । अजुर्यमुः । गीः२भिः । यज्ञेभिः ।

आनुषक् ॥ दधत् । अस्मे इति । सु०वीर्यम् । उत । त्यत् ।

आशु०अश्व्यम् । इषम् । स्तोतृ०भ्यः । आ । भर ॥१०॥

## ( ७ )

**१० इष आत्रेयः । अग्निः । अनुष्टुप्, १० पङ्क्तिः ।**

**सखायः सं वः सम्यञ्चमिषं स्तोमं चाग्नये ।**

**वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥१॥**

सखायः । सम् । वः । सम्यञ्चम् । इषम् । स्तोमम् । च । अग्नये ॥

वर्षिष्ठाय । क्षितीनाम् । ऊर्जः । नप्त्रे । सहस्वते ॥१॥

**कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने ।**
**अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः ॥२॥**
कुत्र । चित् । यस्य । सम्ऽऋतौ । रण्वाः । नरः । नृऽसदने ॥
अर्हन्तः । चित् । यम् । इन्धते । सम्ऽजनयन्ति । जन्तवः ॥२॥

**सं यदिषो वनामहे सं हव्या मानुषाणाम् ।**
**उत द्युम्नस्य शवस ऽऋतस्य रश्मिमा ददे ॥३॥**
सम् । यत् । इषः । वनामहे । सम् । हव्या । मानुषाणाम् ॥
उत । द्युम्नस्य । शवसा । ऋतस्य । रश्मिम् । आ । ददे ॥३॥

**स स्मा कृणोति केतुमा नक्तं चिद्दूर ऽआ सते ।**
**पावको यद्वनस्पतीन्प्र स्मा मिनात्यजरः ॥४॥**
सः । स्म । कृणोति । केतुम् । आ । नक्तम् । चित् । दूरे । आ । सते ॥
पावकः । यत् । वनस्पतीन् । प्र । स्म । मिनाति । अजरः ॥४॥

**अव स्म यस्य वेषणे स्वेदं पथिषु जुह्वति ।**
**अभीमह स्वजेन्यं भूमा पृष्ठेव रुरुहुः ॥५॥ ( २४ )**
अव । स्म । यस्य । वेषणे । स्वेदम् । पथिषु । जुह्वति ॥
अभि । ईम् । अह । स्वऽजेन्यम् । भूम । पृष्ठाऽइव । रुरुहुः ॥५॥

**यं मर्त्यः पुरुस्पृहं विदद्विश्वस्य धायसे ।**
**प्र स्वादनं पितूनामस्ततातिं चिदायवे ॥६॥**
यम् । मर्त्यः । पुरुऽस्पृहम् । विदत् । विश्वस्य । धायसे ॥
प्र । स्वादनम् । पितूनाम् । अस्तऽतातिम् । चित् । आयवे ॥६॥

**स हि ष्मा धन्वाक्षितं दाता न दात्या पशुः ।**

**हिरिश्मश्रुः शुचिदन्नृभुरनिभृष्टतविषिः ॥७॥**

सः । हि । स्म । धन्व । आ०क्षितम् । दाता । न । दाति । आ । पशुः ॥

हिरि०श्मश्रुः । शुचि०दन् । ऋभुः । अनिभृष्ट०तविषिः ॥७॥

**शुचिः ष्म यस्मा ऽअत्रिवत्प्र स्वधितीव रीयते ।**

**सुषूरसूत माता क्राणा यदानशे भर्गम् ॥८॥**

शुचिः । स्म । यस्मै । अत्रि०वत् । प्र । स्वधितिःऽइव । रीयते ॥

सु०सूः । असूत । माता । क्राणा । यत् । आनशे । भर्गम् ॥८॥

**आ यस्ते सर्पिरासुतेऽग्ने शमस्ति धायसे ।**

**ऐषु द्युम्नमुत श्रव ऽआ चित्तं मर्त्येषु धाः ॥९॥**

आ । यः । ते । सर्पिःऽआसुते । अग्ने । शम् । अस्ति । धायसे ॥

आ । एषु । द्युम्नम् । उत । श्रवः । आ । चित्तम् । मर्त्येषु । धाः ॥९॥

**इति चिन्मन्युमध्रिजस्त्वादातमा पशुं ददे ।**

**आदग्ने ऽअपृणतोऽत्रिः सासह्याद्दस्यूनिषः सासह्यान्नॄन् ॥१०॥ (२५) [१२०२]**

इति । चित् । मन्युम् । अध्रिजः । त्वा०दातम् । आ । पशुम् । ददे ॥

आत् । अग्ने । अपृणतः । अत्रिः । ससह्यात् । दस्यून् । इषः । ससह्यात् । नॄन् ॥१०॥

# (८)

**७ इष आत्रेयः । अग्निः । जगती ।**

**त्वामग्न ऽऋतायवः समीधिरे प्रत्नं प्रत्नास ऽऊतये सहस्कृत ।**

**पुरुश्चन्द्रं यजतं विश्वधायसं दमूनसं गृहपतिं वरेण्यम् ॥१॥**

त्वाम् । अग्ने । ऋत०यवः । सम् । ईधिरे । प्रत्नम् । प्रत्नासः ।

ऊतये । सहःऽकृत ॥ पुरु०चन्द्रम् । यजतम् ।

विश्व०धायसम् । दमूनसम् । गृह०पतिम् । वरेण्यम् ॥१॥

त्वाम॑ग्ने ऽअति॑थिं पू॒र्व्यं विश॑ः शो॒चिष्के॑शं गृ॒हप॑तिं॒ नि षे॑दिरे ।
बृ॒हत्के॑तुं पु॒रुरू॑पं ध॒नस्पृ॑तं सु॒शर्मा॑णं॒ स्वव॑सं ज॒रद्वि॑षम् ॥२॥
त्वाम् । अ॒ग्ने॒ । अति॑थिम् । पू॒र्व्यम् । विश॑ः । शो॒चिः॒ऽकेश॑म् ।
गृ॒ह॒ऽप॑तिम् । नि । से॒दि॒रे॒ ॥ बृ॒हत्॒ऽके॑तुम् । पु॒रु॒ऽरूप॑म् ।
ध॒न॒ऽस्पृत॑म् । सु॒ऽशर्मा॑णम् । सु॒ऽअव॑सम् । ज॒र॒त्॒ऽवि॑षम् ॥२॥

त्वाम॑ग्ने॒ मानु॑षीरीळते॒ विशो॑ होत्रा॒विद॒ं विवि॑चिं र॒त्न॒धात॑मम् ।
गुहा॒ सन्तं॑ सुभग वि॒श्वद॑र्शतं तुविष्व॒णसं॑ सु॒यजं॑ घृत॒श्रिय॑म् ॥३॥
त्वाम् । अ॒ग्ने॒ । मानु॑षीः । ई॒ळ॒ते॒ । विश॑ः । हो॒त्रा॒ऽविद॑म् ।
विवि॑चिम् । र॒त्न॒ऽधात॑मम् ॥ गुहा॑ । सन्त॑म् । सु॒ऽभ॒ग॒ ।
वि॒श्व॒ऽद॑र्शतम् । तु॒वि॒ऽस्व॒नस॑म् । सु॒ऽयज॑म् । घृ॒त॒ऽश्रिय॑म् ॥३॥

त्वाम॑ग्ने ध॒र्णसिं॑ वि॒श्वधा॑ व॒यं गी॒र्भिर्गृ॒णन्तो॑ न॒मसोप॑ सेदिम ।
स नो॑ जुषस्व समिधा॒नो ऽअ॑ङ्गिरो दे॒वो मर्त॑स्य य॒शसा॑ सुदी॒तिभि॑ः ॥४॥
त्वाम् । अ॒ग्ने॒ । ध॒र्णसि॑म् । वि॒श्व॒ऽधा॑ । व॒यम् । गी॒ःऽभिः ।
गृ॒णन्त॑ः । न॒मसा॑ । उप॑ । से॒दि॒म॒ ॥ सः । न॒ः । जु॒षस्व॒ । स॒म्॒ऽइ॒धानः॑ ।
अ॒ङ्गि॒रः॒ । दे॒वः । मर्त॑स्य । य॒शसा॑ । सु॒दी॒ति॒ऽभिः॑ ॥४॥

त्वम॑ग्ने पु॒रुरू॑पो॒ वि॒शेवि॑शे॒ वयो॑ दधासि प्र॒त्नथा॑ पुरुष्टुत ।
पु॒रूण्यन्ना॒ सह॑सा॒ वि रा॑जसि॒ त्विषि॒ः सा ते॑ तित्विषा॒णस्य॒ नाधृषे॑ ॥५॥
त्वम् । अ॒ग्ने॒ । पु॒रु॒ऽरूप॑ः । वि॒शे॒ऽवि॑शे । वय॑ः । द॒धा॒सि॒ ।
प्र॒त्न॒ऽथा॑ । पु॒रु॒ऽस्तु॒त॒ ॥ पु॒रूणि॑ । अन्ना॑ । सह॑सा ।
वि । रा॒ज॒सि॒ । त्विषि॑ः । सा । ते॒ । ति॒त्वि॒षा॒णस्य॑ । न । आ॒ऽधृषे॑ ॥५॥

त्वाम॑ग्ने समिधा॒नं य॑विष्ठ्य दे॒वा दू॒तं च॑क्रिरे हव्य॒वाह॑नम् ।
उ॒रु॒ज्रय॑सं घृ॒तयो॑नि॒माहु॑तं त्वे॒षं चक्षु॑र्दधिरे चोद॒यन्म॑ति ॥६॥

त्वाम् । अग्ने । सम्०इधानम् । यविष्ठ्य । देवाः । दूतम् ।
चक्रिरे । हव्य०वाहनम् ॥ उरु०ज्रयसम् । घृत०योनिम् ।
आ०हुतम् । त्वेषम् । चक्षुः । दधिरे । चोदयत्०मति ॥६॥

**त्वामग्ने प्रदिव ऽआहुतं घृतैः सुम्नायवः सुषमिधा समीधिरे ।**
**स वावृधान ऽओषधीभिरुक्षितो ईऽभि ज्रयांसि पार्थिवा वि तिष्ठसे ॥७॥ ( २६ ) [ १२०९ ]**

त्वाम् । अग्ने । प्र०दिवः । आ०हुतम् । घृतैः । सुम्न०यवः ।
सु०समिधा । सम् । ईधिरे ॥ सः । ववृधानः । ओषधी०भिः ।
उक्षितः । अभि । ज्रयांसि । पार्थिवा । वि । तिष्ठसे ॥७॥

॥ इति तृतीयाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥

# अष्टमाध्यायस्य मन्त्रवर्गानुक्रमणी

इदमु त्यत्पुरुतमं ॥१॥
क्वं स्विदासां कतमा पुराणी ॥२॥
प्रति ष्या सूनरी जनी ॥३॥
तद्देवस्यं सवितु ॥४॥
अभूद्देवः संविता ॥ ५॥
को वंस्त्राता वंसवः ॥६॥
नू रोदसी अहिना॥७॥
मही द्यावापृथिवी ॥८॥
क्षेत्रेस्य पतिना वयं ॥९॥
समुद्रादूर्मि ॥१०॥
सम्यक् स्रवन्ति सरितो ॥११॥
अबोध्यग्निः समिधा ॥१२॥
प्र णु त्यं विप्रमध्वरेषु ॥१३॥
कुमारं माता युवतिः ॥१४॥
शुनंश्चिच्छेपं निदितं ॥१५॥
त्वमंग्ने वरुणो जायसे ॥१६॥
यो न आगो अभ्येनो ॥१७॥
त्वामंग्ने वसुपतिं ॥१८॥
वधेन दस्युं प्र हि ॥१९॥
सुसमिद्धाय शोचिषे ॥२०॥
सुप्रतीके वयोवृधा ॥२१॥
अग्निं तं मन्ये ॥२२॥
प्रो त्ये अग्नयोऽग्निषु ॥२३॥
सखायः सं वः सम्यञ्च ॥२४॥
यं मर्त्यः पुरुस्पृहं ॥२५॥
त्वामंग्न ऋतायवः ॥२६॥

॥ इति शाङ्खायनसंहितायां तृतीयाष्टकेऽष्टमोऽध्यायः ॥
(अष्टमाध्याये वर्गाः २६, सूक्तानि १६, ऋचः १५२)

तृतीयाष्टकेऽध्यायाः ८, वर्गाः २२५, सूक्तानि १२२, ऋचः १२०९

# अथ तृतीयाष्टकस्य मन्त्राणां वर्णानुक्रमणी

| | अ.अ.व.: मं.सू.मं. | | अ.अ.व.: मं.सू.मं. |
|---|---|---|---|
| अकर्म ते स्वपसो | ३.४.१९; ४.२.१९ | अग्ने त्री ते वाजिना त्री | ३.१.२०;३.२०.२ |
| अकारि ब्रह्म समिधान | ३.५.५; ४.६.११ | अग्ने दा दाशुषे रयिं | ३.१.२४;३.२४.५ |
| अक्षोदयच्छवसा क्षाम | ३.६.१; ४.१९.४ | अग्ने दिवः सूनुरसि | ३.१.२५; ३.२५.१ |
| अगच्छदु विप्रतमः सखी० | ३.२.६; ३.३१.७ | अग्ने दिवो ऽअर्णमच्छा | ३.१.२२; ३.२२.३ |
| अगन्निन्द्र श्रवो | ३.२.२२; ३.३७.१० | अग्ने द्युम्नेन जागृवे | ३.१.२४; ३.२४.३ |
| अग्न ऽइन्द्रश्च दाशुषो | ३.१.२५; ३.२५.४ | अग्ने भूरीणि तव जातवेदो | ३.१.२०; ३.२०.३ |
| अग्ने ऽइळा समिध्यसे | ३.१.२४; ३.२४.२ | अग्ने मुळ महाँ ऽअसि | ३.५.९; ४.९.१ |
| अग्निं तं मन्ये यो | ३.८.२२; ५.६.१ | अग्ने यजिष्ठो ऽअध्वरे | ३.१.८; ३.१०.७ |
| अग्निं यन्तुरमप्तुर० | ३.१.३०; ३.२७.११ | अग्ने यत्ते दिवि वर्चः | ३.१.२२; ३.२२.२ |
| अग्निं वर्द्धन्तु नो गिरो | ३.१.८; ३.१०.६ | अग्ने विश्वानि वार्या | ३.१.१०; ३.११.९ |
| अग्निः सनोति वीर्याणि | ३.१.२५; ३.२५.२ | अग्ने विश्वेभिरग्निभि० | ३.१.२४; ३.२४.४ |
| अग्निं सुदीतिं सुदृशं | ३.१.१७; ३.१७.४ | अग्ने वीहि पुरोळाश० | ३.१.३१; ३.२७.१८ |
| अग्निं सूनुं सनश्रुतं | ३.१.९; ३.११.४ | अग्ने वृधान ऽआहुतिं | ३.१.३१; ३.२८.२१ |
| अग्निं होतारं प्र वृणे | ३.१.१९; ३.१९.१ | अग्ने शकेम ते वयं | ३.१.२८; ३.२७.३ |
| अग्निमच्छा देवयतां | ३.८.१२; ५.१.४ | अग्ने सहस्व पृतना | ३.१.२४; ३.२४.१ |
| अग्निमुषसमश्विना दधिक्रां | ३.१.२०; ३.२०.१ | अग्ने ऽअपां समिध्यसे | ३.१.२५; ३.२५.५ |
| अग्निरस्मि जन्मना जातवेदा | ३.१.२७; ३.२६.७ | अग्रं पिबा मधूनां | ३.७.२२; ४.४६.१ |
| अग्निरीशे बृहतः क्षत्रियस्या० | ३.५.१२; ४.१२.३ | अचित्ती यच्चकृमा दैव्ये | ३.८.५; ४.५४.३ |
| अग्निरीशे वसव्यस्या० | ३.८.७; ४.५५.८ | अच्छा कविं नृमणो गा | ३.५.१८; ४.१६.९ |
| अग्निर्जज्ञे जुह्वा३ रेजमानो | ३.२.५; ३.३१.३ | अच्छा यो गन्ता | ३.६.१८; ४.२९.४ |
| अग्निर्द्यावापृथिवी विश्वजन्ये | ३.१.२५; ३.२५.३ | अच्छा विवक्मि रोदसी | ३.४.२; ३.५७.४ |
| अग्निर्धिया स चेतति | ३.१.९; ३.११.३ | अच्छा वो देवीमुषसं | ३.४.८; ३.६१.५ |
| अग्निर्नेता भगइव क्षितीनां | ३.१.२०; ३.२०.४ | अच्छा वोचेय शुशुचा० | ३.४.१५; ४.१.१९ |
| अग्निर्हि वाजिनं विशे | ३.८.२२; ५.६.३ | अच्छा सिन्धुं मातृत० | ३.२.१२; ३.३३.३ |
| अग्निर्होता नो ऽअध्वरे | ३.५.१५; ४.१५.१ | अच्छिद्रा शर्म जरितः | ३.१.१५; ३.१५.५ |
| अग्निर्होता न्यसीदद्य० | ३.८.१२; ५.१.६ | अजीजनन्नमृतं मर्त्या'० | ३.१.३४; ३.२९.१३ |
| अग्निर्होता पुरोहितो० | ३.१.९;३.११.१ | अञ्जन्ति त्वामध्वरे देवयन्ता | ३.१.३; ३.८.१ |
| अग्निश्रियो मरुतो विश्व० | ३.१.२६;३.२६.५ | अतारिषुर्भरता गव्यवः | ३.२.१४; ३.३३.१२ |
| अग्ने कदा त ऽआनुष० | ३.५.६;४.७.२ | अति तृष्टं ववक्षिथा | ३.१.५; ३.९.३ |
| अग्ने जुषस्व नो हविः | ३.१.३१;३.२७.१६ | अतृष्णुवन्तं वियतम० | ३.६.१; ४.१९.३ |
| अग्ने तमद्याश्वं न स्तोमैः | ३.५.१०;४.१०.१ | अत्या वृधस्नू रोहिता घृतस्नू | ३.४.१६; ४.२.३ |
| अग्ने तृतीये सवने हि | ३.१.३१;३.२७.२० | अत्राह ते हरिवस्ता | ३.६.८; ४.२२.७ |

| | |
|---|---|
| आ तू भर माकिरेतत्परि | ३.२.२०; ३.३६.९ |
| आ ते कारो शृणवामा | ३.२.१३; ३.३३.१० |
| आ ते सपर्यू जवसे युनज्मि | ३.३.१४; ३.५०.२ |
| आ ते ऽअग्न ऽइधीमहि | ३.८.२२; ५.६.४ |
| आ ते ऽअग्न ऽऋचा | ३.८.२२; ५.६.५ |
| आ त्वा बृहन्तो हरयो | ३.३.७; ३.४३.६ |
| आ दधिक्राः शवसा पञ्च | ३.७.१२; ४.३८.१० |
| आ दस्युघ्ना मनसा | ३.५.१८; ४.१६.१० |
| आ द्यां तनोषि रश्मि० | ३.८.३; ४.५२.७ |
| आ धेनवो धुनयन्ताम० | ३.३.३१; ३.५५.१६ |
| आ नः स्तुत ऽउप | ३.६.१८; ४.२९.१ |
| आ न ऽइन्द्राबृहस्पती | ३.७.२५; ४.४९.३ |
| आ न ऽइन्द्रो दूरादा न | ३.६.३; ४.२०.१ |
| आ न ऽइन्द्रो हरिभिर्या | ३.६.३; ४.२०.२ |
| आ नपातः शवसो यातनोपेमं | ३.७.४; ४.३४.६ |
| आ नस्तुर्ज रयिं भराशं | ३.३.९; ३.४५.४ |
| आ नो गोत्रा दर्दृहि गोपते | ३.२.४; ३.३०.२१ |
| आ नो बृहन्ता बृहतीभि० | ३.७.१६; ४.४१.११ |
| आ नो भर भगमिन्द्र | ३.२.४; ३.३०.१९ |
| आ नो मित्रावरुणा | ३.४.११; ३.६२.१६ |
| आ नो यज्ञं नमोवृधं | ३.३.७; ३.४३.३ |
| आ नो यातं दिवो ऽअच्छा | ३.७.२०; ४.४४.५ |
| आ पर्वतस्य मरुताम | ३.८.६; ४.५५.५ |
| आ मन्द्रैरिन्द्र हरिभि० | ३.३.९; ३.४५.१ |
| आ मन्येथामा गतं | ३.४.३; ३.५८.४ |
| आ यस्ते सर्पिरासुतेऽग्ने | ३.८.२५; ५.७.९ |
| आ यात्विन्द्रो दिव | ३.६.५; ४.२१.३ |
| आ यात्विन्द्रोऽवस | ३.६.५; ४.२१.१ |
| आ याहि पूर्वीरति चर्षणीराँ | ३.३.७; ३.४३.२ |
| आ याह्यर्वाङुप वन्धुरेष्ठा० | ३.३.७; ३.४३.१ |
| आ यूथेव क्षुमति पश्वो | ३.४.१९; ४.२.१८ |
| आ वां वहिष्ठा ऽइह | ३.५.१४; ४.१४.४ |
| आ वां सहस्रं हरय | ३.७.२२; ४.४६.३ |
| आ वाजा यातोप न | ३.७.३; ४.३४.५ |
| आ वो राजानमध्वरस्य | ३.४.२०; ४.३.१ |
| आ सत्यो यातु मघवाँ | ३.५.१७; ४.१६.१ |
| आ सीमरोहत्सुयमा भवन्तीः | ३.१.१; ३.७.३ |
| आ हि ष्मा याति | ३.६.१८; ४.२९.२ |
| आ होता मन्द्रो विदथा० | ३.१.१४; ३.१४.१ |
| आकरे वसोर्जरिता पनस्यत० | ३.३.१५; ३.५१.३ |
| आकेनिपासो ऽअहभि० | ३.७.२१; ४.४५.६ |
| आक्षित्पूर्वास्वपरा | ३.३.२८; ३.५५.५ |
| आगन्देव ऽऋतुभिर्वर्द्धतु | ३.८.४; ४.५३.७ |
| आगन्नृभूणामिह | ३.७.५; ४.३५.२ |
| आतिष्ठन्तं परि विश्वे | ३.२.२३; ३.३८.४ |
| आदाय श्येनो | ३.६.१५; ४.२६.७ |
| आदित्पश्चा बुबुधाना | ३.४.१५; ४.१.१८ |
| आदित्या रुद्रा वसवः | ३.१.४; ३.८.८ |
| आदिद्ध नेम ऽइन्द्रियं | ३.६.११; ४.२४.५ |
| आद्य रथं भानुमो | ३.८.१३; ५.१.११ |
| आपप्रुषी विभावरि | ३.८.३; ४.५२.६ |
| आपूर्णो ऽअस्य कलशः | ३.२.११; ३.३२.१५ |
| आप्रा रजांसि दिव्यानि | ३.८.४; ४.५३.३ |
| आभिष्टे ऽअद्य | ३.५.१०; ४.१०.४ |
| आरे ऽअस्मदमतिमारे | ३.५.११; ४.११.६ |
| आवहन्त्यरुणीर्ज्योतिषा० | ३.५.१४; ४.१४.३ |
| आशुं दधिक्रां तमु नु | ३.७.१३; ४.३९.१ |
| आशुं दूतं विवस्वतो | ३.५.६; ४.७.४ |
| आश्रृण्वते ऽअदृपिताय | ३.४.२०; ४.३.३ |
| इच्छन्ति त्वा सोम्यासः | ३.२.१; ३.३०.३ |
| इति चिन्मन्युमध्रि० | ३.८.२५; ५.७.१० |
| इदं मे ऽअग्ने कियत | ३.५.२; ४.५.६ |
| इदं वामास्ये हविः | ३.७.२५; ४.४९.१ |
| इदं ह्यन्वोजसा सुतं | ३.३.१६; ३.५१.१० |
| इदमु त्यत्पुरुतमं पुरस्ता० | ३.८.१; ४.५१.१ |
| इदमु त्यन्महि महामनीकं | ३.५.२; ४.५.९ |
| इदाह्नः पीतिमुत वो मदं | ३.७.२; ४.३३.११ |
| इध्मं यस्ते जभरच्छ० | ३.५.१२; ४.१२.२ |

कथा महे पुष्टिम्भराय ३.४.२१; ४.३.७
कथा शर्द्धाय मरुतामृताय ३.४.२१; ४.३.८
कथाश्रृणोति हूयमानमिन्द्रः ३.६.९; ४.२३.३
कथा सबाधः शशमानो ३.६.९; ४.२३.४
कथा ह तद्वरुणाय ३.४.२०; ४.३.५
कद्धिष्ण्यासु वृधसानो ३.४.२१; ४.३.६
कनीनकेव विद्रधे ३.६.३०; ४.३२.२३
कन्याइव वहतुमेतवा ऽउ ३.८.११; ४.५८.९
कमेतं त्वं युवते कुमारं ३.८.१४; ५.२.२
कया तच्छृण्वे शच्या ३.६.४; ४.२०.९
कया नश्चित्र ऽआ ३.६.२४; ४.३१.१
कविं शशासुः कवयो०ग ३.४.१८; ४.२.१२
कविर्न निण्यं विदथानि ३.५.१७; ४.१६.३
कविर्नृचक्षा ऽअभि ३.३.२५; ३.५४.६
कस्ते मातरं विधवाम ३.५.२६; ४.१८.१२
कस्त्वा सत्यो मदानां ३.६.२४; ४.३१.२
का मर्यादा वयुना कद्ध ३.५.३; ४.५.१३
का वां भूदुपमातिः ३.७.१९; ४.४३.४
का सुष्टुतिः शवसः ३.६.११; ४.२४.१
कायमानो वना त्वं ३.१.५; ३.९.२
किं ते कृण्वन्ति कीकटेषु ३.३.२१; ३.५३.१४
किं नो ऽअस्य द्रविणं ३.५.३; ४.५.१२
किं स ऽऋधक्कृणवद्यं ३.५.२५; ४.१८.४
किमादमत्रं सख्यं सखिभ्यः ३.६.१०; ४.२३.६
किमादुतासि वृत्रहन्मघव० ३.६.२०; ४.३०.७
किमु ष्विदस्मै निविदो ३.५.२६; ४.१८.७
किम्मयः स्विच्चमस ऽएष ३.७.५; ४.३५.४
कियत्स्विदिन्द्रो ३.५.२३; ४.१७.१२
कुत्रा चिद्यस्य समृतौ ३.८.२४; ५.७.२
कुत्साय शुष्णमशुषं नि ३.५.१९; ४.१६.१२
कुमारं माता युवतिः ३.८.१४; ५.२.१
कुवित्स देवीः सनयो ३.८.१; ४.५१.४
कुविन्मा गोपां करसे ३.३.७; ३.४३.५
कृणुष्व पाजः प्रसितिं ३.४.२३; ४.४.१
कृणोत धूमं वृषणं सखायो० ३.१.३३; ३.२९.९
कृणोत्यस्मै वरिवो ३.६.१२; ४.२४.६
कृतं चिद्धि ष्मा सनेमि ३.५.१०; ४.१०.७
कृधि रत्नं सुसनितर्धनानां ३.१.१८; ३.१८.५
कृष्णं त ऽएम रुशतः ३.५.७; ४.७.९
के मे मर्यकं वि यवन्त ३.८.१४; ५.२.५
को देवानामवो ऽअद्या ३.६.१३; ४.२५.३
को नानाम वचसा ३.६.१३; ४.२५.२
को मृळाति कतम ऽआग० ३.७.१९; ४.४३.२
को वस्त्राता वसवः को ३.८.६; ४.५५.१
को वामद्या करते ३.७.२०; ४.४४.३
को ऽअद्धा वेद क ऽइह ३.३.२४; ३.५४.५
को ऽअद्य नर्यो ३.६.१३; ४.२५.१
को ऽअस्य वीरः सधमादमाप ३.६.९; ४.२३.२
क्रतूयन्ति क्षितयो योग ३.६.११; ४.२४.४
क्व स्विदासां कतमा ३.८.२; ४.५१.६
क्षियन्तं त्वमक्षियन्तं ३.५.२३; ४.१७.१३
क्षेत्रादपश्यं सनुतश्चरन्तं ३.८.१४; ५.२.४
क्षेत्रस्य पतिना वयं ३.८.९; ४.५७.१
क्षेत्रस्य पते मधुमन्तमूर्मिं ३.८.९; ४.५७.२
गम्भीराँ ऽउदधीँरिव ३.३.९; ३.४५.३
गर्भे नु सन्नन्वेषा० ३.६.१६; ४.२७.१
गवाशिरं मन्थिनमिन्द्र शुक्रं ३.२.९; ३.३२.२
गव्यन्त ऽइन्द्रं सख्याय विप्रा ३.५.२४; ४.१७.१६
गिरिर्न यः स्वतवाँ ऽऋष्व ३.६.४; ४.२०.६
गिर्वणः पाहि नः ३.३.२; ३.४०.६
गृणाना जमदग्निना ३.४.११; ३.६२.१८
गृष्टिः ससूव स्थविरं ३.५.२६; ४.१८.१०
गोभिर्मिमिक्षुं दधिरे ३.३.१४; ३.५०.३
गोमाँ ऽअग्नेऽविमाँ ३.४.१६; ४.२.५
घृतं न पूतं तनूररेपाः ३.५.१०; ४.१०.६
घृतवन्तः पावक ते ३.१.२१; ३.२१.२
चक्रियो विश्वा भुवनाभि ३.१.१६; ३.१६.५
चत्वारिशृङ्गा त्रयो ऽअस्य ३.८.१०; ४.५८.३

| पाद | सन्दर्भ |
|---|---|
| दशं ते कलशानां | ३.६.३०; ४.३२.१९ |
| दिदृक्षन्त ऽउषसो यामन्न० | ३.२.३; ३.३०.१३ |
| दिवक्षसो धेनवो वृष्णो | ३.१.१; ३.७.२ |
| दिवश्चिदा पूर्व्या जायमाना | ३.२.२५; ३.३९.२ |
| दिवश्चिद्घा दुहितरं | ३.६.२०; ४.३०.९ |
| दिवो धर्त्ता भुवनस्य | ३.८.४; ४.५३.२ |
| दिशः सूर्यो न मिनाति | ३.२.३; ३.३०.१२ |
| दीदिवांसमपूर्व्यं | ३.१.१३; ३.१३.५ |
| दूतं वो विश्ववेदसं | ३.५.८; ४.८.१ |
| देवं नरः सवितारं | ३.४.११; ३.६२.१२ |
| देवस्त्वष्टा सविता विश्वरूपः | ३.३.३१; ३.५५.१९ |
| देवस्य सवितुर्वयं | ३.४.११; ३.६२.११ |
| देवानां दूतः पुरुध प्रसूतो० | ३.३.२७; ३.५४.१९ |
| देवी देवेभिर्यजते | ३.८.८; ४.५६.२ |
| देवीर्द्वारो वि श्रयध्वं | ३.८.२०; ५.५.५ |
| देवेभ्यो हि प्रथमं यज्ञियेभ्यो० | ३.८.५; ४.५४.२ |
| देवैर्नो देव्यदितिर्नि | ३.८.७; ४.५५.७ |
| दैव्या होतारा प्रथमा | ३.१.२; ३.७.८ |
| द्यामिन्द्रो हरिधायसं | ३.३.८; ३.४४.३ |
| द्युम्नेषु पृतनाज्ये | ३.२.२२; ३.३७.७ |
| द्रवतां त ऽउषसा वाजयन्ती | ३.१.१४; ३.१४.३ |
| द्रुहं जिघांसन्ध्वरसम० | ३.६.१०; ४.२३.७ |
| द्वादश द्यून्यदगोह्यस्या० | ३.७.२; ४.३३.७ |
| द्विमाता होता विदथेषु | ३.३.२९; ३.५५.७ |
| द्विर्य पञ्च जीजनन्त्संवसानाः | ३.५.५; ४.६.८ |
| धर्त्ता दिवो रजसस्पृष्ट | ३.३.१३; ३.४९.४ |
| धानावन्तं करम्भिणम० | ३.३.१७; ३.५२.१ |
| धामन्ते विश्वं भुवनमधि | ३.८.११; ४.५८.११ |
| धिया चक्रे वरेण्यो | ३.१.२९; ३.२७.९ |
| धिषा यदि धिषण्यन्तः | ३.६.६; ४.२१.६ |
| धुनेतयः सुप्रकेतं मदन्तो | ३.७.२६; ४.५०.२ |
| धेनुः प्रत्नस्य काम्यं | ३.४.३; ३.५८.१ |
| न घा स मामप जोषं | ३.६.१६; ४.२७.२ |
| न जामये तान्वो रिक्थमारै० | ३.२.५; ३.३१.२ |
| न तं जिनन्ति बहवो | ३.६.१३; ४.२५.५ |
| न ता मिनन्ति मायिनो | ३.४.१; ३.५६.१ |
| न ते दूरे परमा चिद्रजांस्या | ३.२.१; ३.३०.१ |
| न त्वद्धोता पूर्वो ऽअग्ने | ३.८.१६; ५.३.५ |
| न त्वा गभीरः पुरुहूत | ३.२.११; ३.३२.१६ |
| न त्वा वरन्ते ऽअन्यथा | ३.६.२८; ४.३२.८ |
| न प्रमिये सवितुर्दैव्यस्य | ३.८.५; ४.५४.४ |
| न यस्य वर्त्ता जनुषा न्वस्ति | ३.६.४; ४.२०.७ |
| न यस्य सातुर्जनितोरवारि | ३.५.५; ४.६.७ |
| न रेवता पणिना | ३.६.१४; ४.२५.७ |
| न सायकस्य चिकिते जनासो | ३.३.२३; ३.५३.२३ |
| नकिरिन्द्र त्वदुत्तरो | ३.६.१९; ४.३०.१ |
| नकिरेषां निन्दिता मर्त्त्येषु | ३.२.२५; ३.३९.४ |
| नराशंसः सुषूदतीमं | ३.८.२०; ५.५.२ |
| नवा नो ऽअग्न ऽआ | ३.८.२३; ५.६.८ |
| नहि ष्मा ते शतं चन | ३.६.२५; ४.३१.९ |
| नाना चक्राते यम्या३ं | ३.३.३०; ३.५५.११ |
| नापाभूत न वोऽतीतृषा० | ३.७.४; ४.३४.११ |
| नामानि ते शतक्रतो | ३.२.२१; ३.३७.३ |
| नासत्या मे पितरा बन्धुपृच्छा | ३.३.२७; ३.५४.१६ |
| नाहमतो निरया | ३.५.२५; ४.१८.२ |
| नि गव्यता मनसा सेदुरर्कैः | ३.२.६; ३.३१.९ |
| नि त्वा दधे वर ऽआ | ३.१.२३; ३.२३.५ |
| नि त्वा दधे वरेण्यं | ३.१.२९; ३.२७.१० |
| नि वेवेति पलितो दूत | ३.३.२९; ३.५५.९ |
| नि षीमिदत्र गुह्या | ३.२.२३; ३.३८.३ |
| नि सामनामिषिरामिन्द्र | ३.२.२; ३.३०.९ |
| निर्मथितः सुधित ऽआ | ३.१.२३; ३.२३.२ |
| निर्युवाणो ऽअशस्ती० | ३.७.२४; ४.४८.२ |
| निष्षिध्वरीस्त ऽओषधी० | ३.३.३१; ३.५५.२२ |
| नू नो रयिं पुरुवीरं बृहन्तं | ३.७.२०; ४.४४.६ |
| नू नो रास्व सहस्रवत्तो० | ३.१.१३; ३.१३.७ |
| नू रोदसी बृहद्भिर्नो | ३.८.८; ४.५६.४ |
| नू रोदसी ऽअहिना | ३.८.७; ४.५५.६ |

| | |
|---|---|
| नू ष्टुत ऽइन्द्र नू | ३.६.४; ४.२०.११ |
| नू ष्टुत ऽइन्द्र नू | ३.६.६; ४.२१.११ |
| नू ष्टुत ऽइन्द्र नू गृणान | ३.५.२०; ४.१६.२१ |
| नू ष्टुत ऽइन्द्र नू गृणान | ३.५.२४; ४.१७.२१ |
| नू ष्टुत ऽइन्द्र नू गृणान | ३.६.२; ४.१९.११ |
| नू ष्टुत ऽइन्द्र नू गृणान | ३.६.१०; ४.२३.११ |
| नू ष्टुत ऽइन्द्र नू गृणान | ३.६.१२; ४.२४.११ |
| नू ष्टुत ऽइन्द्र नू गृणान | ३.६.८; ४.२२.११ |
| नृणामुं त्वा नृतमं गीर्भि० | ३.३.१५; ३.५१.४ |
| नेशत्तमो दुधितं | ३.४.१५; ४.१.१७ |
| पतिर्भव वृत्रहन्त्सूनृतानां | ३.२.८; ३.३१.१८ |
| पदेइव निहिते दस्मे | ३.३.३०; ३.५५.१५ |
| पद्या वस्ते पुरुरूपा | ३.३.३०; ३.५५.१४ |
| परशुं चिद्वि तपति शिम्बलं | ३.३.२३; ३.५३.२२ |
| परा याहि मघवन्ना च | ३.३.१९; ३.५३.५ |
| परायतीं मातरमन्वचष्ट | ३.५.२५; ४.१८.३ |
| परि ते दूळभो रथोऽस्माँ | ३.५.९; ४.९.८ |
| परि त्मना मितद्रुरेति | ३.५.४; ४.६.५ |
| परि त्रिविष्ट्यध्वरं | ३.५.१५; ४.१५.२ |
| परि वाजपतिः कविर० | ३.५.१५; ४.१५.३ |
| परि विश्वानि सुधिता० | ३.१.१०; ३.११.८ |
| पित्रे चिच्चक्रुः सदनं समस्मै | ३.२.७; ३.३१.१२ |
| पिपीळे ऽअंशुर्मद्यो | ३.६.८; ४.२२.८ |
| पिबा वर्द्धस्व तव घा | ३.२.१९; ३.३६.३ |
| पीवोअश्वाः शुचद्रथा | ३.७.९; ४.३७.४ |
| पुनर्ये चक्रुः पितरा युवाना | ३.७.१; ४.३३.३ |
| पुनाने तन्वा मिथः | ३.८.८; ४.५६.६ |
| पुराणमोकः सख्यं शिवं | ३.४.४; ३.५८.६ |
| पुरीष्यासो ऽअग्नयः | ३.१.२२; ३.२२.४ |
| पुरुकुत्सानी हि वाम० | ३.७.१८; ४.४२.९ |
| पुरुष्टुतस्य धामभिः | ३.२.२१; ३.३७.४ |
| पुरोळा ऽअग्ने | ३.१.३१; ३.२७.१७ |
| पुरोळाशं च नो घसो | ३.३.१७; ३.५२.३ |
| पुरोळाशं च नो घसो | ३.६.२९; ४.३२.१६ |

| | |
|---|---|
| पुरोळाशं पचत्यं | ३.३.१७; ३.५२.२ |
| पुरोळाशं सनश्रुत | ३.३.१७; ३.५२.४ |
| पूर्वीरस्य निष्षिधो मर्त्येषु | ३.३.१५; ३.५१.५ |
| पूर्वीरुषसः शरदश्च | ३.६.२; ४.१९.८ |
| पूषण्वते ते चकृमा करम्भं | ३.३.१८; ३.५२.७ |
| पृक्षप्रयजो द्रविणः सुवाचः | ३.१.२; ३.७.१० |
| पृथुपाजा ऽअमर्त्यो | ३.१.२८; ३.२७.५ |
| प्र णु त्यं विप्रमध्वरेषु | ३.८.१३; ५.१.७ |
| प्र ताँ ऽअग्निर्बभसत्ति० | ३.५.१; ४.५.४ |
| प्र ते पूर्वाणि करणानि | ३.६.२; ४.१९.१० |
| प्र ते बभ्रू विचक्षण | ३.६.३०; ४.३२.२२ |
| प्र ते वोचाम वीर्या ३ | ३.६.२८; ४.३२.१० |
| प्र ते ऽअग्ने हविष्मती० | ३.१.१९; ३.१९.२ |
| प्र ते ऽअश्नोतु कुक्ष्योः | ३.३.१६; ३.५१.१२ |
| प्र पर्वतानामुशती | ३.२.१२; ३.३३.१ |
| प्र पस्त्या३मदिति | ३.८.६; ४.५५.३ |
| प्र पीपय वृषभ जिन्व | ३.१.१५; ३.१५.६ |
| प्र मात्राभी रिरिचे रोचमानः | ३.३.१०; ३.४६.३ |
| प्र मे विविक्वाँ | ३.४.१; ३.५७.१ |
| प्र य ऽआरुः शितिपृष्ठस्य | ३.१.१; ३.७.१ |
| प्र यत्सिन्धवः प्रसवं | ३.२.२०; ३.३६.६ |
| प्र यन्तु वाजास्तविषी० | ३.१.२६; ३.२६.४ |
| प्र ये धामानि पूर्व्याण्य० | ३.८.६; ४.५५.२ |
| प्र वां महि द्यवी | ३.८.८; ४.५६.५ |
| प्र वामर्चन्त्युक्थिनो | ३.१.११; ३.१२.५ |
| प्र वामवोचमश्विना धियंधा | ३.७.२१; ४.४५.७ |
| प्र वो देवायाग्नये | ३.१.१३; ३.१३.१ |
| प्र वो वाजा ऽअभिद्यवो | ३.१.२८; ३.२७.१ |
| प्र शर्द्ध ऽआर्त्त प्रथमं | ३.४.१४; ४.१.१२ |
| प्र स मित्र मर्त्तो ऽअस्तु | ३.४.५; ३.५९.२ |
| प्र सद्यो ऽअग्ने ऽअत्येष्य० | ३.८.१३; ५.१.९ |
| प्र सप्तहोता सनकादरोचत | ३.१.३४; ३.२९.१४ |
| प्र सु ष विभ्यो मरुतो | ३.६.१५; ४.२६.४ |
| प्र सू त ऽइन्द्र प्रवता हरिभ्यां | ३.२.२; ३.३०.६ |

## ऋग्वेदीया

# शाङ्खायनसंहिता

## चतुर्थोऽष्टकः

पञ्चममण्डले सूक्तानि ९ - ८७

षष्ठमण्डले सूक्तानि १ - ६१

# ॥ चतुर्थाष्टके प्रथमोऽध्यायः ॥

**अथ प्रथमोऽध्यायः॥१॥ वर्गाः १-३३]** **[पञ्चममण्डले सूक्तानि १-३२**

## ( १ )

**मन्त्र-संख्याः ७ । ऋषिः = गय आत्रेयः। देवता = अग्निः। छन्दः = अनुष्टुप् ५, ७ पङ्क्तिः।**

**त्वामग्ने हविष्मन्तो देवं मर्त्तास ईळते ।**

**मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक् ॥१॥**

त्वाम् । अग्ने । हविष्मन्तः । देवम् । मर्त्तासः । ईळते ॥

मन्ये । त्वा । जात०वेदसम् । सः । हव्या । वक्षि । आनुषक् ॥१॥

**अग्निर्होता दास्वतः क्षयस्य वृक्तबर्हिषः ।**

**सं यज्ञासश्चरन्ति यं सं वाजासः श्रवस्यवः ॥२॥**

अग्निः । होता । दास्वतः । क्षयस्य । वृक्त०बर्हिषः ॥

सम् । यज्ञासः । चरन्ति । यम् । सम् । वाजासः । श्रवस्यवः ॥२॥

**उत स्म यं शिशुं यथा नवं जनिष्टारणी ।**

**धर्त्तारं मानुषीणां विशामग्निं स्वध्वरम् ॥३॥**

उत । स्म । यम् । शिशुम् । यथा । नवम् । जनिष्ट । अरणी इति ॥

धर्त्तारम् । मानुषीणाम् । विशाम् । अग्निम् । सु०अध्वरम् ॥३॥

**उत स्म दुर्गृभीयसे पुत्रो न ह्वार्याणाम् ।**

**पुरू यो दग्धासि वनाग्ने पशुर्न यवसे ॥४॥**

उत । स्म । दुः२गृभीयसे । पुत्रः । न । ह्वार्याणाम् ॥

पुरु । यः । दग्धा । असि । वना । अग्ने । पशुः । न । यवसे ॥४॥

**अध स्म यस्यार्चयः सम्यक्संयन्ति धूमिनः ।**

**यदीमह त्रितो दिव्युप ध्मातेव धमति शिशीते ध्मातरी यथा ॥५॥**

अध । स्म । यस्य । अर्चयः । सम्यक् । सम्ऽयन्ति ।

धूमिनः ॥ यत् । ईम् । अह । त्रितः । दिवि । उप ।

ध्माताऽइव । धमति । शिशीते । ध्मातरि । यथा ॥५॥

**तवाहमग्न ऽऊतिभिर्मित्रस्य च प्रशस्तिभिः ।**

**द्वेषोयुतो न दुरिता तुर्याम मर्त्यानाम् ॥६॥**

तव । अहम् । अग्ने । ऊतिऽभिः । मित्रस्य । च । प्रशस्तिऽभिः ॥

द्वेषःऽयुतः । न । दुःऽइता । तुर्याम । मर्त्यानाम् ॥६॥

**तं नो ऽअग्ने ऽअभी नरो रयिं सहस्व ऽआ भर ।**

**स क्षेपयत्स पोषयद्भुवद्वाजस्य सातय ऽउतैधि पृत्सु नो वृधे ॥७॥ ( १ ) [ मन्त्रसंख्या ७ ]**

तम् । नः । अग्ने । अभि । नरः । रयिम् । सहस्वः ।

आ । भर ॥ सः । क्षेपयत् । सः । पोषयत् । भुवत् ।

वाजस्य । सातये । उत । एधि । पृत्ऽसु । नः । वृधे ॥७॥

# ( १० )

७ गय आत्रेयः। अग्निः। अनुष्टुप् ४, ७ पङ्क्तिः ।

**अग्न ऽओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो ।**

**प्र नो राया परीणसा रत्सि वाजाय पन्थाम् ॥१॥**

अग्ने । ओजिष्ठम् । आ । भर । द्युम्नम् । अस्मभ्यम् । अध्रिगो इत्यध्रिऽगो ॥

प्र । नः । राया । परीणसा । रत्सि । वाजाय । पन्थाम् ॥१॥

**त्वं नो ऽअग्ने ऽअद्भुत क्रत्वा दक्षस्य मंहना ।**

**त्वे ऽअसुर्यं१मारुहत्क्राणा मित्रो न यज्ञियः ॥२॥**

त्वम् । नः । अग्ने । अद्भुत । क्रत्वा । दक्षस्य । मंहना ॥
त्वे इति । असुर्यम् । आ । अरुहत् । क्राणा । मित्रः । न । यज्ञियः ॥२॥

त्वं नो ऽअग्न ऽएषां गयं पुष्टिं च वर्द्धय ।
ये स्तोमेभिः प्र सूरयो नरो मघान्यानशुः ॥३॥
त्वम् । नः । अग्ने । एषाम् । गयम् । पुष्टिम् । च । वर्द्धय ॥
ये । स्तोमेभिः । प्र । सूरयः । नरः । मघानि । आनशुः ॥३॥

ये ऽअग्ने चन्द्र ते गिरः शुम्भन्त्यश्वराधसः ।
शुष्मेभिः शुष्मिणो नरो दिवश्चिद्येषां बृहत्सुकीर्तिर्बोधति त्मना ॥४॥
ये । अग्ने । चन्द्र । ते । गिरः । शुम्भन्ति ।
अश्व०राधसः ॥ शुष्मेभिः । शुष्मिणः । नरः । दिवः ।
चित् । येषाम् । बृहत् । सु०कीर्तिः । बोधति । त्मना ॥४॥

तव त्ये ऽअग्ने ऽअर्चयो भ्राजन्तो यन्ति धृष्णुया ।
परिज्मानो न विद्युतः स्वानो रथो न वाजयुः ॥५॥
तव । त्ये । अग्ने । अर्चयः । भ्राजन्तः । यन्ति । धृष्णु०या ॥
परि०ज्मानः । न । वि०द्युतः । स्वानः । रथः । न । वाजयुः ॥५॥

नू नो ऽअग्न ऽऊतये सबाधसश्च रातये ।
अस्माकासश्च सूरयो विश्वा ऽआशास्तरीषणि ॥६॥
नु । नः । अग्ने । ऊतये । स०बाधसः । च । रातये ॥
अस्माकासः । च । सूरयः । विश्वाः । आशाः । तरीषणि ॥६॥

त्वं नो ऽअग्ने ऽअङ्गिरः स्तुतः स्तवान ऽआ भर ।
होतर्विभ्वासहं रयिं स्तोतृभ्यः स्तवसे च न ऽउतैधि पृत्सु नो वृधे ॥७॥ (२) [ १४ ]

त्वम् । नः । अग्ने । अङ्गिरः । स्तुतः । स्तवानः । आ ।
भर । होतः । विभ्व०सहम् । रयिम् ॥ स्तोतृ०भ्यः । स्तवसे ।
च । नः । उत । एधि । पृत्०सु । नः । वृधे ॥७॥

# ( ११ )

६ सुतंभर आत्रेयः । अग्निः । जगती ।

**जनस्य गोपा ऽअजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।**
**घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ॥१॥**
जनस्य । गोपाः । अजनिष्ट । जागृविः । अग्निः । सु०दक्षः ।
सुविताय । नव्यसे ॥ घृत०प्रतीकः । बृहता । दिवि०स्पृशा ।
द्यु०मत् । वि । भाति । भरतेभ्यः । शुचिः ॥१॥

**यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समीधिरे ।**
**इन्द्रेण देवैः सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः ॥२॥**
यज्ञस्य । केतुम् । प्रथमम् । पुरः२हितम् । अग्निम् । नरः ।
त्रि०सधस्थे । सम् । ईधिरे ॥ इन्द्रेण । देवैः । स०रथम् । सः ।
बर्हिषि । सीदत् । नि । होता । यजथाय । सु०क्रतुः ॥२॥

**असंमृष्टो जायसे मात्रोः शुचिर्मन्द्रः कविरुदतिष्ठो विवस्वतः ।**
**घृतेन त्वावर्द्धयन्नग्न ऽआहुत धूमस्ते केतुरभवद्दिवि श्रितः ॥३॥**
असम्०मृष्टः । जायसे । मात्रोः । शुचिः । मन्द्रः । कविः । उत् ।
अतिष्ठः । विवस्वतः ॥ घृतेन । त्वा । अवर्द्धयन् । अग्ने । आ०हुत ।
धूमः । ते । केतुः । अभवत् । दिवि । श्रिइतः ॥३॥

**अग्निर्नो यज्ञमुप वेतु साधुयाग्निं नरो वि भरन्ते गृहेगृहे ।**
**अग्निर्दूतो ऽअभवद्धव्यवाहनोऽग्निं वृणाना वृणते कविक्रतुम् ॥४॥**

अग्निः । नः । यज्ञम् । उप । वेतु । साधु०या । अग्निम् ।
नरः । वि । भरन्ते । गृहे०गृहे ॥ अग्निः । दूतः । अभवत् ।
हव्य०वाहनः । अग्निम् । वृणानाः । वृणते । कवि०क्रतुम् ॥४॥

**तुभ्येदमग्ने मधुमत्तमं वचस्तुभ्यं मनीषा ऽइयमस्तु शं हृदे ।**
**त्वां गिरः सिन्धुमिवावनीर्महीरा पृणन्ति शवसा वर्द्धयन्ति च ॥५॥**
तुभ्य । इदम् । अग्ने । मधुमत्०तमम् । वचः । तुभ्यम् । मनीषा ।
इयम् । अस्तु । शम् । हृदे ॥ त्वाम् । गिरः । सिन्धुम्ऽइव ।
अवनीः । महीः । आ । पृणन्ति । शवसा । वर्द्धयन्ति । च ॥५॥

**त्वामग्ने ऽअङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने ।**
**स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः ॥६॥ (३) [२०]**
त्वाम् । अग्ने । अङ्गिरसः । गुहा । हितम् । अनु । अविन्दन् ।
शिश्रियाणम् । वने०वने ॥ सः । जायसे । मथ्यमानः । सहः ।
महत् । त्वाम् । आहुः । सहसः । पुत्रम् । अङ्गिरः ॥६॥

## ( १२ )

**६ सुतंभर आत्रेयः। अग्निः। त्रिष्टुप् ।**

**प्राग्नये बृहते यज्ञियाय ऽऋतस्य वृष्णे ऽअसुराय मन्म ।**
**घृतं न यज्ञ ऽआस्येइ सुपूतं गिरं भरे वृषभाय प्रतीचीम् ॥१॥**
प्र । अग्नये । बृहते । यज्ञियाय । ऋतस्य । वृष्णे ।
असुराय । मन्म ॥ घृतम् । न । यज्ञे । आस्ये ।
सु०पूतम् । गिरम् । भरे । वृषभाय । प्रतीचीम् ॥१॥

**ऋतं चिकित्व ऽऋतमिच्चिकिद्ध्यृतस्य धारा ऽअनु तृन्धि पूर्वीः ।**
**नाहं यातुं सहसा न द्वयेन ऽऋतं सपाम्यरुषस्य वृष्णः ॥२॥**

ऋतम् । चिकित्वः । ऋतम् । इत् । चिकिद्धि । ऋतस्य ।
धाराः । अनु । तृन्धि । पूर्वीः ॥ न । अहम् । यातुम् ।
सहसा । न । द्वयेन । ऋतम् । सपामि । अरुषस्य । वृष्णः ॥२॥

**कया नो ऽअग्न ऽऋतयन्नृतेन भुवो नवेदा ऽउचथस्य नव्यः ।**
**वेदा मे देव ऽऋतुपा ऽऋतूनां नाहं पतिं सनितुरस्य रायः ॥३॥**
कया । नः । अग्ने । ऋतयन् । ऋतेन । भुवः । नवेदाः ।
उचथस्य । नव्यः ॥ वेद । मे । देवः । ऋतु०पाः । ऋतूनाम् ।
न । अहम् । पतिम् । सनितुः । अस्य । रायः ॥३॥

**के ते ऽअग्ने रिपवे बन्धनासः के पायवः सनिषन्त द्युमन्तः ।**
**के धासिमग्ने ऽअनृतस्य पान्ति क ऽआसतो वचसः सन्ति गोपाः ॥४॥**
के । ते । अग्ने । रिपवे । बन्धनासः । के । पायवः ।
सनिषन्त । द्यु०मन्तः ॥ के । धासिम् । अग्ने । अनृतस्य ।
पान्ति । के । असतः । वचसः । सन्ति । गोपाः ॥४॥

**सखायस्ते विषुणा ऽअग्न ऽएते शिवासः सन्तो ऽअशिवा ऽअभूवन् ।**
**अधूर्षत स्वयमेते वचोभिर्ऋजूयते वृजिनानि ब्रुवन्तः ॥५॥**
सखायः । ते । विषुणाः । अग्ने । एते । शिवासः ।
सन्तः । अशिवाः । अभूवन् ॥ अधूर्षत । स्वयम् । एते ।
वचःऽभिः । ऋजु०यते । वृजिनानि । ब्रुवन्तः ॥५॥

**यस्ते ऽअग्ने नमसा यज्ञमीट्ट ऽऋतं स पात्यरुषस्य वृष्णः ।**
**तस्य क्षयः पृथुरा साधुरेतु प्रसर्स्राणस्य नहुषस्य शेषः ॥६॥ (४) [ २६ ]**
यः । ते । अग्ने । नमसा । यज्ञम् । ईट्टे । ऋतम् । सः ।
पाति । अरुषस्य । वृष्णः ॥ तस्य । क्षयः । पृथुः । आ ।
साधुः । एतु । प्र०सर्स्राणस्य । नहुषस्य । शेषः ॥६॥

# ( १३ )

६ सुतंभर आत्रेयः। अग्निः। गायत्री।

**अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि ।**

**अग्ने ऽअर्चन्त ऽऊतये ॥१॥**

अर्चन्तः । त्वा । हवामहे । अर्चन्तः । सम् । इधीमहि ॥

अग्ने । अर्चन्तः । ऊतये ॥१॥

**अग्नेः स्तोमं मनामहे सिध्रमद्य दिविस्पृशः ।**

**देवस्य द्रविणस्यवः ॥२॥**

अग्नेः । स्तोमम् । मनामहे । सिध्रम् । अद्य । दिवि०स्पृशः ॥

देवस्य । द्रविणस्यवः ॥२॥

**अग्निर्जुषत नो गिरो होता यो मानुषेष्वा ।**

**स यक्षद्दैव्यं जनम् ॥३॥**

अग्निः । जुषत । नः । गिरः । होता । यः । मानुषेषु । आ ॥

सः । यक्षत् । दैव्यम् । जनम् ॥३॥

**त्वमग्ने सप्रथा ऽअसि जुष्टो होता वरेण्यः ।**

**त्वया यज्ञं वि तन्वते ॥४॥**

त्वम् । अग्ने । स०प्रथाः । असि । जुष्टः । होता । वरेण्यः ॥

त्वया । यज्ञम् । वि । तन्वते ॥४॥

**त्वामग्ने वाजसातमं विप्रा वर्द्धन्ति सुष्टुतम् ।**

**स नो रास्व सुवीर्यम् ॥५॥**

त्वाम् । अग्ने । वाज०सातमम् । विप्राः । वर्द्धन्ति । सु०स्तुतम् ॥

सः । नः । रास्व । सु०वीर्यम् ॥५॥

**अग्ने नेमिरराँइव देवाँस्त्वं परिभूरसि ।**

**आ राधश्चित्रमृञ्जसे ॥६॥ (५)** [ ३२ ]

अग्ने । नेमिः । अरान्ऽइव । देवान् । त्वम् । परि०भूः । असि ॥

आ । राधः । चित्रम् । ऋञ्जसे ॥६॥

# ( १४ )

६ सुतंभर आत्रेयः। अग्निः। गायत्री।

**अग्निं स्तोमेन बोधय समिधानो ऽअमर्त्त्यम् ।**

**हव्या देवेषु नो दधत् ॥१॥**

अग्निम् । स्तोमेन । बोधय । सम्०इधानः । अमर्त्त्यम् ॥

हव्या । देवेषु । नः । दधत् ॥१॥

**तमध्वरेष्वीळते देवं मर्त्ता ऽअमर्त्त्यम् ।**

**यजिष्ठं मानुषे जने ॥२॥**

तम् । अध्वरेषु । ईळते । देवम् । मर्त्ताः । अमर्त्त्यम् ॥

यजिष्ठम् । मानुषे । जने ॥२॥

**तं हि शश्वन्त ऽईळते स्रुचा देवं घृतश्चुता ।**

**अग्निं हव्याय वोळ्हवे ॥३॥**

तम् । हि । शश्वन्तः । ईळते । स्रुचा । देवम् । घृत०श्चुता ॥

अग्निम् । हव्याय । वोळ्हवे ॥३॥

**अग्निर्जातो ऽअरोचत घ्नन्दस्यूञ्ज्योतिषा तमः ।**

**अविन्दद्गा ऽअपः स्वः ॥४॥**

अग्निः । जातः । अरोचत । घ्नन् । दस्यून् । ज्योतिषा । तमः ॥

अविन्दत् । गाः । अपः । स्वः ॥४॥

**अग्निमीळेन्यं कविं घृतपृष्ठं सपर्यत ।**
**वेतु मे शृणवद्धवम् ॥५॥**
अग्निम् । ईळेन्यम् । कविम् । घृत०पृष्ठम् । सपर्यत ॥
वेतु । मे । शृणवत् । हवम् ॥५॥

**अग्निं घृतेन वावृधुः स्तोमेभिर्विश्वचर्षणिम् ।**
**स्वाधीभिर्वचस्युभिः ॥६॥ ( ६ )** [ ३८ ]
अग्निम् । घृतेन । ववृधुः । स्तोमेभिः । विश्व०चर्षणिम् ॥
सु०आधीभिः । वचस्यु०भिः ॥६॥

## ( १५ ) [ अथ द्वितीयोऽनुवाकः ॥२॥ सू. १५-३२

**५ धरुण आङ्गिरसः । अग्निः । त्रिष्टुप् ।**

**प्र वेधसे कवये वेद्याय गिरं भरे यशसे पूर्व्याय ।**
**घृतप्रसत्तो ऽअसुरः सुशेवो रायो धर्त्ता धरुणो वस्वो ऽअग्निः ॥१॥**
प्र । वेधसे । कवये । वेद्याय । गिरम् । भरे ।
यशसे । पूर्व्याय ॥ घृत०प्रसत्तः । असुरः । सु०शेवः ।
रायः । धर्त्ता । धरुणः । वस्वः । अग्निः ॥१॥

**ऋतेन ऽऋतं धरुणं धारयन्त यज्ञस्य शाके परमे व्योमन् ।**
**दिवो धर्मन्धरुणे सेदुषो नॄञ्जातैरजातॉं ऽअभि ये ननक्षुः ॥२॥**
ऋतेन । ऋतम् । धरुणम् । धारयन्त । यज्ञस्य । शाके ।
परमे । वि०ओमन् ॥ दिवः । धर्मन् । धरुणे । सेदुषः ।
नॄन् । जातैः । अजातान् । अभि । ये । ननक्षुः ॥२॥

**अंहोयुवस्तन्वस्तन्वते वि वयो महद्दुष्टरं पूर्व्याय ।**
**स संवतो नवजातस्तुतुर्यात्सिंहं न क्रुद्धमभितः परि ष्ठुः ॥३॥**

अंहः२युर्वः । तन्वः । तन्वते । वि । वयः । महत् ।
दुस्तरम् । पूर्व्याय ॥ सः । सम्०वतः । नव०जातः ।
तुतुर्यात् । सिंहम् । न । क्रुद्धम् । अभितः । परि । स्थुः ॥३॥

**मातेव यद्भरसे पप्रथानो जनंजनं धायसे चक्षसे च ।**
**वयोवयो जरसे यद्दधानः परि त्मना विषुरूपो जिगासि ॥४॥**
माताऽइव । यत् । भरसे । पप्रथानः । जन्म०जनम् ।
धायसे । चक्षसे । च ॥ वयः२वयः । जरसे । यत् ।
दधानः । परि । त्मना । विषु०रूपः । जिगासि ॥४॥

**वाजो नु ते शवसस्पात्वन्तमुरुं दोघं धरुणं देव रायः ।**
**पदं न तायुर्गुहा दधानो महो राये चितयन्नत्रिमस्पः ॥५॥ (७) [ ४३ ]**
वाजः । नु । ते । शवसः । पातु । अन्तम् । उरुम् । दोघम् ।
धरुणम् । देव । रायः ॥ पदम् । न । तायुः । गुहा । दधानः ।
महः । राये । चितयन् । अत्रिम् । अस्परित्यस्पः ॥५॥

## ( १६ )

५ पूरुरात्रेयः । अग्निः । अनुष्टुप्, ५ पङ्क्तिः ।

**बृहद्वयो हि भानवेऽर्चा देवायाग्नये ।**
**यं मित्रं न प्रशस्तिभिर्मर्त्तासो दधिरे पुरः ॥१॥**
बृहत् । वयः । हि । भानवे । अर्च । देवाय । अग्नये ॥
यम् । मित्रम् । न । प्रशस्ति०भिः । मर्त्तासः । दधिरे । पुरः ॥१॥

**स हि द्युभिर्जनानां होता दक्षस्य बाह्वोः ।**
**वि हव्यमग्निरानुषग्भगो न वारमृण्वति ॥२॥**

सः । हि । द्युऽभिः । जनानाम् । होता । दक्षस्य । बाह्वोः ॥
वि । हव्यम् । अग्निः । आनुषक् । भगः । न । वारम् । ऋण्वति ॥२॥

**अस्य स्तोमे मघोनः सख्ये वृद्धशोचिषः ।**
**विश्वा यस्मिन्तुविष्वणि समर्ये शुष्ममादधुः ॥३॥**
अस्य । स्तोमे । मघोनः । सख्ये । वृद्धऽशोचिषः ॥
विश्वा । यस्मिन् । तुविऽस्वनि । सम् । अर्ये । शुष्मम् । आऽदधुः ॥३॥

**अधा ह्यग्न ऽएषां सुवीर्यस्य मंहना ।**
**तमिद्यह्वं न रोदसी परि श्रवो बभूवतुः ॥४॥**
अध । हि । अग्ने । एषाम् । सुऽवीर्यस्य । मंहना ॥
तम् । इत् । यह्वम् । न । रोदसी इति । परि । श्रवः । बभूवतुः ॥४॥

**नू न ऽएहि वार्यमग्ने गृणान ऽआ भर ।**
**ये वयं ये च सूरयः स्वस्ति धामहे सचोतैधि पृत्सु नो वृधे ॥५॥ (८) [ ४८ ]**
नु । नः । आ । इहि । वार्यम् । अग्ने । गृणानः ।
आ । भर ॥ ये । वयम् । ये । च । सूरयः । स्वस्ति ।
धामहे । सचा । उत । एधि । पृत्ऽसु । नः । वृधे ॥५॥

## ( १७ )

**५ पूरुरात्रेयः । अग्निः । अनुष्टुप्, ५ पङ्क्तिः ।**

**आ यज्ञैर्देव मर्त्य ऽइत्था तव्यांसमूतये ।**
**अग्निं कृते स्वध्वरे पूरुरीळीतावसे ॥१॥**
आ । यज्ञैः । देव । मर्त्यः । इत्था । तव्यांसम् । ऊतये ॥
अग्निम् । कृते । सुऽअध्वरे । पूरुः । ईळीत । अवसे ॥१॥

अस्य हि स्वयशस्तर ऽआसा विधर्मन्मन्यसे ।
तं नाकं चित्रशोचिषं मन्द्रं परो मनीषया ॥२॥
अस्य । हि । स्वयशःऽतरः । आसा । विऽधर्मन् । मन्यसे ॥
तम् । नाकम् । चित्रऽशोचिषम् । मन्द्रम् । परः । मनीषया ॥२॥

अस्य वासा ऽउ ऽअर्चिषा य ऽआयुक्त तुजा गिरा ।
दिवो न यस्य रेतसा बृहच्छोचन्त्यर्चयः ॥३॥
अस्य । वै । असौ । ऊँ इति । अर्चिषा । यः । अयुक्त । तुजा । गिरा ॥
दिवः । न । यस्य । रेतसा । बृहत् । शोचन्ति । अर्चयः ॥३॥

अस्य क्रत्वा विचेतसो दस्मस्य वसु रथ ऽआ ।
अधा विश्वासु हव्योऽग्निर्विक्षु प्र शस्यते ॥४॥
अस्य । क्रत्वा । विऽचेतसः । दस्मस्य । वसु । रथे । आ ॥
अध । विश्वासु । हव्यः । अग्निः । विक्षु । प्र । शस्यते ॥४॥

नू न ऽइद्धि वार्यमासा सचन्त सूरयः ।
ऊर्जो नपादभिष्टये पाहि शग्धि स्वस्तय ऽउतैधि पृत्सु नो वृधे ॥५॥ (९) [ ५३ ]
नु । नः । इत् । हि । वार्यम् । आसा । सचन्त ।
सूरयः ॥ ऊर्जः । नपात् । अभिष्टये । पाहि । शग्धि ।
स्वस्तये । उत । एधि । पृत्ऽसु । नः । वृधे ॥५॥

# ( १८ )

५ द्वितो मृक्तवाहा आत्रेयः । अग्निः । अनुष्टुप्, ५ पङ्क्तिः ।

प्रातरग्निः पुरुप्रियो विशः स्तवेतातिथिः ।
विश्वानि यो ऽअमर्त्यो हव्या मर्त्तेषु रण्यति ॥१॥

प्रातः । अग्निः । पुरु॰प्रियः । विशः । स्तवेत । अतिथिः ॥
विश्वानि । यः । अमर्त्यः । हव्या । मर्तेषु । रण्यति ॥१॥

**द्विताय मृक्तवाहसे स्वस्य दक्षस्य मंहना ।**
**इन्दुं स धत्त ऽआनुषक्स्तोता चित्ते ऽअमर्त्य ॥२॥**
द्विताय । मृक्त॰वाहसे । स्वस्य । दक्षस्य । मंहना ॥
इन्दुम् । सः । धत्ते । आनुषक् । स्तोता । चित् । ते । अमर्त्य ॥२॥

**तं वो दीर्घायुशोचिषं गिरा हुवे मघोनाम् ।**
**अरिष्टो येषां रथो व्यश्वदावन्नीयते ॥३॥**
तम् । वः । दीर्घायु॰शोचिषम् । गिरा । हुवे । मघोनाम् ॥
अरिष्टः । येषाम् । रथः । वि । अश्व॰दावन् । ईयते ॥३॥

**चित्रा वा येषु दीधितिरासन्नुक्था पान्ति ये ।**
**स्तीर्णं बर्हिः स्वर्णरे श्रवांसि दधिरे परि ॥४॥**
चित्रा । वा । येषु । दीधितिः । आसन् । उक्था । पान्ति । ये ॥
स्तीर्णम् । बर्हिः । स्वः॰नरे । श्रवांसि । दधिरे । परि ॥४॥

**ये मे पञ्चाशतं ददुरश्वानां सधस्तुति ।**
**द्युमदग्ने महि श्रवो बृहत्कृधि मघोनां नृवदमृत नृणाम् ॥५॥ ( १० ) [ ५८ ]**
ये । मे । पञ्चाशतम् । ददुः । अश्वानाम् ।
सध॰स्तुति ॥ द्यु॰मत् । अग्ने । महि । श्रवः ।
बृहत् । कृधि । मघोनाम् । नृ॰वत् । अमृत । नृणाम् ॥५॥

# ( १९ )

५ वव्रिरात्रेयः । अग्निः । गायत्री, ३-४ अनुष्टुप्, ५ विराड्रूपा ।

अभ्यवस्थाः प्र जायन्ते प्र वव्रेर्वव्रिश्चिकेत ।
उपस्थे मातुर्वि चष्टे ॥१॥
अभि । अव॰स्थाः । प्र । जायन्ते । प्र । वव्रेः । वव्रिः । चिकेत ॥
उप॰स्थे । मातुः । वि । चष्टे ॥१॥

जुहुरे वि चितयन्तोऽनिमिषं नृम्णं पान्ति ।
आ दृळ्हां पुरं विविशुः ॥२॥
जुहुरे । वि । चितयन्तः । अनि॰मिषम् । नृम्णम् । पान्ति ॥
आ । दृळ्हाम् । पुरम् । विविशुः ॥२॥

आ श्वैत्रेयस्य जन्तवो द्युमद्वर्द्धन्त कृष्टयः ।
निष्कग्रीवो बृहदुक्थ ऽएना मध्वा न वाजयुः ॥३॥
आ । श्वैत्रेयस्य । जन्तवः । द्यु॰मत् । वर्द्धन्त । कृष्टयः ॥
निष्क॰ग्रीवः । बृहत्॰उक्थः । एना । मध्वा । न । वाज॰युः ॥३॥

प्रियं दुग्धं न काम्यमजामि जाम्योः सचा ।
घर्मो न वाजजठरोऽदब्धः शश्वतो दभः ॥४॥
प्रियम् । दुग्धम् । न । काम्यम् । अजामि । जाम्योः । सचा ॥
घर्मः । न । वाज॰जठरः । अदब्धः । शश्वतः । दभः ॥४॥

क्रीळन्नो रश्म ऽआ भुवः सं भस्मना वायुना वेविदानः ।
ता ऽअस्य सन्धृषजो न तिग्माः सुसंशिता वक्ष्यो वक्षणेस्थाः ॥५॥ ( ११ ) [ ६३ ]

क्रीळन् । नः । रश्मे । आ । भुवः । सम् । भस्मना ।
वायुना । वेविदानः ॥ ताः । अस्य । सन् । धृषजः ।
न । तिग्माः । सुऽसंशिताः । वक्ष्यः । वक्षणेऽस्थाः ॥५॥

# ( २० )

**४ प्रयस्वन्त आत्रेयाः । अग्निः । अनुष्टुप्, ४ पङ्क्तिः ।**

**यमग्ने वाजसातम त्वं चिन्मन्यसे रयिम् ।**
**तं नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ॥१॥**
यम् । अग्ने । वाजऽसातम । त्वम् । चित् । मन्यसे । रयिम् ॥
तम् । नः । गीःऽभिः । श्रवाय्यम् । देवऽत्रा । पनय । युजम् ॥१॥

**ये ऽअग्ने नेरयन्ति ते वृद्धा ऽउग्रस्य शवसः ।**
**अप द्वेषो ऽअप ह्वरोऽन्यव्रतस्य सश्चिरे ॥२॥**
ये । अग्ने । न । ईरयन्ति । ते । वृद्धाः । उग्रस्य । शवसः ॥
अप । द्वेषः । अप । ह्वरः । अन्यऽव्रतस्य । सश्चिरे ॥२॥

**होतारं त्वा वृणीमहेऽग्ने दक्षस्य साधनम् ।**
**यज्ञेषु पूर्व्यं गिरा प्रयस्वन्तो हवामहे ॥३॥**
होतारम् । त्वा । वृणीमहे । अग्ने । दक्षस्य । साधनम् ॥
यज्ञेषु । पूर्व्यम् । गिरा । प्रयस्वन्तः । हवामहे ॥३॥

**इत्था यथा त ऽऊतये सहसावन्दिवेदिवे ।**
**राय ऽऋताय सुक्रतो गोभिः ष्याम सधमादो वीरैः स्याम सधमादः ॥४॥ ( १२ ) [ ६७ ]**
इत्था । यथा । ते । ऊतये । सहसाऽवन् । दिवेऽदिवे ॥
राये । ऋताय । सुक्रतो इति सुऽक्रतो । गोभिः । स्याम ।
सधऽमादः । वीरैः । स्याम । सधऽमादः ॥४॥

# ( २१ )

४ सस आत्रेयः । अग्निः । अनुष्टुप्, ४ पङ्क्तिः ।

**मनुष्वत्त्वा नि धीमहि मनुष्वत्समिधीमहि ।**

**अग्ने मनुष्वदङ्गिरो देवान्देवयते यज ॥१॥**

मनुष्वत् । त्वा । नि । धीमहि । मनुष्वत् । सम् । इधीमहि ॥

अग्ने । मनुष्वत् । अङ्गिरः । देवान् । देव०यते । यज ॥१॥

**त्वं हि मानुषे जनेऽग्ने सुप्रीत इध्यसे ।**

**स्रुचस्त्वा यन्त्यानुषक्सुजात सर्पिरासुते ॥२॥**

त्वम् । हि । मानुषे । जने । अग्ने । सु०प्रीतः । इध्यसे ॥

स्रुचः । त्वा । यन्ति । आनुषक् । सु०जात । सर्पिः२आसुते ॥२॥

**त्वां विश्वे सजोषसो देवासो दूतमक्रत ।**

**सपर्यन्तस्त्वा कवे यज्ञेषु देवमीळते ॥३॥**

त्वाम् । विश्वे । सजोषसः । देवासः । दूतम् । अक्रत ॥

सपर्यन्तः । त्वा । कवे । यज्ञेषु । देवम् । ईळते ॥३॥

**देवं वो देवयज्ययाग्निमीळीत मर्त्यः ।**

**समिद्धः शुक्र दीदिह्यृतस्य योनिमासदः ससस्य योनिमासदः ॥४॥ ( १३ ) [ ७१ ]**

देवम् । वः । देव०यज्यया । अग्निम् । ईळीत । मर्त्यः ॥

सम्०इद्धः । शुक्र । दीदिहि । ऋतस्य । योनिम् । आ ।

असदः । ससस्य । योनिम् । आ । असदः ॥४॥

# ( २२ )

**४ विश्वसामा आत्रेयः । अग्निः । अनुष्टुप्, ४ पङ्क्तिः ।**

**प्र विश्वसामन्नत्रिवदर्चा पावकशोचिषे ।**

**यो ऽअध्वरेष्वीड्यो होता मन्द्रतमो विशि ॥१॥**

प्र । विश्व०सामन् । अत्रि०वत् । अर्च । पावक०शोचिषे ॥

यः । अध्वरेषु । ईड्यः । होता । मन्द्र०तमः । विशि ॥१॥

**न्यग्निं जातवेदसं दधाता देवमृत्विजम् ।**

**प्र यज्ञ ऽएत्वानुषगद्या देवव्यचस्तमः ॥२॥**

नि । अग्निम् । जात०वेदसम् । दधात । देवम् । ऋत्विजम् ॥

प्र । यज्ञः । एतु । आनुषक् । अद्य । देवव्यचःऽतमः ॥२॥

**चिकित्विन्मनसं त्वा देवं मर्त्तास ऽऊतये ।**

**वरेण्यस्य तेऽवस ऽइयानासो ऽअमन्महि ॥३॥**

चिकित्वित्०मनसम् । त्वा । देवम् । मर्त्तासः । ऊतये ॥

वरेण्यस्य । ते । अवसः । इयानासः । अमन्महि ॥३॥

**अग्ने चिकिद्ध्यस्य न ऽइदं वचः सहस्य ।**

**तं त्वा सुशिप्र दम्पते स्तोमैर्वर्द्धन्त्यत्रयो गीर्भिः शुम्भन्त्यत्रयः ॥४॥ ( १४ ) [ ७५ ]**

अग्ने । चिकिद्धि । अस्य । नः । इदम् । वचः । सहस्य ॥

तम् । त्वा । सु०शिप्र । दम्०पते । स्तोमैः । वर्द्धन्ति ।

अत्रयः । गीःऽभिः । शुम्भन्ति । अत्रयः ॥४॥

# ( २३ )

४ द्युम्नो विश्वचर्षणिरात्रेयः । अग्निः । अनुष्टुप्, ४ पङ्क्तिः ।

**अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम् ।**

**विश्वा यश्चर्षणीरभ्यासा वाजेषु सासहत् ॥१॥**

अग्ने । सहन्तम् । आ । भर । द्युम्नस्य । प्रऽसहा । रयिम् ॥

विश्वाः । यः । चर्षणीः । अभि । आसा । वाजेषु । ससहत् ॥१॥

**तमग्ने पृतनाषहं रयिं सहस्व ऽआ भर ।**

**त्वं हि सत्यो ऽअद्भुतो दाता वाजस्य गोमतः ॥२॥**

तम् । अग्ने । पृतनाऽसहम् । रयिम् । सहस्वः । आ । भर ॥

त्वम् । हि । सत्यः । अद्भुतः । दाता । वाजस्य । गोऽमतः ॥२॥

**विश्वे हि त्वा सजोषसो जनासो वृक्तबर्हिषः ।**

**होतारं सद्मसु प्रियं व्यन्ति वार्या पुरु ॥३॥**

विश्वे । हि । त्वा । सऽजोषसः । जनासः । वृक्तऽबर्हिषः ॥

होतारम् । सद्मऽसु । प्रियम् । व्यन्ति । वार्या । पुरु ॥३॥

**स हि ष्मा विश्वचर्षणिरभिमाति सहो दधे ।**

**अग्ने ऽएषु क्षयेष्वा रेवन्नः शुक्र दीदिहि द्युमत्पावक दीदिहि ॥४॥ ( १५ ) [ ७९ ]**

सः । हि । स्म । विश्वऽचर्षणिः । अभिऽमाति ।

सहः । दधे ॥ अग्ने । एषु । क्षयेषु । आ । रेवत् । नः ।

शुक्र । दीदिहि । द्युऽमत् । पावक । दीदिहि ॥४॥

# ( २४ )

४ गौपायना लौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्च । अग्निः । द्विपदा विराट् ।

अग्ने त्वं नो ऽअन्तम ऽउत त्राता शिवो भवा वरूथ्यः ॥१॥
अग्ने । त्वम् । नः । अन्तमः । उत । त्राता । शिवः । भव । वरूथ्यः ॥१॥

वसुरग्निर्वसुश्रवा ऽअच्छा नक्षि द्युमत्तमं रयिं दाः ॥२॥
वसुः । अग्निः । वसु॰श्रवाः । अच्छ । नक्षि । द्युमत्॰तमम् । रयिम् । दाः ॥२॥

स नो बोधि श्रुधी हवमुरुष्या णो ऽअघायतः समस्मात् ॥३॥
सः । नः । बोधि । श्रुधि । हवम् । उरुष्य । नः । अघ॰यतः । समस्मात् ॥३॥

तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥४॥ (१६) [८३]
तम् । त्वा । शोचिष्ठ । दीदि॰वः । सुम्नाय । नूनम् । ईमहे । सखि॰भ्यः ॥४॥

# ( २५ )

९ वसूयव आत्रेयाः । अग्निः । अनुष्टुप् ।

अच्छा वो ऽअग्निमवसे देवं गासि स नो वसुः ।
रासत्पुत्र ऽऋषूणामृतावा पर्षति द्विषः ॥१॥
अच्छ । वः । अग्निम् । अवसे । देवम् । गासि । सः । नः । वसुः ॥
रासत् । पुत्रः । ऋषूणाम् । ऋत॰वा । पर्षति । द्विषः ॥१॥

स हि सत्यो यं पूर्वे चिद्देवासश्चिद्यमीधिरे ।
होतारं मन्द्रजिह्वमित्सुदीतिभिर्विभावसुम् ॥२॥
सः । हि । सत्यः । यम् । पूर्वे । चित् । देवासः । चित् । यम् । ईधिरे ॥
होतारम् । मन्द्र॰जिह्वम् । इत् । सुदीति॰भिः । विभा॰वसुम् ॥२॥

स नो धीती वरिष्ठया श्रेष्ठया च सुमत्या ।
अग्ने रायो दिदीहि नः सुवृक्तिभिर्वरेण्य ॥३॥
सः । नः । धीती । वरिष्ठया । श्रेष्ठया । च । सु०मत्या ॥
अग्ने । रायः । दिदीहि । नः । सुवृक्ति०भिः । वरेण्य ॥३॥

अग्निर्देवेषु राजत्यग्निर्मर्त्तेष्वाविशन् ।
अग्निर्नो हव्यवाहनोऽग्निं धीभिः सपर्यत ॥४॥
अग्निः । देवेषु । राजति । अग्निः । मर्त्तेषु । आ०विशन् ॥
अग्निः । नः । हव्य०वाहनः । अग्निम् । धीभिः । सपर्यत ॥४॥

अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् ।
अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥५॥ (१७)
अग्निः । तुविश्रवः२तमम् । तुवि०ब्रह्माणम् । उत्०तमम् ॥
अतूर्तम् । श्रवयत्०पतिम् । पुत्रन् । ददाति । दाशुषे ॥५॥

अग्निर्ददाति सत्पतिं सासाह यो युधा नृभिः ।
अग्निरत्यं रघुष्यदं जेतारमपराजितम् ॥६॥
अग्निः । ददाति । सत्०पतिम् । ससाह ।
यः । युधा । नृ०भिः ॥ अग्निः । अत्यम् ।
रघु०स्यदम् । जेतारम् । अपरा०जितम् ॥६॥

यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।
महिषीव त्वद्रयिस्त्वद्वाजा ऽउदीरते ॥७॥
यत् । वाहिष्ठम् । तत् । अग्नये । बृहत् । अर्च ।
विभावसो इति विभा०वसो ॥ महिषीऽइव ।
त्वत् । रयिः । त्वत् । वाजाः । उत् । ईरते ॥७॥

तव द्युमन्तो ऽअर्चयो ग्रावेवोच्यते बृहत् ।
उतो ते तन्यतुर्यथा स्वानो ऽअर्त त्मना दिवः ॥८॥
तव । द्यु०मन्तः । अर्चयः । ग्रावाऽइव । उच्यते । बृहत् ॥
उतो इति । ते । तन्यतुः । यथा । स्वानः । अर्त । त्मना । दिवः ॥८॥

एवाँ ऽअग्निं वसूयवः सहसानं ववन्दिम ।
स नो विश्वा ऽअति द्विषः पर्षन्नावेव सुक्रतुः ॥९॥ ( १८ ) [ १२ ]
एव । अग्निम् । वसु०यवः । सहसानम् । ववन्दिम ॥
सः । नः । विश्वा । अति । द्विषः । पर्षत् । नावाऽइव । सु०क्रतुः ॥९॥

## ( २६ )

९ वसूयव आत्रेयाः । अग्निः, ९ विश्वे देवाः । गायत्री ।

अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ।
आ देवान्वक्षि यक्षि च ॥१॥
अग्ने । पावक । रोचिषा । मन्द्रया । देव । जिह्वया ॥
आ । देवान् । वक्षि । यक्षि । च ॥१॥

तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम् ।
देवाँ ऽआ वीतये वह ॥२॥
तम् । त्वा । घृतस्नो इति घृत०स्नो । ईमहे । चित्रभानो इति चित्र०भानो ।
स्वः२दृशम् ॥ देवान् । आ । वीतये । वह ॥२॥

वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि ।
अग्ने बृहन्तमध्वरे ॥३॥

वीति॰होत्रम् । त्वा । कवे । द्युम॰न्तम् । सम् । इधीमहि ॥
अग्ने । बृहन्तम् । अध्वरे ॥३॥

अग्ने विश्वेभिरा गहि देवेभिर्हव्यदातये ।
होतारं त्वा वृणीमहे ॥४॥
अग्ने । विश्वे॰भिः । आ । गहि । देवे॰भिः । हव्य॰दातये ॥
होतारम् । त्वा । वृणीमहे ॥४॥

यजमानाय सुन्वत ऽआग्ने सुवीर्यं वह ।
देवैरा सत्सि बर्हिषि ॥५॥ (१९)
यजमानाय । सुन्वते । आ । अग्ने । सु॰वीर्यम् । वह ॥
देवैः । आ । सत्सि । बर्हिषि ॥५॥

समिधानः सहस्रजिदग्ने धर्माणि पुष्यसि ।
देवानां दूत ऽउक्थ्यः ॥६॥
सम्॰इधानः । सहस्र॰जित् । अग्ने । धर्माणि । पुष्यसि ॥
देवानाम् । दूतः । उक्थ्यः ॥६॥

न्यग्निं जातवेदसं होत्रवाहं यविष्ठ्यम् ।
दधाता देवमृत्विजम् ॥७॥
नि । अग्निम् । जात॰वेदसम् । होत्र॰वाहम् । यविष्ठ्यम् ॥
दधात । देवम् । ऋत्विजम् ॥७॥

प्र यज्ञ ऽएत्वानुषगद्या देवव्यचस्तमः ।
स्तृणीत बर्हिरासदे ॥८॥

प्र । यज्ञः । एतु । आनुषक् । अद्य । देवव्यचःऽतमः ॥
स्तृणीत । बर्हिः । आ॰सदे ॥८॥

एदं मरुतो ऽअश्विना मित्रः सीदन्तु वरुणः ।
देवासः सर्वया विशा ॥९॥ (२०) [१०१]
आ । इदम् । मरुतः । अश्विना । मित्रः । सीदन्तु । वरुणः ॥
देवासः । सर्वया । विशा ॥९॥

## (२७)

६ त्रैवृष्णस्त्र्यरुणः, पौरुकुत्सस्त्रसदस्युः, भारतोऽश्वमेधश्च राजानः (अत्रिर्भौम इति केचित् । अग्निः, ६ इन्द्राग्नी । त्रिष्टुप्, ४-६ अनुष्टुप् ।

अनस्वन्ता सत्पतिर्मामहे मे गावा चेतिष्ठो ऽअसुरो मघोनः ।
त्रैवृष्णो ऽअग्ने दशभिः सहस्रैर्वैश्वानर त्र्यरुणश्चिकेत ॥१॥
अनस्वन्ता । सत्॰पतिः । ममहे । मे । गावा ।
चेतिष्ठः । असुरः । मघोनः ॥ त्रैवृष्णः । अग्ने ।
दश॰भिः । सहस्रैः । वैश्वानर । त्रि॰अरुणः । चिकेत ॥१॥

यो मे शता च विंशतिं च गोनां हरी च युक्ता सुधुरा ददाति ।
वैश्वानर सुष्टुतो वावृधानोऽग्ने यच्छ त्र्यरुणाय शर्म ॥२॥
यः । मे । शता । च । विंशतिम् । च । गोनाम् । हरी इति ।
च । युक्ता । सु॰धुरा । ददाति ॥ वैश्वानर । सु॰स्तुतः ।
ववृधानः । अग्ने । यच्छ । त्रि॰अरुणाय । शर्म ॥२॥

एवा ते ऽअग्ने सुमतिं चकानो नविष्ठाय नवमं त्रसदस्युः ।
यो मे गिरस्तुविजातस्य पूर्वीर्युक्तेनाभि त्र्यरुणो गृणाति ॥३॥

एव । ते । अग्ने । सु॰मतिम् । चकानः । नविष्ठाय ।
नवमम् । त्रसदस्युः ॥ यः । मे । गिरः । तुविजातस्य ।
पूर्वीः । युक्तेन । अभि । त्रि॰अरुणः । गृणाति ॥३॥

**यो म ऽइति प्रवोचत्यश्वमेधाय सूरये ।**
**ददद्दृचा सनिं यते ददन्मेधामृतायते ॥४॥**
यः । मे । इति । प्र॰वोचति । अश्व॰मेधाय । सूरये ॥
ददत् । ऋचा । सनिम् । यते । ददत् । मेधाम् । ऋत॰यते ॥४॥

**यस्य मा परुषाः शतमुद्धर्षयन्त्युक्षणः ।**
**अश्वमेधस्य दानाः सोमाइव त्र्याशिरः ॥५॥**
यस्य । मा । परुषाः । शतम् । उत्॰हर्षयन्ति । उक्षणः ॥
अश्व॰मेधस्य । दानाः । सोमाःऽइव । त्रि॰आशिरः ॥५॥

**इन्द्राग्नी शतदाव्यश्वमेधे सुवीर्यम् ।**
**क्षत्रं धारयतं बृहद्दिवि सूर्यमिवाजरम् ॥६॥ ( २१ )** [ १०७ ]
इन्द्राग्नी इति । शत॰दाव्नि । अश्व॰मेधे । सु॰वीर्यम् ॥
क्षत्रम् । धारयतम् । बृहत् । दिवि । सूर्यम्ऽइव । अजरम् ॥६॥

## ( २८ )

**६ विश्ववारात्रेयी । अग्निः । १, ३ त्रिष्टुप्, २ जगती, ४ अनुष्टुप्, ५-६ गायत्री ।**

**समिद्धो ऽअग्निर्दिवि शोचिरश्रेत्प्रत्यङ्ङुषसमुर्विया वि भाति ।**
**एति प्राची विश्ववारा नमोभिर्देवाँ ऽईळाना हविषा घृताची ॥१॥**
सम्॰इद्धः । अग्निः । दिवि । शोचिः । अश्रेत् । प्रत्यङ् ।
उषसम् । उर्विया । वि । भाति ॥ एति । प्राची । विश्व॰वारा ।
नमःऽभिः । देवान् । ईळाना । हविषा । घृताची ॥१॥

**समिध्यमानो ऽअमृतस्य राजसि हविष्कृण्वन्तं सचसे स्वस्तये ।**

**विश्वं स धत्ते द्रविणं यमिन्वस्यातिथ्यमग्ने नि च धत्त ऽइत्पुरः ॥२॥**

सम्०इध्यमानः । अमृतस्य । राजसि । हविः । कृण्वन्तम् ।
सचसे । स्वस्तये ॥ विश्वम् । सः । धत्ते । द्रविणम् । यम् ।
इन्वसि । आतिथ्यम् । अग्ने । नि । च । धत्ते । इत् । पुरः ॥२॥

**अग्ने शर्द्धं महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।**

**सं जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांसि ॥३॥**

अग्ने । शर्द्धं । महते । सौभगाय । तव । द्युम्नानि ।
उत्०तमानि । सन्तु ॥ सम् । जः२पत्यम् । सु०यमम् ।
आ । कृणुष्व । शत्रु०यताम् । अभि । तिष्ठ । महांसि ॥३॥

**समिद्धस्य प्रमहसोऽग्ने वन्दे तव श्रियम् ।**

**वृषभो द्युम्नवाँ ऽअसि समध्वरेष्विध्यसे ॥४॥**

सम्०इद्धस्य । प्र०महसः । अग्ने । वन्दे । तव । श्रियम् ॥
वृषभः । द्युम्न०वान् । असि । सम् । अध्वरेषु । इध्यसे ॥४॥

**समिद्धो ऽअग्न ऽआहुत देवान्यक्षि स्वध्वर ।**

**त्वं हि हव्यवाळसि ॥५॥**

सम्०इद्धः । अग्ने । आ०हुत । देवान् । यक्षि । सु०अध्वर ॥
त्वम् । हि । हव्य०वाट् । असि ॥५॥

**आ जुहोता दुवस्यताग्निं प्रयत्यध्वरे ।**

**वृणीध्वं हव्यवाहनम् ॥६॥ ( २२ )** [ ११३ ]

आ । जुहोत । दुवस्यत । अग्निम् । प्र०यति । अध्वरे ॥
वृणीध्वम् । हव्य०वाहनम् ॥६॥

# ( २९ )

१५ गौरिवीतिः शाक्त्यः । इन्द्रः, ९ (प्रथमपादस्य) उशना वा । त्रिष्टुप् ।

**त्र्य॑र्य॒मा मनु॑षो दे॒वता॑ता॒ त्री रो॑च॒ना दि॒व्या धा॑रयन्त ।**

**अर्च॑न्ति त्वा म॒रुतः॑ पू॒तद॑क्षा॒स्त्वमे॑षा॒मृषि॑रिन्द्रासि॒ धीरः॑ ॥१॥**

त्री । अ॒र्य॒मा । मनु॑षः । दे॒व॰ता॑ता । त्री । रो॒च॒ना । दि॒व्या ।
धा॒र॒य॒न्त ॥ अर्च॑न्ति । त्वा॒ । म॒रुतः॑ । पू॒त॰द॑क्षाः । त्वम् ।
ए॒षा॒म् । ऋषिः॑ । इ॒न्द्र॒ । अ॒सि॒ । धीरः॑ ॥१॥

**अनु॒ यदीं॑ म॒रुतो॑ मन्दसा॒नमार्च॒न्निन्द्रं॑ पपि॒वांसं॑ सु॒तस्य॑ ।**

**आद॑त्त॒ वज्र॑म॒भि यदहिं॒ हन्न॒पो य॒ह्वीर॑सृज॒त्सर्त्त॒वा ऽउ॑ ॥२॥**

अनु॑ । यत् । ईम् । म॒रुतः॑ । म॒न्द॒सा॒नम् । आर्च॑न् । इन्द्र॑म् ।
प॒पि॒॰वांस॑म् । सु॒तस्य॑ ॥ आ । अ॒द॒त्त॒ । वज्र॑म् । अ॒भि । यत् ।
अहि॑म् । हन् । अ॒पः । य॒ह्वीः । अ॒सृ॒ज॒त् । सर्त्त॑वै । ऊँ इति॑ ॥२॥

**उ॒त ब्र॒ह्माणो॑ मरुतो मे ऽअ॒स्येन्द्रः॒ सोम॑स्य॒ सुषु॑तस्य पेयाः ।**

**तद्धि ह॒व्यं मनु॑षे॒ गा ऽअवि॑न्द॒दह॒न्नहिं॑ पपि॒वाँ ऽइन्द्रो॑ ऽअस्य ॥३॥**

उ॒त । ब्र॒ह्मा॒णः॒ । म॒रु॒तः॒ । मे॒ । अ॒स्य । इन्द्रः॑ । सोम॑स्य ।
सु॰सु॑तस्य । पे॒याः॒ ॥ तत् । हि । ह॒व्यम् । मनु॑षे । गाः ।
अवि॑न्दत् । अह॑न् । अहि॑म् । प॒पि॒॰वान् । इन्द्रः॑ । अ॒स्य॒ ॥३॥

**आद्रोद॑सी वि॒तरं वि ष्क॑भायत्संवि॒व्या॒नश्चि॑द्भि॒यसे॑ मृ॒गं कः॑ ।**

**जिग॑र्ति॒मिन्द्रो॑ ऽअप॒जर्गु॑रा॒णः प्रति॑ श्व॒सन्त॒मव॑ दा॒नवं॒ हन् ॥४॥**

आत् । रोद॑सी॒ इति॑ । वि॒॰त॒रम् । वि । स्क॒भा॒य॒त् । स॒म्॰वि॒व्या॒नः ।
चि॒त् । भ॒यसे॑ । मृ॒गम् । क॒रि॒ति॑ कः ॥ जिग॑र्ति॒म् । इन्द्रः॑ ।
अ॒प॒॰जर्गु॑राणः । प्रति॑ । श्व॒सन्त॑म् । अव॑ । दा॒न॒वम् । ह॒न्निति॑ हन् ॥४॥

**अध क्रत्वा मघवन्तुभ्यं देवा ऽअनु विश्वे ऽअददुः सोमपेयम् ।**
**यत्सूर्यस्य हरितः पतन्तीः पुरः सतीरुपरा ऽएतशे कः ॥५॥ ( २३ )**
अध । क्रत्वा । मघ०वन् । तुभ्यम् । देवाः । अनु । विश्वे ।
अददुः । सोम०पेयम् ॥ यत् । सूर्यस्य । हरितः । पतन्तीः ।
पुरः । सतीः । उपराः । एतशे । करिति कः ॥५॥

**नव यदस्य नवतिं च भोगान्त्साकं वज्रेण मघवा विवृश्चत् ।**
**अर्चन्तीन्द्रं मरुतः सधस्थे त्रैष्टुभेन वचसा बाधत द्याम् ॥६॥**
नव । यत् । अस्य । नवतिम् । च । भोगान् । साकम् ।
वज्रेण । मघ०वा । वि०वृश्चत् ॥ अर्चन्ति । इन्द्रम् । मरुतः ।
सध०स्थे । त्रैस्तुभेन । वचसा । बाधत । द्याम् ॥६॥

**सखा सख्ये ऽअपचत्तूयमग्निरस्य क्रत्वा महिषा त्री शतानि ।**
**त्री साकमिन्द्रो मनुषः सरांसि सुतं पिबद्वृत्रहत्याय सोमम् ॥७॥**
सखा । सख्ये । अपचत् । तूयम् । अग्निः । अस्य । क्रत्वा ।
महिषा । त्री । शतानि ॥ त्री । साकम् । इन्द्रः । मनुषः ।
सरांसि । सुतम् । पिबत् । वृत्र०हत्याय । सोमम् ॥७॥

**त्री यच्छता महिषाणामघो मास्त्री सरांसि मघवा सोम्यापाः ।**
**कारं न विश्वे ऽअह्वन्त देवा भरमिन्द्राय यदहिं जघान ॥८॥**
त्री । यत् । शता । महिषाणाम् । अघः । माः । त्री । सरांसि ।
मघ०वा । सोम्या । अपाः ॥ कारम् । न । विश्वे । अह्वन्त ।
देवाः । भरम् । इन्द्राय । यत् । अहिम् । जघान ॥८॥

**उशना यत्सहस्यैरयातं गृहमिन्द्र जूजुवानेभिरश्वैः ।**
**वन्वानो ऽअत्र सरथं ययाथ कुत्सेन देवैरवनोर्ह शुष्णम् ॥९॥**

उशना । यत् । सहस्यैः । अयातम् । गृहम् । इन्द्र ।
जूजुवानेभिः । अश्वैः ॥ वन्वानः । अत्र । स०रथम् ।
ययाथ । कुत्सेन । देवैः । अवनोः । ह । शुष्णम् ॥९॥

प्रान्यच्चक्रमवृहः सूर्यस्य कुत्सायान्यद्वरिवो यातवेऽकः ।
अनासो दस्यूँरमृणो वधेन नि दुर्योण ऽआवृणङ्मृध्रवाचः ॥१०॥ ( २४ )
प्र । अन्यत् । चक्रम् । अवृहः । सूर्यस्य । कुत्साय । अन्यत् ।
वरिवः । यातवे । अकरित्यकः ॥ अनासः । दस्यून् । अमृणः ।
वधेन । नि । दुर्योणे । अवृणक् । मृध्र०वाचः ॥१०॥

स्तोमासस्त्वा गौरिवीतेरवर्द्धन्नरन्धयो वैदथिनाय पिप्रुम् ।
आ त्वामृजिश्वा सख्याय चक्रे पचन्पक्तीरपिबः सोममस्य ॥११॥
स्तोमासः । त्वा । गौरि०वीतेः । अवर्द्धन् । अरन्धयः ।
वैदथिनाय । पिप्रुम् ॥ आ । त्वाम् । ऋजिश्वा । सख्याय ।
चक्रे । पचन् । पक्तीः । अपिबः । सोमम् । अस्य ॥११॥

नवग्वासः सुतसोमास ऽइन्द्रं दशग्वासो ऽअभ्यर्चन्त्यर्कैः ।
गव्यं चिदूर्वमपिधानवन्तं तं चिन्नरः शशमाना ऽअप व्रन् ॥१२॥
नव०ग्वासः । सुत०सोमासः । इन्द्रम् । दश०ग्वासः । अभि ।
अर्चन्ति । अर्कैः ॥ गव्यम् । चित् । ऊर्वम् । अपिधान०वन्तम् ।
तम् । चित् । नरः । शशमानाः । अप । व्रन् ॥१२॥

कथो नु ते परि चराणि विद्वान्वीर्या मघवन्या चकर्थ ।
या चो नु नव्या कृणवः शविष्ठ प्रेदु ता ते विदथेषु ब्रवाम ॥१३॥
कथो इति । नु । ते । परि । चराणि । विद्वान् । वीर्या । मघ०वन् ।
या । चकर्थ ॥ या । चो इति । नु । नव्या । कृणवः । शविष्ठ ।
प्र । इत् । ऊँ इति । ता । ते । विदथेषु । ब्रवाम ॥१३॥

एता विश्वा चकृवाँ ऽइन्द्र भूर्यपरीतो जनुषा वीर्येण ।
या चिन्नु वज्रिन्कृणवो दधृष्वान्न ते वर्ता तविष्या ऽअस्ति तस्याः ॥१४॥
एता । विश्वा । चकृ०वान् । इन्द्र । भूरि । अपरि०इतः । जनुषा ।
वीर्येण ॥ या । चित् । नु । वज्रिन् । कृणवः । दधृष्वान् ।
न । ते । वर्ता । तविष्याः । अस्ति । तस्याः ॥१४॥

इन्द्र ब्रह्म क्रियमाणा जुषस्व या ते शविष्ठ नव्या ऽअकर्म ।
वस्त्रेव भद्रा सुकृता वसूयू रथं न धीरः स्वपा ऽअतक्षम् ॥१५॥ ( २५ ) [ १२८ ]
इन्द्र । ब्रह्म । क्रियमाणा । जुषस्व । या । ते । शविष्ठ ।
नव्याः । अकर्म ॥ वस्त्राऽइव । भद्रा । सु०कृता । वसु०युः ।
रथम् । न । धीरः । सु०अपाः । अतक्षम् ॥१५॥

## ( ३० )

१५ बभ्रुरात्रेयः । इन्द्रः, १२-१५ ऋणचयेन्द्रौ । त्रिष्टुप् ।

क्व१ स्य वीरः को ऽअपश्यदिन्द्रं सुखरथमीयमानं हरिभ्याम् ।
यो राया वज्री सुतसोममिच्छन्तदोको गन्ता पुरुहूत ऽऊती ॥१॥
क्व । स्यः । वीरः । कः । अपश्यत् । इन्द्रम् । सुख०रथम् ।
ईयमानम् । हरि०भ्याम् ॥ यः । राया । वज्री । सुत०सोमम् ।
इच्छन् । तत् । ओकः । गन्ता । पुरु०हूतः । ऊती ॥१॥

अवाचचक्षं पदमस्य सस्वरुग्रं निधातुरन्वायमिच्छन् ।
अपृच्छमन्याँ ऽउत ते म ऽआहुरिन्द्रं नरो बुबुधाना ऽअशेम ॥२॥
अव । अचचक्षम् । पदम् । अस्य । सस्वः । उग्रम् । नि०धातुः ।
अनु । आयम् । इच्छन् ॥ अपृच्छम् । अन्यान् । उत । ते ।
मे । आहुः । इन्द्रम् । नरः । बुबुधानाः । अशेम ॥२॥

प्र नु वयं सुते या ते कृतानीन्द्र ब्रवाम यानि नो जुजोषः ।
वेददविद्वाञ्छृणवच्च विद्वान्वहतेऽयं मघवा सर्वसेनः ॥३॥
प्र । नु । वयम् । सुते । या । ते । कृतानि । इन्द्र । ब्रवाम ।
यानि । नः । जुजोषः ॥ वेदत् । अविद्वान् । शृणवत् । च ।
विद्वान् । वहते । अयम् । मघ०वा । सर्व०सेनः ॥३॥

स्थिरं मनश्चकृषे जात ऽइन्द्र वेषीदेको युधये भूयसश्चित् ।
अश्मानं चिच्छवसा दिद्युतो वि विदो गवामूर्वमुस्रियाणाम् ॥४॥
स्थिरम् । मनः । चकृषे । जातः । इन्द्र । वेषि । इत् । एकः ।
युधये । भूयसः । चित् ॥ अश्मानम् । चित् । शवसा ।
दिद्युतः । वि । विदः । गवाम् । ऊर्वम् । उस्रियाणाम् ॥४॥

परो यत्त्वं परम ऽआजनिष्ठाः परावति श्रुत्यं नाम बिभ्रत् ।
अतश्चिदिन्द्रादभयन्त देवा विश्वा ऽअपो ऽअजयद्दासपत्नीः ॥५॥ ( २६ )
परः । यत् । त्वम् । परमः । आ०जनिष्ठाः । परा०वति ।
श्रुत्यम् । नाम । बिभ्रत् ॥ अतः । चित् । इन्द्रात् । अभयन्त ।
देवाः । विश्वाः । अपः । अजयत् । दास०पत्नीः ॥५॥

तुभ्येदेते मरुतः सुशेवा ऽअर्चन्त्यर्कं सुन्वन्त्यन्धः ।
अहिमोहानमप ऽआशयानं प्र मायाभिर्मायिनं सक्षदिन्द्रः ॥६॥
तुभ्य । इत् । एते । मरुतः । सु०शेवाः । अर्चन्ति ।
अर्कम् । सुन्वन्ति । अन्धः ॥ अहिम् । ओहानम् । अपः ।
आ०शयानम् । प्र । माया०भिः । मायिनम् । सक्षत् । इन्द्रः ॥६॥

वि षू मृधो जनुषा दानमिन्वन्नहन्गवा मघवन्त्संचकानः ।
अत्रा दासस्य नमुचेः शिरो यदवर्तयो मनवे गातुमिच्छन् ॥७॥

वि । सु । मृधः । जनुषा । दानम् । इन्वन् । अहन् । गवा ।
मघ०वन् । सम्०चकानः ॥ अत्र । दासस्य । नमुचेः । शिरः ।
यत् । अवर्तयः । मनवे । गातुम् । इच्छन् ॥७॥

**युजं हि मामकृथा ऽआदिदिन्द्र शिरो दासस्य नमुचेर्मथायन् ।**
**अश्मानं चित्स्वर्यं१ वर्त्तमानं प्र चक्रियेव रोदसी मरुद्भ्यः ॥८॥**
युजम् । हि । माम् । अकृथाः । आत् । इत् । इन्द्र । शिरः ।
दासस्य । नमुचेः । मथायन् ॥ अश्मानम् । चित् । स्वर्यम् ।
वर्त्तमानम् । प्र । चक्रियाऽइव । रोदसी इति । मरुत्०भ्यः ॥८॥

**स्त्रियो हि दास ऽआयुधानि चक्रे किं मा करन्नबला ऽअस्य सेनाः ।**
**अन्तर्ह्यख्यदुभे ऽअस्य धेने ऽअथोप प्रैद्युधये दस्युमिन्द्रः ॥९॥**
स्त्रियः । हि । दासः । आयुधानि । चक्रे । किम् । मा । करन् ।
अबलाः । अस्य । सेनाः ॥ अन्तः । हि । अख्यत् । उभे इति ।
अस्य । धेने इति । अथ । उप । प्र । ऐत् । युधये । दस्युम् । इन्द्रः ॥९॥

**समत्र गावोऽभितोऽनवन्तेहेह वत्सैर्वियुता यदासन् ।**
**सं ता ऽइन्द्रो ऽअसृजदस्य शाकैर्यदीं सोमासः सुषुता ऽअमन्दन् ॥१०॥ ( २७ )**
सम् । अत्र । गावः । अभितः । अनवन्त । इह०इह । वत्सैः ।
वि०युताः । यत् । आसन् ॥ सम् । ताः । इन्द्रः । असृजत् ।
अस्य । शाकैः । यत् । ईम् । सोमासः । सु०सुताः । अमन्दन् ॥१०॥

**यदीं सोमा बभ्रुधूता ऽअमन्दन्नरोरवीद्वृषभः सादनेषु ।**
**पुरंदरः पपिवाँ ऽइन्द्रो ऽअस्य पुनर्गवामददादुस्रियाणाम् ॥११॥**
यत् । ईम् । सोमाः । बभ्रु०धूताः । अमन्दन् । अरोरवीत् ।
वृषभः । सदनेषु ॥ पुरम्०दरः । पपि०वान् । इन्द्रः ।
अस्य । पुनः । गवाम् । अददात् । उस्रियाणाम् ॥११॥

भद्रमिदं रुशमा ऽअग्ने ऽअक्रन्गवां चत्वारि ददतः सहस्रा ।
ऋणंचयस्य प्रयता मघानि प्रत्यग्रभीष्म नृतमस्य नृणाम् ॥१२॥
भद्रम् । इदम् । रुशमाः । अग्ने । अक्रन् । गवाम् ।
चत्वारि । ददतः । सहस्रा ॥ ऋणम्०चयस्य । प्र०यता ।
मघानि । प्रति । अग्रभीष्म । नृ०तमस्य । नृणाम् ॥१२॥

सुपेशसं माव सृजन्त्यस्तं गवां सहस्रै रुशमासो ऽअग्ने ।
तीव्रा ऽइन्द्रममन्दुः सुतासोऽक्तोर्व्युष्टौ परितक्म्यायाः ॥१३॥
सु०पेशसम् । मा । अव । सृजन्ति । अस्तम् । गवाम् ।
सहस्रैः । रुशमासः । अग्ने ॥ तीव्राः । इन्द्रम् । अममन्दुः ।
सुतासः । अक्तोः । वि०उष्टौ । परि०तक्म्यायाः ॥१३॥

औच्छत्सा रात्री परितक्म्या याँ ऽऋणंचये राजनि रुशमानाम् ।
अत्यो न वाजी रघुरज्यमानो बभ्रुश्चत्वार्यसनत्सहस्रा ॥१४॥
औच्छत् । सा । रात्री । परि०तक्म्या । या । ऋणम्०चये ।
राजनि । रुशमानाम् ॥ अत्यः । न । वाजी । रघुः ।
अज्यमानः । बभ्रुः । चत्वारि । असनत् । सहस्रा ॥१४॥

चतुःसहस्रं गव्यस्य पश्वः प्रत्यग्रभीष्म रुशमेष्वग्ने ।
घर्मश्चित्तप्तः प्रवृजे य ऽआसीदयस्मयस्तम्वादाम विप्राः ॥१५॥ ( २८ ) [ १४३ ]
चतुः०सहस्रम् । गव्यस्य । पश्वः । प्रति । अग्रभीष्म ।
रुशमेषु । अग्ने ॥ घर्मः । चित् । तप्तः । प्र०वृजे । यः ।
आसीत् । अयस्मयः । तम् । ऊँ इति । आदाम । विप्राः ॥१५॥

# ( ३१ )

१३ अवस्युरात्रेयः । इन्द्रः, ८ तृतीयपादस्य कुत्सो वा चतुर्थपादस्य उशना वा, ९ इन्द्रकुत्सौ । त्रिष्टुप् ।

इन्द्रो रथाय प्रवतं कृणोति यमध्यस्थान्मघवा वाजयन्तम् ।
यूथेव पश्वो व्युनोति गोपा ऽअरिष्टो याति प्रथमः सिषासन् ॥१॥
इन्द्रः । रथाय । प्र०वतम् । कृणोति । यम् । अधि०अस्थात् ।
मघ०वा । वाज०यन्तम् ॥ यूथाऽइव । पश्वः । वि । उनोति ।
गोपाः । अरिष्टः । याति । प्रथमः । सिसासन् ॥१॥

आ प्र द्रव हरिवो मा वि वेनः पिशङ्गराते ऽअभि नः सचस्व ।
नहि त्वदिन्द्र वस्यो ऽअन्यदस्त्यमेनाँश्चिज्जनिवतश्चकर्थ ॥२॥
आ । प्र । द्रव । हरि०वः । मा । वि । वेनः । पिशङ्ग०राते ।
अभि । नः । सचस्व ॥ नहि । त्वत् । इन्द्र । वस्यः । अन्यत् ।
अस्ति । अमेमान् । चित् । जनि०वतः । चकर्थ ॥२॥

उद्यत्सहः सहस ऽआजनिष्ट देदिष्ट ऽइन्द्र ऽइन्द्रियाणि विश्वा ।
प्राचोदयत्सुदुघा वव्रे ऽअन्तर्वि ज्योतिषा संववृत्वत्तमोऽवः ॥३॥
उत् । यत् । सहः । सहसः । आ । अजनिष्ट । देदिष्टे । इन्द्रः ।
इन्द्रियाणि । विश्वा ॥ प्र । अचोद यत् । सु०दुघाः । वव्रे ।
अन्तः । वि । ज्योतिषा । सम्०ववृत्वत् । तमः । अवरित्यवः ॥३॥

अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ।
ब्रह्माण ऽइन्द्रं महयन्तो ऽअर्कैरवर्द्धयन्नहये हन्तवा ऽउ ॥४॥
अनवः । ते । रथम् । अश्वाय । तक्षन् । त्वष्टा । वज्रम् ।
पुरु०हूत । द्यु०मन्तम् ॥ ब्रह्माणः । इन्द्रम् । महयन्तः ।
अर्कैः । अवर्धयन् । अहये । हन्तवै । ऊँ इति ॥४॥

**वृष्णे यत्ते वृषणो ऽअर्कमर्चानिन्द्र ग्रावाणो ऽअदितिः सजोषाः ।**
**अनश्वासो ये पवयोऽरथा ऽइन्द्रेषिता ऽअभ्यवर्तन्त दस्यून् ॥५॥ ( २९ )**

वृष्णे । यत् । ते । वृषणः । अर्कम् । अर्चान् । इन्द्र ।
ग्रावाणः । अदितिः । स०जोषाः ॥ अनश्वासः । ये । पवयः ।
अरथाः । इन्द्र०इषिताः । अभि । अवर्तन्त । दस्यून् ॥५॥

**प्र ते पूर्वाणि करणानि वोचं प्र नूतना मघवन्या चकर्थ ।**
**शक्तीवो यद्विभरा रोदसी ऽउभे जयन्नपो मनवे दानुचित्राः ॥६॥**

प्र । ते । पूर्वाणि । करणानि । वोचम् । प्र । नूतना ।
मघ०वन् । या । चकर्थ ॥ शक्ति०वः । यत् । वि०भराः ।
रोदसी इति । उभे इति । जयन् । अपः । मनवे । दानु०चित्राः ॥६॥

**तदिन्नु ते करणं दस्म विप्राहिं यद्घ्नन्नोजो ऽअत्रामिमीथाः ।**
**शुष्णस्य चित्परि माया ऽअगृभ्णाः प्रपित्वं यन्नप दस्यूँरसेधः ॥७॥**

तत् । इत् । नु । ते । करणम् । दस्म । विप्र । अहिम् । यत् ।
घ्नन् । ओजः । अत्र । अमिमीथाः ॥ शुष्णस्य । चित् । परि ।
मायाः । अगृभ्णाः । प्र०पित्वम् । यन् । अप । दस्यून् । असेधः ॥७॥

**त्वमपो यदवे तुर्वशायारमयः सुदुघाः पार ऽइन्द्र ।**
**उग्रमयातमवहो ह कुत्सं सं ह यद्वामुशनारन्त देवाः ॥८॥**

त्वम् । अपः । यदवे । तुर्वशाय । अरमयः । सु०दुघाः ।
पारः । इन्द्र ॥ उग्रम् । अयातम् । अवहः । ह । कुत्सम् ।
सम् । ह । यत् । वाम् । उशना । अरन्त । देवाः ॥८॥

**इन्द्राकुत्सा वहमाना रथेना वामत्या ऽअपि कर्णे वहन्तु ।**
**निः षीमद्भ्यो धमथो निः षधस्थान्मघोनो हृदो वरथस्तमांसि ॥९॥**

इन्द्राकुत्सा । वहमाना । रथेन । आ । वाम् । अत्याः । अपि ।
कर्णे । वहन्तु ॥ निः । सीम् । अत्०भ्यः । धमथः । निः ।
सधऽस्थात् । मघोनः । हृदः । वरथः । तमांसि ॥९॥

**वातस्य युक्तान्त्सुयुजश्चिदश्वान्कविश्चिदेषो ऽअजगन्नवस्युः ।**
**विश्वे ते ऽअत्र मरुतः सखाय ऽइन्द्र ब्रह्माणि तविषीमवर्द्धन् ॥१०॥ ( ३० )**
वातस्य । युक्तान् । सु०युजः । चित् । अश्वान् । कविः ।
चित् । एषः । अजगन् । अवस्युः ॥ विश्वे । ते । अत्र ।
मरुतः । सखायः । इन्द्र । ब्रह्माणि । तविषीम् । अवर्द्धन् ॥१०॥

**सूरश्चिद्रथं परितक्म्यायां पूर्वं करदुपरं जूजुवांसम् ।**
**भरच्चक्रमेतशः सं रिणाति पुरो दधत्सनिष्यति क्रतुं नः ॥११॥**
सूरः । चित् । रथम् । परि०तक्म्यायाम् । पूर्वम् । करत् ।
उपरम् । जूजु०वांसम् ॥ भरत् । चक्रम् । एतशः । सम् ।
रिणाति । पुरः । दधत् । सनिष्यति । क्रतुम् । नः ॥११॥

**आयं जना ऽअभिचक्षे जगामेन्द्रः सखायं सुतसोममिच्छन् ।**
**वदन्ग्रावाव वेदिं भ्रियाते यस्य जीरमध्वर्यवश्चरन्ति ॥१२॥**
आ । अयम् । जनाः । अभि०चक्षे । जगाम । इन्द्रः ।
सखायम् । सुत०सोमम् । इच्छन् ॥ वदन् । ग्रावा । अव ।
वेदिम् । भ्रियाते । यस्य । जीरम् । अध्वर्यवः । चरन्ति ॥१२॥

**ये चाकनन्त चाकनन्त नू ते मर्ता ऽअमृत मो ते ऽअंह ऽआरन् ।**
**वावन्धि यज्यूँरुत तेषु धेह्योजो जनेषु येषु ते स्याम ॥१३॥ ( ३१ ) [ १५६ ]**
ये । चाकनन्त । चाकनन्त । नु । ते । मर्ताः । अमृत ।
मो इति । ते । अंहः । आ । अरन् ॥ ववन्धि । यज्यून् ।
उत । तेषु । धेहि । ओजः । जनेषु । येषु । ते । स्याम ॥१३॥

# ( ३२ )

१२ गातुरात्रेयः । इन्द्रः । त्रिष्टुप् ।

**अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ ऽअरम्णाः ।**
**महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा ऽअव दानवं हन् ॥१॥**

अदर्दः । उत्सम् । असृजः । वि । खानि । त्वम् । अर्णवान् ।
बद्बधानान् । अरम्णाः ॥ महान्तम् । इन्द्र । पर्वतम् । वि । यत् ।
वरिति वः । सृजः । वि । धाराः । अव । दानवम् । हन्निति हन् ॥१॥

**त्वमुत्साँ ऽऋतुभिर्बद्बधानाँ ऽअरंह ऽऊधः पर्वतस्य वज्रिन् ।**
**अहिं चिदुग्र प्रयुतं शयानं जघन्वाँ ऽइन्द्र तविषीमधत्थाः ॥२॥**

त्वम् । उत्सान् । ऋतु०भिः । बद्बधानान् । अरंहः । ऊधः ।
पर्वतस्य । वज्रिन् ॥ अहिम् । चित् । उग्र । प्र०युतम् ।
शयानम् । जघन्वान् । इन्द्र । तविषीम् । अधत्थाः ॥२॥

**त्यस्य चिन्महतो निर्मृगस्य वधर्जघान तविषीभिरिन्द्रः ।**
**य ऽएक ऽइदप्रतिर्मन्यमान ऽआदस्मादन्यो ऽअजनिष्ट तव्यान् ॥३॥**

त्यस्य । चित् । महतः । निः । मृगस्य । वधः । जघान ।
तविषीभिः । इन्द्रः ॥ यः । एकः । इत् । अप्रतिः ।
मन्यमानः । आत् । अस्मात् । अन्यः । अजनिष्ट । तव्यान् ॥३॥

**त्यं चिदेषां स्वधया मदन्तं मिहो नपातं सुवृधं तमोगाम् ।**
**वृषप्रभर्मा दानवस्य भामं वज्रेण वज्री नि जघान शुष्णम् ॥४॥**

त्यम् । चित् । एषाम् । स्वधया । मदन्तम् । मिहः । नपातम् ।
सु०वृधम् । तमः२गाम् ॥ वृष०प्रभर्मा । दानवस्य । भामम् ।
वज्रेण । वज्री । नि । जघान । शुष्णम् ॥४॥

**त्वं चिदस्य क्रतुभिर्निषत्तममर्मणो विददिदस्य मर्म ।**
**यदीं सुक्षत्र प्रभृता मदस्य युयुत्सन्तं तमसि हर्म्ये धाः ॥५॥**
त्यम् । चित् । अस्य । क्रतु०भिः । नि०सत्तम् । अमर्मणः ।
विदत् । इत् । अस्य । मर्म ॥ यत् । ईम् । सु०क्षत्र ।
प्र०भृता । मदस्य । युयुत्सन्तम् । तमसि । हर्म्ये । धाः ॥५॥

**त्वं चिदित्था कत्पयं शयानमसूर्ये तमसि वावृधानम् ।**
**तं चिन्मन्दानो वृषभः सुतस्योच्चैरिन्द्रो ऽअपगूर्या जघान ॥६॥ ( ३२ )**
त्यम् । चित् । इत्था । कत्पयम् । शयानम् । असूर्ये ।
तमसि । ववृधानम् ॥ तम् । चित् । मन्दानः । वृषभः ।
सुतस्य । उच्चैः । इन्द्रः । अप०गूर्य । जघान ॥६॥

**उद्यदिन्द्रो महते दानवाय वधर्यमिष्ट सहो ऽअप्रतीतम् ।**
**यदीं वज्रस्य प्रभृतौ ददाभ विश्वस्य जन्तोरधमं चकार ॥७॥**
उत् । यत् । इन्द्रः । महते । दानवाय । वधः । यमिष्ट ।
सहः । अप्रति०इतम् ॥ यत् । ईम् । वज्रस्य । प्र०भृतौ ।
ददाभ । विश्वस्य । जन्तोः । अधमम् । चकार ॥७॥

**त्वं चिदर्णं मधुपं शयानमसिन्वं वव्रं मह्यादुग्रः ।**
**अपादमत्रं महता वधेन नि दुर्योण ऽआवृणङ्मृध्रवाचम् ॥८॥**
त्यम् । चित् । अर्णम् । मधु०पम् । शयानम् । असिन्वम् ।
वव्रम् । महि । आदत् । उग्रः ॥ अपादम् । अत्रम् ।
महता । वधेन । नि । दुर्योणे । अवृणक् । मृध्र०वाचम् ॥८॥

**को ऽअस्य शुष्मं तविषीं वरात ऽएको धना भरते ऽअप्रतीतः ।**
**इमे चिदस्य ज्रयसो नु देवी ऽइन्द्रस्यौजसो भियसा जिहाते ॥९॥**

कः । अस्य । शुष्मम् । तविषीम् । वराते । एकः । धना ।
भरते । अप्रतिऽइतः ॥ इमे इति । चित् । अस्य । ज्रयसः ।
नु । देवी इति । इन्द्रस्य । ओजसः । भियसा । जिहाते इति ॥९॥

**न्यस्मै देवी स्वधितिर्जिहीत ऽइन्द्राय गातुरुशतीव येमे ।**
**सं यदोजो युवते विश्वमाभिरनु स्वधाव्ने क्षितयो नमन्त ॥१०॥**
नि । अस्मै । देवी । स्व॰धितिः । जिहीते । इन्द्राय । गातुः ।
उशतीऽइव । येमे ॥ सम् । यत् । ओजः । युवते । विश्वम् ।
आभिः । अनु । स्वधा॰व्ने । क्षितयः । नमन्त ॥१०॥

**एकं नु त्वा सत्पतिं पाञ्चजन्यं जातं शृणोमि यशसं जनेषु ।**
**तं मे जगृभ्र ऽआशसो नविष्ठं दोषा वस्तोर्हवमानास ऽइन्द्रम् ॥११॥**
एकम् । नु । त्वा । सत्॰पतिम् । पाञ्च॰जन्यम् । जातम् ।
शृणोमि । यशसम् । जनेषु ॥ तम् । मे । जगृभ्रे । आ॰शसः ।
नविष्ठम् । दोषा । वस्तोः । हवमानासः । इन्द्रम् ॥११॥

**एवा हि त्वामृतुथा यातयन्तं मघा विप्रेभ्यो ददतं शृणोमि ।**
**किं ते ब्रह्माणो गृहते सखायो ये त्वाया निदधुः काममिन्द्र ॥१२॥ ( ३३ ) [ १६८ ]**
एव । हि । त्वाम् । ऋतु॰था । यातयन्तम् । मघा । विप्रेभ्यः ।
ददतम् । शृणोमि ॥ किम् । ते । ब्रह्माणः । गृहते ।
सखायः । ये । त्वा॰या । नि॰दधुः । कामम् । इन्द्र ॥१२॥

**॥ इति चतुर्थाष्टके प्रथमोऽध्यायः ॥ १ ॥**

# प्रथमाध्यायस्य मन्त्रवर्गानुक्रमणी



**॥ इति शाङ्खायनसंहितायां चतुर्थाष्टके प्रथमोऽध्यायः ॥**
**( प्रथमाध्याये वर्गाः ३३, सूक्तानि २४, ऋचः १६८ )**

# ॥ चतुर्थाष्टके द्वितीयोऽध्यायः॥

**अथ द्वितीयोऽध्यायः॥२॥ वर्गाः १-२८ ]** **[ पञ्चममण्डले सूक्तानि ३३-४९**

**( ३३ )** [ अथ तृतीयोऽनुवाकः॥३॥सू. ३३-४४

१० प्राजापत्यः संवरणः । इन्द्रः । त्रिष्टुप् ।

**महिं महे तवसें दीध्ये नॄनिन्द्रायेत्था तवसे ऽअतंव्यान् ।**
**यो ऽअंस्मै सुमतिं वाजंसातौ स्तुतो जनें समर्यंश्चिकेतं ॥१॥**

महिं । महे । तवसें । दीध्ये । नॄन् । इन्द्राय । इत्था ।
तवसें । अतंव्यान् ॥ यः । अस्मै । सुऽमतिम् ।
वाजंऽसातौ । स्तुतः । जनें । सऽमर्यः । चिकेतं ॥१॥

**स त्वं नं ऽइन्द्र धियसानो ऽअर्कैर्हरींणां वृषन्योक्त्रमश्रेः ।**
**या ऽइत्था मंघवन्ननु जोषं वक्षों ऽअभि प्रार्यः संक्षि जनांन् ॥२॥**

सः । त्वम् । नः । इन्द्र । धियसानः । अर्कैः । हरींणाम् ।
वृषन् । योक्त्रम् । अश्रेः ॥ याः । इत्था । मघऽवन् । अनुं ।
जोषंम् । वक्षः । अभि । प्र । अर्यः । सक्षि । जनांन् ॥२॥

**न ते तं ऽइन्द्राभ्यस्मदृष्वायुक्तासो ऽअब्रह्मता यदसंन् ।**
**तिष्ठा रथमधि तं वंज्रहस्ता रश्मिं देंव यमसे स्वश्वंः ॥३॥**

न । ते । ते । इन्द्र । अभि । अस्मत् । ऋष्व । अयुंक्तासः ।
अब्रह्मतां । यत् । असंन् ॥ तिष्ठ । रथंम् । अधि । तम् ।
वज्रऽहस्त । आ । रश्मिम् । देव । यमसे । सुऽअश्वंः ॥३॥

**पुरू यत्तं ऽइन्द्र सन्त्युक्था गवें चकर्थोर्वरासु युध्यंन् ।**
**ततक्षे सूर्याय चिदोकंसि स्वे वृषा समत्सु दासस्य नामं चित् ॥४॥**

पुरु । यत् । ते । इन्द्र । सन्ति । उक्था । गवे । चकर्थ ।
उर्वरासु । युध्यन् ॥ ततक्षे । सूर्याय । चित् । ओकसि ।
स्वे । वृषा । समत्ऽसु । दासस्य । नाम । चित् ॥४॥

**वयं ते त ऽइन्द्र ये च नरः शर्द्धो जज्ञाना याताश्च रथाः ।**
**आस्माञ्जगम्यादहिशुष्म सत्वा भगो न हव्यः प्रभृथेषु चारुः ॥५॥ ( १ )**
वयम् । ते । ते । इन्द्र । ये । च । नरः । शर्द्धः । जज्ञानाः ।
याताः । च । रथाः ॥ आ । अस्मान् । जगम्यात् । अहिऽशुष्म ।
सत्वा । भगः । न । हव्यः । प्रऽभृथेषु । चारुः ॥५॥

**पपृक्षेण्यमिन्द्र त्वे ह्योजो नृम्णानि च नृतमानो ऽअमर्त्तः ।**
**स न ऽएनीं वसवानो रयिं दाः प्रार्यः स्तुषे तुविमघस्य दानम् ॥६॥**
पपृक्षेण्यम् । इन्द्र । त्वे इति । हि । ओजः । नृम्णानि । च ।
नृतमानः । अमर्त्तः ॥ सः । नः । एनीम् । वसवानः । रयिम् ।
दाः । प्र । अर्यः । स्तुषे । तुविऽमघस्य । दानम् ॥६॥

**एवा न ऽइन्द्रोतिभिरव पाहि गृणतः शूर कारून् ।**
**उत त्वचं ददतो वाजसातौ पिप्रीहि मध्वः सुषुतस्य चारोः ॥७॥**
एव । नः । इन्द्र । ऊतिऽभिः । अव । पाहि ।
गृणतः । शूर । कारून् ॥ उत । त्वचम् । ददतः ।
वाजऽसातौ । पिप्रीहि । मध्वः । सुऽसुतस्य । चारोः ॥७॥

**उत त्ये मा पौरुकुत्स्यस्य सूरेस्त्रसदस्योर्हिरणिनो रराणाः ।**
**वहन्तु मा दश श्येतासो ऽअस्य गैरिक्षितस्य क्रतुभिर्नु सश्चे ॥८॥**
उत । त्ये । मा । पौरुऽकुत्स्यस्य । सूरेः । त्रसदस्योः ।
हिरणिनः । रराणाः ॥ वहन्तु । मा । दश । श्येतासः ।
अस्य । गैरिऽक्षितस्य । क्रतुऽभिः । नु । सश्चे ॥८॥

उत त्ये मा मारुताश्वस्य शोणाः क्रत्वामघासो विदथस्य रातौ ।
सहस्रा मे च्यवतानो ददान ऽआनूकमर्यो वपुषे नार्चत् ॥९॥
उत । त्ये । मा । मारुत०अश्वस्य । शोणाः । क्रत्वा०मघासः ।
विदथस्य । रातौ ॥ सहस्रा । मे । च्यवतानः । ददानः ।
आनूकम् । अर्यः । वपुषे । न । आर्चत् ॥९॥

उत त्ये मा ध्वन्यस्य जुष्टा लक्ष्मण्यस्य सुरुचो यतानाः ।
मह्ना रायः संवरणस्य ऽऋषेर्व्रजं न गावः प्रयता ऽअपि ग्मन् ॥१०॥ ( २ ) [ १७८ ]
उत । त्ये । मा । ध्वन्यस्य । जुष्टाः । लक्ष्मण्यस्य ।
सु०रुचः । यतानाः ॥ मह्ना । रायः । सम्०वरणस्य ।
ऋषेः । व्रजम् । न । गावः । प्र०यताः । अपि । ग्मन् ॥१०॥

## ( ३४ )

९ प्राजापत्यः संवरणः । इन्द्रः । जगती, ९ त्रिष्टुप् ।

अजातशत्रुमजरा स्वर्वत्यनु स्वधामिता दस्ममीयते ।
सुनोतन पचत ब्रह्मवाहसे पुरुष्टुताय प्रतरं दधातन ॥१॥
अजात०शत्रुम् । अजरा । स्वः२वती । अनु । स्वधा ।
अमिता । दस्मम् । ईयते ॥ सुनोतन । पचत ।
ब्रह्म०वाहसे । पुरु०स्तुताय । प्र०तरम् । दधातन ॥१॥

आ यः सोमेन जठरमपिप्रतामन्दत मघवा मध्वो ऽअन्धसः ।
यदीं मृगाय हन्तवे महावधः सहस्रभृष्टिमुशना वधं यमत् ॥२॥
आ । यः । सोमेन । जठरम् । अपिप्रत । अमन्दत । मघ०वा ।
मध्वः । अन्धसः ॥ यत् । ईम् । मृगाय । हन्तवे । महा०वधः ।
सहस्र०भृष्टिम् । उशना । वधम् । यमत् ॥२॥

**यो ऽअस्मै घ्रंस ऽउत वा य ऽऊर्धनि सोमं सुनोति भवति द्युमाँ ऽअह ।**
**अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः ॥३॥**
यः । अस्मै । घ्रंसे । उत । वा । यः । ऊर्धनि । सोमम् ।
सुनोति । भवति । द्यु०मान् । अह ॥ अप०अप । शक्रः ।
ततनुष्टिम् । ऊहति । तनू०शुभ्रम् । मघ०वा । यः । कव०सखः ॥३॥

**यस्यावधीत्पितरं यस्य मातरं यस्य शक्रो भ्रातरं नात ऽईषते ।**
**वेतीद्वस्य प्रयता यतंकरो न किल्बिषादीषते वस्व ऽआकरः ॥४॥**
यस्य । अवधीत् । पितरम् । यस्य । मातरम् । यस्य । शक्रः ।
भ्रातरम् । न । अतः । ईषते ॥ वेति । इत् । ऊँ इति । अस्य ।
प्र०यता । यतम्०करः । न । किल्बिषात् । ईषते । वस्वः । आ०करः ॥४॥

**न पञ्चभिर्दशभिर्वष्ट्यारभं नासुन्वता सचते पुष्यता चन ।**
**जिनाति वेदमुया हन्ति वा धुनिरा देवयुं भजति गोमति व्रजे ॥५॥ ( ३ )**
न । पञ्च०भिः । दश०भिः । वष्टि । आ०रभम् । न । असुन्वता ।
सचते । पुष्यता । चन ॥ जिनाति । वा । इत् । अमुया । हन्ति ।
वा । धुनिः । आ । देव०युम् । भजति । गो०मति । व्रजे ॥५॥

**वित्वक्षणः समृतौ चक्रमासजोऽसुन्वतो विषुणः सुन्वतो वृधः ।**
**इन्द्रो विश्वस्य दमिता विभीषणो यथावशं नयति दासमार्यः ॥६॥**
वि०त्वक्षणः । सम्०ऋतौ । चक्रम्०आसजः । असुन्वतः ।
विषुणः । सुन्वतः । वृधः ॥ इन्द्रः । विश्वस्य । दमिता ।
वि०भीषणः । यथा०वशम् । नयति । दासम् । आर्यः ॥६॥

**समीं पणेरजति भोजनं मुषे वि दाशुषे भजति सूनरं वसु ।**
**दुर्गे चन ध्रियते विश्व ऽआ पुरु जनो यो ऽअस्य तविषीमचुक्रुधत् ॥७॥**

सम् । ईम् । पणेः । अजति । भोजनम् । मुषे । वि । दाशुषे ।
भजति । सूनरम् । वसु ॥ दुःऽगे । चन । ध्रियते । विश्वः ।
आ । पुरु । जनः । यः । अस्य । तविषीम् । अचुक्रुधत् ॥७॥

सं यज्जनौ सुधनौ विश्वशर्द्धसाववेदिन्द्रो मघवा गोषु शुभ्रिषु ।
युजं ह्यन्यमकृत प्रवेपन्युदीं गव्यं सृजते सत्वभिर्धुनिः ॥८॥
सम् । यत् । जनौ । सुऽधनौ । विश्वऽशर्द्धसौ । अवेत् । इन्द्रः ।
मघऽवा । गोषु । शुभ्रिषु ॥ युजम् । हि । अन्यम् । अकृत ।
प्रऽवेपनी । उत् । ईम् । गव्यम् । सृजते । सत्वऽभिः । धुनिः ॥८॥

सहस्रसामाग्निवेशिं गृणीषे शत्रिमग्न ऽउपमां केतुमर्यः ।
तस्मा ऽआपः संयतः पीपयन्त तस्मिन्क्षत्रममवत्त्वेषमस्तु ॥९॥ (४) [१८७]
सहस्रऽसाम् । आग्निऽवेशिम् । गृणीषे । शत्रिम् । अग्ने ।
उपऽमाम् । केतुम् । अर्यः ॥ तस्मै । आपः । सम्ऽयतः ।
पीपयन्त । तस्मिन् । क्षत्रम् । अमऽवत् । त्वेषम् । अस्तु ॥९॥

## ( ३५ )

८ प्रभूवसुराङ्गिरसः । इन्द्रः । अनुष्टुप्, ८ पङ्क्तिः ।

यस्ते साधिष्ठोऽवस ऽइन्द्र क्रतुष्टमा भर ।
अस्मभ्यं चर्षणीसहं सस्निं वाजेषु दुष्टरम् ॥१॥
यः । ते । साधिष्ठः । अवसे । इन्द्र । क्रतुः । तम् । आ । भर ॥
अस्मभ्यम् । चर्षणिऽसहम् । सस्निम् । वाजेषु । दुस्तरम् ॥१॥

यदिन्द्र ते चतस्रो यच्छूर सन्ति तिस्रः ।
यद्वा पञ्च क्षितीनामवस्तत्सु न ऽआ भर ॥२॥

यत् । इन्द्र । ते । चतस्रः । यत् । शूर । सन्ति । तिस्रः ॥
यत् । वा । पञ्च । क्षितीनाम् । अवः । तत् । सु । नः । आ । भर ॥२॥

**आ तेऽवो वरेण्यं वृषन्तमस्य हूमहे ।**
**वृषजूतिर्हि जज्ञिष ऽआभूभिरिन्द्र तुर्वणिः ॥३॥**
आ । ते । अवः । वरेण्यम् । वृषन्०तमस्य । हूमहे ॥
वृष०जूतिः । हि । जज्ञिषे । आ०भूभिः । इन्द्र । तुर्वणिः ॥३॥

**वृषा ह्यसि राधसे जज्ञिषे वृष्णि ते शवः ।**
**स्वक्षत्रं ते धृषन्मनः सत्राहमिन्द्र पौंस्यम् ॥४॥**
वृषा । हि । असि । राधसे । जज्ञिषे । वृष्णि । ते । शवः ॥
स्व०क्षत्रम् । ते । धृषम् । मनः । सत्रा०हम् । इन्द्र । पौंस्यम् ॥४॥

**त्वं तमिन्द्र मर्त्यममित्रयन्तमद्रिवः ।**
**सर्वरथा शतक्रतो नि याहि शवसस्पते ॥५॥ (५)**
त्वम् । तम् । इन्द्र । मर्त्यम् । अमित्र०यन्तम् । अद्रि०वः ॥
सर्व०रथा । शतक्रतो इति शत०क्रतो । नि । याहि । शवसः । पते ॥५॥

**त्वामिद्वृत्रहन्तम जनासो वृक्तबर्हिषः ।**
**उग्रं पूर्वीषु पूर्व्यं हवन्ते वाजसातये ॥६॥**
त्वाम् । इत् । वृत्रहन्०तम । जनासः । वृक्त०बर्हिषः ॥
उग्रम् । पूर्वीषु । पूर्व्यम् । हवन्ते । वाज०सातये ॥६॥

**अस्माकमिन्द्र दुष्टरं पुरोयावानमाजिषु ।**
**सयावानं धनेधने वाजयन्तमवा रथम् ॥७॥**

अस्माकम् । इन्द्र । दुस्तरम् । पुरःऽयावानम् । आजिषु ॥
सऽयावानम् । धनेऽधने । वाजऽयन्तम् । अव । रथम् ॥७॥

**अस्माकमिन्द्रेहि नो रथमवा पुरंध्या ।**
**वयं शविष्ठ वार्यं दिवि श्रवो दधीमहि दिवि स्तोमं मनामहे ॥८॥ (६)[१९५]**
अस्माकम् । इन्द्र । आ । इहि । नः । रथम् । अव ।
पुरम्ऽध्या ॥ वयम् । शविष्ठ । वार्यम् । दिवि ।
श्रवः । दधीमहि । दिवि । स्तोमम् । मनामहे ॥८॥

## ( ३६ )

**६ प्रभूवसुराङ्गिरसः । इन्द्रः । त्रिष्टुप्, ३ जगती ।**

**स ऽआ गमदिन्द्रो यो वसूनां चिकेतद्दातुं दामनो रयीणाम् ।**
**धन्वचरो न वंसगस्तृषाणश्चकमानः पिबतु दुग्धमंशुम् ॥१॥**
सः । आ । गमत् । इन्द्रः । यः । वसूनाम् । चिकेतत् ।
दातुम् । दामनः । रयीणाम् ॥ धन्वऽचरः । न । वंसगः ।
तृषाणः । चकमानः । पिबतु । दुग्धम् । अंशुम् ॥१॥

**आ ते हनू हरिवः शूर शिप्रे रुहत्सोमो न पर्वतस्य पृष्ठे ।**
**अनु त्वा राजन्नर्वतो न हिन्वन्गीर्भिर्मदेम पुरुहूत विश्वे ॥२॥**
आ । ते । हनू इति । हरिऽवः । शूर । शिप्रे इति । रुहत् ।
सोमः । न । पर्वतस्य । पृष्ठे ॥ अनु । त्वा । राजन् । अर्वतः ।
न । हिन्वन् । गीःऽभिः । मदेम । पुरुऽहूत । विश्वे ॥२॥

**चक्रं न वृत्तं पुरुहूत वेपते मनो भिया मे ऽअमतेरिदद्रिवः ।**
**रथादधि त्वा जरिता सदावृध कुविन्नु स्तोषन्मघवन्पुरूवसुः ॥३॥**

चक्रम् । न । वृत्तम् । पुरु॰हूत । वेपते । मनः । भिया । मे ।
अमतेः । इत् । अद्रि॰वः ॥ रथात् । अधि । त्वा । जरिता ।
सदा॰वृध । कुवित् । नु । स्तोषम् । मघ॰वन् । पुरु॰वसुः ॥३॥

एष ग्रावेव जरिता त ऽइन्द्रेयर्त्ति वाचं बृहदाशुषाणः ।
प्र सव्येन मघवन्यंसि रायः प्र दक्षिणिद्धरिवो मा वि वेनः ॥४॥
एषः । ग्रावाऽइव । जरिता । ते । इन्द्र । इयर्त्ति । वाचम् ।
बृहत् । आशुषाणः ॥ प्र । सव्येन । मघ॰वन् । यंसि ।
रायः । प्र । दक्षिणित् । हरि॰वः । मा । वि । वेनः ॥४॥

वृषा त्वा वृषणं वर्द्धतु द्यौर्वृषा वृषभ्यां वहसे हरिभ्याम् ।
स नो वृषा वृषरथः सुशिप्र वृषक्रतो वृषा वज्रिन्भरे धाः ॥५॥
वृषा । त्वा । वृषणम् । वर्द्धतु । द्यौः । वृषा । वृष॰भ्याम् ।
वहसे । हरि॰भ्याम् ॥ सः । नः । वृषा । वृष॰रथः । सु॰शिप्र ।
वृषक्रतो इति वृष॰क्रतो । वृषा । वज्रिन् । भरे । धाः ॥५॥

यो रोहितौ वाजिनौ वाजिनीवान्त्रिभिः शतैः सचमानावदिष्ट ।
यूने समस्मै क्षितयो नमन्तां श्रुतरथाय मरुतो दुवोया ॥६॥ (७) [ २०१ ]
यः । रोहितौ । वाजिनौ । वाजिनी॰वान् । त्रि॰भिः ।
शतैः । सचमानौ । अदिष्ट ॥ यूने । सम् । अस्मै ।
क्षितयः । नमन्ताम् । श्रुत॰रथाय । मरुतः । दुवः॰या ॥६॥

## ( ३७ )

५ भौमोऽत्रिः । इन्द्रः । त्रिष्टुप् ।

सं भानुना यतते सूर्यस्याजुह्वानो घृतपृष्ठः स्वञ्चाः ।
तस्मा ऽअमृध्रा ऽउषसो व्युच्छान्य ऽइन्द्राय सुनवामेत्याह ॥१॥

सम् । भानुना । यतते । सूर्यस्य । आ॰जुह्वानः ।
घृत॰पृष्ठः । सु॰अञ्चाः ॥ तस्मै । अमृध्राः । उषसः ।
वि । उच्छान् । यः । इन्द्राय । सुनवाम । इति । आह ॥१॥

**समिद्धाग्निर्वनवत्स्तीर्णबर्हिर्युक्तग्रावा सुतसोमो जराते ।**
**ग्रावाणो यस्येषिरं वदन्त्ययदध्वर्युर्हविषाव सिन्धुम् ॥२॥**
समिद्ध॰अग्निः । वनवत् । स्तीर्ण॰बर्हिः । युक्त॰ग्रावा ।
सुत॰सोमः । जराते ॥ ग्रावाणः । यस्य । इषिरम् ।
वदन्ति । अयत् । अध्वर्युः । हविषा । अव । सिन्धुम् ॥२॥

**वधूरियं पतिमिच्छन्त्येति य ऽई वहाते महिषीमिषिराम् ।**
**आस्य श्रवस्याद्रथ ऽआ च घोषात्पुरू सहस्रा परि वर्तयाते ॥३॥**
वधूः । इयम् । पतिम् । इच्छन्ती । एति । यः । ईम् ।
वहाते । महिषीम् । इषिराम् ॥ आ । अस्य । श्रवस्यात् ।
रथः । आ । च । घोषात् । पुरु । सहस्रा । परि । वर्तयाते ॥३॥

**न स राजा व्यथते यस्मिन्निन्द्रस्तीव्रं सोमं पिबति गोसखायम् ।**
**आ सत्वनैरजति हन्ति वृत्रं क्षेति क्षितीः सुभगो नाम पुष्यन् ॥४॥**
न । सः । राजा । व्यथते । यस्मिन् । इन्द्रः । तीव्रम् ।
सोमम् । पिबति । गो॰सखायम् ॥ आ । सत्वनैः । अजति ।
हन्ति । वृत्रम् । क्षेति । क्षितीः । सु॰भगः । नाम । पुष्यन् ॥४॥

**पुष्यात्क्षेमे ऽअभि योगे भवात्युभे वृतौ संयती सं जयाति ।**
**प्रियः सूर्ये प्रियो ऽअग्ना भवाति य ऽइन्द्राय सुतसोमो ददाशत् ॥५॥ (८) [ २०६ ]**
पुष्यात् । क्षेमे । अभि । योगे । भवाति । उभे इति । वृतौ ।
संयती इति सम्॰यती । सम् । जयाति ॥ प्रियः । सूर्ये । प्रियः ।
अग्ना । भवाति । यः । इन्द्राय । सुत॰सोमः । ददाशत् ॥५॥

# ( ३८ )

५ भौमोऽत्रिः । इन्द्रः । अनुष्टुप् ।

उरोष्ट ऽइन्द्र राधसो विभ्वी रातिः शतक्रतो ।
अधा नो विश्वचर्षणे द्युम्ना सुक्षत्र मंहय ॥१॥
उरोः । ते । इन्द्र । राधसः । वि०भ्वी । रातिः । शतक्रतो इति शत०क्रतो ॥
अध । नः । विश्व०चर्षणे । द्युम्ना । सु०क्षत्र । मंहय ॥१॥

यदीमिन्द्र श्रवाय्यमिषं शविष्ठ दधिषे ।
पप्रथे दीर्घश्रुत्तमं हिरण्यवर्ण दुष्टरम् ॥२॥
यत् । ईम् । इन्द्र । श्रवाय्यम् । इषम् । शविष्ठ । दधिषे ॥
पप्रथे । दीर्घश्रुत्०तमम् । हिरण्य०वर्ण । दुस्तरम् ॥२॥

शुष्मासो ये ते ऽअद्रिवो मेहना केतसापः ।
उभा देवावभिष्टये दिवश्च ग्मश्च राजथः ॥३॥
शुष्मासः । ये । ते । अद्रि०वः । मेहना । केत०सापः ॥
उभा । देवौ । अभिष्टये । दिवः । च । ग्मः । च । राजथः ॥३॥

उतो नो ऽअस्य कस्य चिद्दक्षस्य तव वृत्रहन् ।
अस्मभ्यं नृम्णमा भरास्मभ्यं नृमणस्यसे ॥४॥
उतो इति । नः । अस्य । कस्य । चित् । दक्षस्य । तव । वृत्र०हन् ॥
अस्मभ्यम् । नृम्णम् । आ । भर । अस्मभ्यम् । नृ०मनस्यसे ॥४॥

नू त ऽआभिरभिष्टिभिस्तव शर्मञ्छतक्रतो ।
इन्द्र स्याम सुगोपाः शूर स्याम सुगोपाः ॥५॥ ( ९ ) [ २११ ]

नु । ते । आभिः । अभिष्टिऽभिः । तव । शर्मन् । शतक्रतो इति शतऽक्रतो ॥
इन्द्र । स्याम । सुऽगोपाः । शूर । स्याम । सुऽगोपाः ॥५॥

# ( ३९ )

**५ भौमोऽत्रिः । इन्द्रः । अनुष्टुप्, ५ पङ्क्तिः ।**

**यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः ।**

**राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥१॥**

यत् । इन्द्र । चित्र । मेहना । अस्ति । त्वाऽदातम् । अद्रिऽवः ॥
राधः । तत् । नः । विदद्वसो इति विदत्ऽवसो । उभयाहस्ति । आ । भर ॥१॥

**यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर ।**

**विद्याम तस्य ते वयमकूपारस्य दावने ॥२॥**

यत् । मन्यसे । वरेण्यम् । इन्द्र । द्युक्षम् । तत् । आ । भर ॥
विद्याम । तस्य । ते । वयम् । अकूपारस्य । दावने ॥२॥

**यत्ते दित्सु प्रराध्यं मनो अस्ति श्रुतं बृहत् ।**

**तेन दृळ्हा चिदद्रिव आ वाजं दर्षि सातये ॥३॥**

यत् । ते । दित्सु । प्रऽराध्यम् । मनः । अस्ति । श्रुतम् । बृहत् ॥
तेन । दृळ्हा । चित् । अद्रिऽवः । आ । वाजम् । दर्षि । सातये ॥३॥

**मंहिष्ठं वो मघोनां राजानं चर्षणीनाम् ।**

**इन्द्रमुप प्रशस्तये पूर्वीभिर्जुजुषे गिरः ॥४॥**

मंहिष्ठम् । वः । मघोनाम् । राजानम् । चर्षणीनाम् ॥
इन्द्रम् । उप । प्रऽशस्तये । पूर्वीभिः । जुजुषे । गिरः ॥४॥

**अस्मा ऽइत्काव्यं वर्च ऽउक्थमिन्द्राय शंस्यम् ।**

**तस्मा ऽउ ब्रह्मवाहसे गिरो वर्द्धन्त्यत्रयो गिरः शुम्भन्त्यत्रयः ॥५॥ (१०)[ २१६ ]**

अस्मै । इत् । काव्यम् । वर्चः । उक्थम् । इन्द्राय ।
शंस्यम् ॥ तस्मै । ऊँ इति । ब्रह्म०वाहसे । गिरः ।
वर्द्धन्ति । अत्रयः । गिरः । शुम्भन्ति । अत्रयः ॥५॥

# ( ४० )

**९ भौमोऽत्रिः । इन्द्रः, ५ सूर्यः, ६-९ अत्रिः । १-३ उष्णिक्, ५, ९ अनुष्टुप्, ४, ६-८ त्रिष्टुप् ।**

**आ याह्यद्रिभिः सुतं सोमं सोमपते पिब ।**

**वृषन्निन्द्र वृषभिर्वृत्रहन्तम ॥१॥**

आ । याहि । अद्रि०भिः । सुतम् । सोमम् । सोम०पते । पिब ॥
वृषन् । इन्द्र । वृष०भिः । वृत्रहन्०तम ॥१॥

**वृषा ग्रावा वृषा मदो वृषा सोमो ऽअयं सुतः ।**

**वृषन्निन्द्र वृषभिर्वृत्रहन्तम ॥२॥**

वृषा । ग्रावा । वृषा । मदः । वृषा । सोमः । अयम् । सुतः ॥
वृषन् । इन्द्र । वृष०भिः । वृत्रहन्०तम ॥२॥

**वृषा त्वा वृषणं हुवे वज्रिञ्चित्राभिरूतिभिः ।**

**वृषन्निन्द्र वृषभिर्वृत्रहन्तम ॥३॥**

वृषा । त्वा । वृषणम् । हुवे । वज्रिन् । चित्राभिः । ऊति०भिः ॥
वृषन् । इन्द्र । वृष०भिः । वृत्रहन्०तम ॥३॥

**ऋजीषी वज्री वृषभस्तुराषाट् छुष्मी राजा वृत्रहा सोमपावा ।**

**युक्त्वा हरिभ्यामुप यासदर्वाङ्माध्यंदिने सवने मत्सदिन्द्रः ॥४॥**

ऋजीषी । वज्री । वृषभः । तुराषाट् । शुष्मी । राजा ।
वृत्र०हा । सोम०पावा ॥ युक्त्वा । हरि०भ्याम् । उप ।
यासत् । अर्वाङ् । माध्यंन्दिने । सवने । मत्सत् । इन्द्रः ॥४॥

**यत्त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः ।**
**अक्षेत्रविद्यथा मुग्धो भुवनान्यदीधयुः ॥५॥ ( ११ )**
यत् । त्वा । सूर्य । स्वः२भानुः । तमसा । अविध्यत् । आसुरः ॥
अक्षेत्र०वित् । यथा । मुग्धः । भुवनानि । अदीधयुः ॥५॥

**स्वर्भानोरध यदिन्द्र माया ऽअवो दिवो वर्तमाना ऽअवाहन् ।**
**गूळ्हं सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाविन्ददत्रिः ॥६॥**
स्वः२भानोः । अध । यत् । इन्द्र । मायाः । अवः । दिवः ।
वर्तमानाः । अव०अहन् ॥ गूळ्हम् । सूर्यम् । तमसा ।
अप०व्रतेन । तुरीयेण । ब्रह्मणा । अविन्दत् । अत्रिः ॥६॥

**मा मामिमं तव सन्तमत्र ऽइरस्या द्रुग्धो भियसा नि गारीत् ।**
**त्वं मित्रो ऽअसि सत्यराधास्तौ मेहावतं वरुणश्च राजा ॥७॥**
मा । माम् । इमम् । तव । सन्तम् । अत्र । इरस्या । द्रुग्धः ।
भियसा । नि । गारीत् ॥ त्वम् । मित्रः । असि । सत्य०राधाः ।
तौ । मा । इह । अवतम् । वरुणः । च । राजा ॥७॥

**ग्राव्णो ब्रह्मा युयुजानः सपर्यन्कीरिणा देवान्नमसोपशिक्षन् ।**
**अत्रिः सूर्यस्य दिवि चक्षुराधात्स्वर्भानोरप माया ऽअघुक्षत् ॥८॥**
ग्राव्णः । ब्रह्मा । युयुजानः । सपर्यन् । कीरिणा । देवान् ।
नमसा । उप०शिक्षन् ॥ अत्रिः । सूर्यस्य । दिवि । चक्षुः ।
आ । अधात् । स्वः२भानोः । अप । मायाः । अघुक्षत् ॥८॥

**यं वै सूर्य॒ स्व॑र्भानु॒स्तम॒सावि॑ध्यदासु॒रः ।**

**अत्र॑य॒स्तमन्व॑विन्दन्न॒ह्य१॒॑न्ये ऽअश॑क्नुवन् ॥९॥ ( १२ )** [ २२५ ]

यम् । वै । सूर्य॑म् । स्व॑:ऽभानुः । तम॑सा । अवि॑ध्यत् । आ॒सु॒रः ॥

अत्र॑यः । तम् । अनु॑ । अ॒वि॒न्द॒न् । न॒हि । अ॒न्ये । अश॑क्नुवन् ॥९॥

# ( ४१ )

२० भौमोऽत्रिः । विश्वे देवाः । त्रिष्टुप्, १६-१७ अतिजगती, २० एकपदा विराट् ।

**को नु वां॑ मित्रावरुणावृता॒यन्दि॒वो वा॑ म॒हः पार्थि॑वस्य वा॒ दे ।**

**ऋ॒तस्य॑ वा॒ सद॑सि॒ त्रासी॑थां नो यज्ञाय॒ते वा॑ पशु॒षो न वाजा॑न् ॥१॥**

कः । नु । वा॒म् । मि॒त्रा॒व॒रु॒णौ॒ । ऋ॒त॒ऽयन् । दि॒वः । वा॒ ।

म॒हः । पार्थि॑वस्य । वा॒ । दे ॥ ऋ॒तस्य॑ । वा॒ । सद॑सि ।

त्रासी॑थाम् । न॒ः । य॒ज्ञ॒ऽय॒ते । वा॒ । प॒शु॒ऽसः । न । वाजा॑न् ॥१॥

**ते नो॑ मि॒त्रो वरु॑णो ऽअर्य॒माायुरिन्द्र॑ ऽऋभुक्षा म॒रुतो॑ जुषन्त ।**

**नमो॑भिर्वा॒ ये दध॑ते सुवृ॒क्तिं स्तोमं॑ रु॒द्राय॑ मी॒ळ्हुषे॑ स॒जोषा॑ः ॥२॥**

ते । न॒ः । मि॒त्रः । वरु॑णः । अ॒र्य॒मा । आ॒युः । इन्द्र॑ः ।

ऋ॒भुक्षाः । म॒रुत॑ः । जु॒ष॒न्त ॥ नम॑:ऽभिः । वा॒ । ये । दध॑ते ।

सु॒ऽवृ॒क्तिम् । स्तोम॑म् । रु॒द्राय॑ । मी॒ळ्हुषे॑ । स॒ऽजोषा॑ः ॥२॥

**आ वा॒ं येष्ठा॑श्विना हु॒वध्यै॒ वात॑स्य॒ पत्म॒न्रथ्य॑स्य पु॒ष्टौ ।**

**उ॒त वा॑ दि॒वो ऽअसु॑राय॒ मन्म॒ प्रान्धां॑सीव॒ यज्य॑वे भरध्वम् ॥३॥**

आ । वा॒म् । येष्ठा॑ । अ॒श्वि॒ना॒ । हु॒वध्यै॑ । वात॑स्य ।

पत्म॑न् । रथ्य॑स्य । पु॒ष्टौ ॥ उ॒त । वा॒ । दि॒वः । असु॑राय ।

मन्म॑ । प्र । अन्धां॑सिऽइव । यज्य॑वे । भ॒र॒ध्व॒म् ॥३॥

प्र सक्षणो दिव्यः कण्वहोता त्रितो दिवः सजोषा वातो ऽअग्निः ।
पूषा भगः प्रभृथे विश्वभोजा ऽआजिं न जग्मुराश्वश्वतमाः ॥४॥
प्र । सक्षणः । दिव्यः । कण्व०होता । त्रितः । दिवः ।
स०जोषाः । वातः । अग्निः ॥ पूषा । भगः । प्र०भृथे ।
विश्व०भोजाः । आजिम् । न । जग्मुः । आश्वश्व०तमाः ॥४॥

प्र वो रयिं युक्ताश्वं भरध्वं राय ऽएषेऽवसे दधीत धीः ।
सुशेव ऽएवैरौशिजस्य होता ये व ऽएवा मरुतस्तुराणाम् ॥५॥ (१३)
प्र । वः । रयिम् । युक्त०अश्वम् । भरध्वम् । रायः । एषे ।
अवसे । दधीत । धीः ॥ सु०शेवः । एवैः । औशिजस्य ।
होता । ये । वः । एवाः । मरुतः । तुराणाम् ॥५॥

प्र वो वायुं रथयुजं कृणुध्वं प्र देवं विप्रं पनितारमर्कैः ।
इषुध्यव ऽऋतसापः पुरंधीर्वस्वीर्नो ऽअत्र पत्नीरा धिये धुः ॥६॥
प्र । वः । वायुम् । रथ०युजम् । कृणुध्वम् । प्र । देवम् । विप्रम् ।
पनितारम् । अर्कैः ॥ इषुध्यवः । ऋत०सापः । पुरम्०धीः ।
वस्वीः । नः । अत्र । पत्नीः । आ । धिये । धुरिति धुः ॥६॥

उप व ऽएषे वन्द्येभिः शूषैः प्र यह्वी दिवश्चितयद्भिरर्कैः ।
उषासानक्ता विदुषीव विश्वमा हा वहतो मर्त्याय यज्ञम् ॥७॥
उप । वः । एषे । वन्द्येभिः । शूषैः । प्र । यह्वी इति । दिवः ।
चितयत्०भिः । अर्कैः ॥ उषसानक्ता । विदुषी इवेति विदुषीऽइव ।
विश्वम् । आ । ह । वहतः । मर्त्याय । यज्ञम् ॥७॥

अभि वो ऽअर्चे पोष्यावतो नृन्वास्तोष्पतिं त्वष्टारं रराणः ।
धन्या सजोषा धिषणा नमोभिर्वनस्पतीँरोषधी राय ऽएषे ॥८॥

अभि । वः । अर्चे । पोष्याऽवतः । नॄन् । वास्तोः । पतिम् ।
त्वष्टारम् । रराणः ॥ धन्या । सऽजोषाः । धिषणा ।
नमःऽभिः । वनस्पतीन् । ओषधीः । रायः । एषे ॥८॥

**तुजे नस्तने पर्वताः सन्तु स्वैतवो ये वसवो न वीराः ।**
**पनित ऽआप्त्यो यजतः सदा नो वर्धान्नः शंसं नर्यो ऽअभिष्टौ ॥९॥**
तुजे । नः । तने । पर्वताः । सन्तु । स्वऽएतवः । ये ।
वसवः । न । वीराः ॥ पनितः । आप्त्यः । यजतः ।
सदा । नः । वर्धात् । नः । शंसम् । नर्यः । अभिष्टौ ॥९॥

**वृष्णो ऽअस्तोषि भूम्यस्य गर्भं त्रितो नपातमपां सुवृक्ति ।**
**गृणीते ऽअग्निरेतरी न शूषैः शोचिष्केशो नि रिणाति वना ॥१०॥ (१४)**
वृष्णः । अस्तोषि । भूम्यस्य । गर्भम् । त्रितः । नपातम् ।
अपाम् । सुऽवृक्ति ॥ गृणीते । अग्निः । एतरि । न ।
शूषैः । शोचिःऽकेशः । नि । रिणाति । वना ॥१०॥

**कथा महे रुद्रियाय ब्रवाम कद्राये चिकितुषे भगाय ।**
**आप ऽओषधीरुत नोऽवन्तु द्यौर्वना गिरयो वृक्षकेशाः ॥११॥**
कथा । महे । रुद्रियाय । ब्रवाम । कत् । राये ।
चिकितुषे । भगाय ॥ आपः । ओषधीः । उत । नः ।
अवन्तु । द्यौः । वना । गिरयः । वृक्षऽकेशाः ॥११॥

**शृणोतु न ऽऊर्जां पतिर्गिरः स नभस्तरीयाँ ऽइषिरः परिज्मा ।**
**शृण्वन्त्वापः पुरो न शुभ्राः परि स्रुचो बबृहाणस्याद्रेः ॥१२॥**
शृणोतु । नः । ऊर्जाम् । पतिः । गिरः । सः । नभः ।
तरीयान् । इषिरः । परिऽज्मा ॥ शृण्वन्तु । आपः । पुरः ।
न । शुभ्राः । परि । स्रुचः । बबृहाणस्य । अद्रेः ॥१२॥

विदा चिन्नु महान्तो ये व ऽएवा ब्रवाम दस्मा वार्यं दधानाः ।
वयश्चन सुभ्व१ ऽआव यन्ति क्षुभा मर्त्तमनुयतं वधस्नैः ॥१३॥
विद । चित् । नु । महान्तः । ये । वः । एवाः । ब्रवाम ।
दस्माः । वार्यम् । दधानाः ॥ वयः । चन । सु०भ्वः । आ ।
अव । यन्ति । क्षुभा । मर्त्तम् । अनु०यतम् । वध०स्नैः ॥१३॥

आ दैव्यानि पार्थिवानि जन्मापश्चाच्छा सुमखाय वोचम् ।
वर्द्धन्तां द्यावो गिरश्चन्द्राग्रा ऽउदा वर्द्धन्तामभिषाता ऽअर्णाः ॥१४॥
आ । दैव्यानि । पार्थिवानि । जन्म । अपः । च । अच्छ ।
सु०मखाय । वोचम् ॥ वर्द्धन्ताम् । द्यावः । गिरः ।
चन्द्र०अग्राः । उदा । वर्द्धन्ताम् । अभि०साताः । अर्णाः ॥१४॥

पदेपदे मे जरिमा नि धायि वरूत्री वा शक्रा या पायुभिश्च ।
सिषक्तु माता मही रसा नः स्मत्सूरिभिर्ऋजुहस्त ऽऋजुवनिः ॥१५॥ ( १५ )
पदे०पदे । मे । जरिमा । नि । धायि । वरूत्री । वा ।
शक्रा । या । पायु०भिः । च ॥ सिसक्तु । माता । मही ।
रसा । नः । स्मत् । सूरि०भिः । ऋजु०हस्ता । ऋजु०वनिः ॥१५॥

कथा दाशेम नमसा सुदानूनेवया मरुतो ऽअच्छोक्तौ प्रश्रवसो मरुतो ऽअच्छोक्तौ ।
मा नोऽहिर्बुध्न्यो रिषे धादस्माकं भूदुपमातिवनिः ॥१६॥
कथा । दाशेम । नमसा । सु०दानून् । एव०या । मरुतः ।
अच्छ०उक्तौ । प्र०श्रवसः । मरुतः । अच्छ०उक्तौ॥ मा । नः ।
अहिः । बुध्न्यः । रिषे । धात् । अस्माकम् । भूत् । उपमाति०वनिः ॥१६॥

इति चिन्नु प्रजायै पशुमत्यै देवासो वनते मर्त्यो व ऽआ देवासो वनते मर्त्यो वः ।
अत्रा शिवां तन्वो धासिमस्या जरां चिन्मे निर्ऋतिर्जग्रसीत ॥१७॥

इतिं । चित् । नु । प्र०जायै । पशु०मत्यै । देवास । वनते । मर्त्यः । वः ।
आ । देवासः । वनते । मर्त्यः । वः ॥ अत्र । शिवाम् । तन्वः । धासिम् ।
अस्याः । जराम् । चित् । मे । निः२ऋतिः । जग्रसीत ॥१७॥

**तां वो देवाः सुमतिमूर्जयन्तीमिषमश्याम वसवः शसा गोः ।**
**सा नः सुदानुर्मृळयन्ती देवी प्रति द्रवन्ती सुवितायं गम्याः ॥१८॥**
ताम् । वः । देवाः । सु०मतिम् । ऊर्जयन्तीम् । इषम् ।
अश्याम । वसवः । शसा । गोः ॥ सा । नः । सु०दानुः ।
मृळयन्ती । देवी । प्रति । द्रवन्ती । सुवितायं । गम्याः ॥१८॥

**अभि न ऽइळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु ।**
**उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ॥१९॥**
अभि । नः । इळा । यूथस्य । माता । स्मत् । नदीभिः ।
उर्वशी । वा । गृणातु ॥ उर्वशी । वा । बृहत्०दिवा ।
गृणना । अभि०ऊर्ण्वाना । प्र०भृथस्य । आयोः ॥१९॥

**सिषक्तु न ऽऊर्जव्यस्य पुष्टेः ॥२०॥ (१६)** [ २४५ ]
सिसक्तु । नः । ऊर्जव्यस्य । पुष्टेः ॥२०॥

# ( ४२ )

**१८ भौमोऽत्रिः । विश्वे देवाः, ११ रुद्रः । त्रिष्टुप्, १७ एकपदा विराट् ।**

**प्र शंतमा वरुणं दीधिती गीर्मित्रं भगमदितिं नूनमश्याः ।**
**पृषद्योनिः पञ्चहोता शृणोत्वतूर्तपन्था ऽअसुरो मयोभुः ॥१॥**
प्र । शम्०तमा । वरुणम् । दीधिती । गीः । मित्रम् । भगम् ।
अदितिम् । नूनम् । अश्याः ॥ पृषत्०योनिः । पञ्च०होता ।
शृणोतु । अतूर्त०पन्थाः । असुरः । मयः२भुः ॥१॥

प्रति॑ मे॒ स्तोम॒मदि॑तिर्जगृभ्यात्सू॒नुं न मा॒ता हृद्यं॑ सु॒शेव॑म् ।
ब्रह्म॑ प्रि॒यं दे॒वहि॑तं॒ यदस्त्य॒हं मि॒त्रे वरु॑णे॒ यन्म॑यो॒भु ॥२॥
प्रति॑ । मे॒ । स्तोम॑म् । अदि॑तिः । ज॒गृ॒भ्या॒त् । सू॒नुम् । न ।
मा॒ता । हृद्य॑म् । सु॒ऽशेव॑म् ॥ ब्रह्म॑ । प्रि॒यम् । दे॒वऽहि॑तम् ।
यत् । अस्ति॑ । अ॒हम् । मि॒त्रे । वरु॑णे । यत् । म॒यः॒ऽभुः ॥२॥

उदी॑रय क॒वित॑मं कवी॒नामु॒नत्तै॑नम॒भि मध्वा॑ घृ॒तेन॑ ।
स नो॒ वसू॑नि॒ प्रय॑ता हि॒तानि॑ च॒न्द्राणि॑ दे॒वः स॑वि॒ता सु॑वाति ॥३॥
उत् । ई॒र॒य॒ । क॒वि॒ऽत॑मम् । क॒वी॒नाम् । उ॒नत्त॑ । ए॒न॒म् ।
अ॒भि । मध्वा॑ । घृ॒तेन॑ ॥ सः । नः॒ । वसू॑नि । प्रऽय॑ता ।
हि॒तानि॑ । च॒न्द्राणि॑ । दे॒वः । स॒वि॒ता । सु॒वा॒ति ॥३॥

समि॑न्द्र णो॒ मन॑सा नेषि॒ गोभिः॒ सं सू॒रिभि॑र्हरिवः॒ सं स्व॒स्ति ।
सं ब्रह्म॑णा दे॒वहि॑तं॒ यदस्ति॒ सं दे॒वानां॑ सुम॒त्या य॒ज्ञिया॑नाम् ॥४॥
सम् । इ॒न्द्र॒ । नः॒ । मन॑सा । ने॒षि॒ । गोभिः॑ । सम् । सू॒रिऽभिः॑ ।
ह॒रि॒ऽवः॒ । सम् । स्व॒स्ति ॥ सम् । ब्रह्म॑णा । दे॒वऽहि॑तम् ।
यत् । अस्ति॑ । सम् । दे॒वाना॑म् । सु॒ऽम॒त्या । य॒ज्ञिया॑नाम् ॥४॥

दे॒वो भगः॑ सवि॒ता रा॒यो ऽअंश॒ ऽइन्द्रो॑ वृ॒त्रस्य॑ सं॒जितो॒ धना॑नाम् ।
ऋ॒भु॒क्षा वाज॑ ऽउ॒त वा॒ पुरं॑धिरवन्तु नो ऽअ॒मृता॑सस्तु॒रासः॑ ॥५॥ (१७)
दे॒वः । भगः॑ । स॒वि॒ता । रा॒यः । अंशः॑ । इन्द्रः॑ । वृ॒त्रस्य॑ ।
स॒म्ऽजितः॑ । धना॑नाम् ॥ ऋ॒भु॒क्षाः । वाजः॑ । उ॒त । वा॒ ।
पुर॑म्ऽधिः । अव॑न्तु । नः॒ । अ॒मृता॑सः । तु॒रासः॑ ॥५॥

म॒रुत्व॑तो॒ ऽअप्र॑तीतस्य जि॒ष्णोरजू॑र्यतः॒ प्र ब्र॑वामा कृ॒तानि॑ ।
न ते॒ पूर्वे॑ मघव॒न्नाप॑रासो॒ न वी॒र्यं१॒॑ नूत॑नः॒ कश्च॒नाप॑ ॥६॥

मरुत्वंतः । अप्रति०इतस्य । जिष्णोः । अजूर्यतः । प्र ।
ब्रवाम । कृतानि ॥ न । ते । पूर्वे । मघ०वन् । न ।
अपरासः । न । वीर्यम् । नूतनः । कः । चन । आप ॥६॥

**उप स्तुहि प्रथमं रत्नधेयं बृहस्पतिं सनितारं धनानाम् ।**
**यः शंसते स्तुवते शं०भविष्ठः पुरूवसुरागमज्जोहुवानम् ॥७॥**
उप । स्तुहि । प्रथमम् । रत्न०धेयम् । बृहस्पतिम् ।
सनितारम् । धनानाम् ॥ यः । शंसते । स्तुवते ।
शम्०भविष्ठः । पुरु०वसुः । आ०गमत् । जोहुवानम् ॥७॥

**तवोतिभिः सचमाना ऽअरिष्टा बृहस्पते मघवानः सुवीराः ।**
**ये ऽअश्वदा ऽउत वा सन्ति गोदा ये वस्त्रदाः सुभगास्तेषु रायः ॥८॥**
तव । ऊति०भिः । सचमानाः । अरिष्टाः । बृहस्पते ।
मघ०वानः । सु०वीराः ॥ ये । अश्व०दाः । उत । वा ।
सन्ति । गो०दाः । ये । वस्त्र०दाः । सु०भगाः । तेषु । रायः ॥८॥

**विसर्माणं कृणुहि वित्तमेषां ये भुञ्जते ऽअपृणन्तो न ऽउक्थैः ।**
**अपव्रतान्प्रसवे वावृधानान्ब्रह्मद्विषः सूर्याद्यावयस्व ॥९॥**
वि०सर्माणम् । कृणुहि । वित्तम् । एषाम् । ये । भुञ्जते ।
अपृणन्तः । नः । उक्थैः ॥ अप०व्रतान् । प्र०सवे ।
ववृधानान् । ब्रह्म०द्विषः । सूर्यात् । यवयस्व ॥९॥

**य ऽओहते रक्षसो देववीतावचक्रेभिस्तं मरुतो नि यात ।**
**यो वः शमीं शशमानस्य निन्दात्तुच्छ्यान्कामान्करते सिष्विदानः ॥१०॥ (१८)**
यः । ओहते । रक्षसः । देव०वीतौ । अचक्रेभिः । तम् ।
मरुतः । नि । यात ॥ यः । वः । शमीम् । शशमानस्य ।
निन्दात् । तुच्छ्यान् । कामान् । करते । सिस्विदानः ॥१०॥

**तमु ष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य ।**
**यक्ष्वा महे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य ॥११॥**

तम् । ऊँ इति । स्तुहि । यः । सुऽइषुः । सुऽधन्वा । यः ।
विश्वस्य । क्षयति । भेषजस्य ॥ यक्ष्व । महे । सौमनसाय ।
रुद्रम् । नमःऽभिः । देवम् । असुरम् । दुवस्य ॥११॥

**दमूनसो ऽअपसो ये सुहस्ता वृष्णः पत्नीर्नद्यो विभ्वतष्टाः ।**
**सरस्वती बृहद्दिवोत राका दशस्यन्तीर्वरिवस्यन्तु शुभ्राः ॥१२॥**

दमूनसः । अपसः । ये । सुऽहस्ताः । वृष्णः । पत्नीः ।
नद्यः । विभ्वऽतष्टाः ॥ सरस्वती । बृहत्ऽदिवा ।
उत । राका । दशस्यन्तीः । वरिवस्यन्तु । शुभ्राः ॥१२॥

**प्र सू महे सुशरणाय मेधां गिरं भरे नव्यसीं जायमानाम् ।**
**य ऽआहना दुहितुर्वक्षणासु रूपा मिनानो ऽअकृणोदिदं नः ॥१३॥**

प्र । सु । महे । सुऽशरणाय । मेधाम् । गिरम् । भरे ।
नव्यसीम् । जायमानाम् ॥ यः । आहनाः । दुहितुः ।
वक्षणासु । रूपा । मिनानः । अकृणोत् । इदम् । नः ॥१३॥

**प्र सुष्टुतिः स्तनयन्तं रुवन्तमिळस्पतिं जरितर्नूनमश्याः ।**
**यो ऽअब्दिमाँ ऽउदनिमाँ ऽइयर्त्ति प्र विद्युता रोदसी ऽउक्षमाणः ॥१४॥**

प्र । सुऽस्तुतिः । स्तनयन्तम् । रुवन्तम् । इळः । पतिम् ।
जरितः । नूनम् । अश्याः ॥ यः । अब्दिऽमान् । उदनिऽमान् ।
इयर्त्ति । प्र । विऽद्युता । रोदसी इति । उक्षमाणः ॥१४॥

**एष स्तोमो मारुतं शर्द्धो ऽअच्छा रुद्रस्य सूनूँर्युवन्यूँरुदश्याः ।**
**कामो राये हवते मा स्वस्त्युप स्तुहि पृषदश्वाँ ऽअयासः ॥१५॥**

एषः । स्तोमः । मारुतम् । शर्द्धः । अच्छ । रुद्रस्य ।
सूनून् । युवन्यून् । उत् । अश्याः ॥ कामः । राये । हवते ।
मा । स्वस्ति । उप । स्तुहि । पृषत्०अश्वान् । अयासः ॥१५॥

**प्रैष स्तोमः पृथिवीमन्तरिक्षं वनस्पतींरोषधी राये ऽअश्याः ।**
**देवोदेवः सुहवो भूतु मह्यं मा नो माता पृथिवी दुर्मतौ धात् ॥१६॥**
प्र । एषः । स्तोमः । पृथिवीम् । अन्तरिक्षम् । वनस्पतीन् ।
ओषधीः । राये । अश्याः ॥ देवः२देवः । सु०हवः । भूतु ।
मह्यम् । मा । नः । माता । पृथिवी । दुः२मतौ । धात् ॥१६॥

**उरौ देवा ऽअनिबाधे स्याम ॥१७॥**
उरौ । देवाः । अनि०बाधे । स्याम ॥१७॥

**समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।**
**आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥१८॥ (१९) [ २६३ ]**
सम् । अश्विनोः । अवसा । नूतनेन । मयः२भुवा ।
सु०प्रनीती । गमेम ॥ आ । नः । रयिम् । वहतम् । आ ।
उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥१८॥

## ( ४३ )

**१७ भौमोऽत्रिः । विश्वे देवाः । त्रिष्टुप्, १६ एकपदा विराट् ।**

**आ धेनवः पयसा तूर्ण्यर्था ऽअमर्द्धन्तीरुप नो यन्तु मध्वा ।**
**महो राये बृहतीः सप्त विप्रो मयोभुवो जरिता जोहवीति ॥१॥**
आ । धेनवः । पयसा । तूर्णि०अर्थाः । अमर्द्धन्तीः ।
उप । नः । यन्तु । मध्वा ॥ महः । राये । बृहतीः ।
सप्त । विप्रः । मयः२भुवः । जरिता । जोहवीति ॥१॥

आ सुष्टुती नमसा वर्त्तयध्यै द्यावा वाजाय पृथिवी ऽअमृध्रे ।
पिता माता मधुवचाः सुहस्ता भरेभरे नो यशसावविष्टाम् ॥२॥
आ । सु०स्तुती । नमसा । वर्त्तयध्यै । द्यावा । वाजाय ।
पृथिवी इति । अमृध्रे इति ॥ पिता । माता । मधु०वचाः ।
सु०हस्ता । भरे०भरे । नः । यशसौ । अविष्टाम् ॥२॥

अध्वर्यवश्चकृवांसो मधूनि प्र वायवे भरत चारु शुक्रम् ।
होतेव नः प्रथमः पाह्यस्य देव मध्वो ररिमा ते मदाय ॥३॥
अध्वर्यवः । चकृ०वांसः । मधूनि । प्र । वायवे । भरत ।
चारु । शुक्रम् ॥ होताऽइव । नः । प्रथमः । पाहि ।
अस्य । देव । मध्वः । ररिम । ते । मदाय ॥३॥

दश क्षिपो युञ्जते बाहू ऽअद्रिं सोमस्य या शमितारा सुहस्ता ।
मध्वो रसं सुगभस्तिर्गिरिष्ठां चनिश्चदहुदुहे शुक्रमंशुः ॥४॥
दश । क्षिपः । युञ्जते । बाहू इति । अद्रिम् । सोमस्य ।
या । शमितारा । सु०हस्ता ॥ मध्वः । रसम् । सु०गभस्तिः ।
गिरि०स्थाम् । चनिश्चदत् । दुदुहे । शुक्रम् । अंशुः ॥४॥

असावि ते जुजुषाणाय सोमः क्रत्वे दक्षाय बृहते मदाय ।
हरी रथे सुधुरा योगे ऽअर्वागिन्द्र प्रिया कृणुहि हूयमानः ॥५॥ (२०)
असावि । ते । जुजुषाणाय । सोमः । क्रत्वे । दक्षाय ।
बृहते । मदाय ॥ हरी इति । रथे । सु०धुरा । योगे ।
अर्वाक् । इन्द्र । प्रिया । कृणुहि । हूयमानः ॥५॥

आ नो महीमरमतिं सजोषा ग्नां देवीं नमसा रातहव्याम् ।
मधोर्मदाय बृहतीमृतज्ञामाग्नेद वह पथिभिर्देवयानैः ॥६॥

आ । नः । महीम् । अरमतिम् । सऽजोषाः । ग्नाम् ।
देवीम् । नमसा । रातऽहव्याम् ॥ मधोः । मदाय । बृहतीम् ।
ऋतऽज्ञाम् । आ । अग्ने । वह । पथिऽभिः । देवऽयानैः ॥६॥

अञ्जन्ति यं प्रथयन्तो न विप्रा वपावन्तं नाग्निना तपन्तः ।
पितुर्न पुत्र उपसि प्रेष्ठ आ घर्मो अग्निमृतयन्नसादि ॥७॥
अञ्जन्ति । यम् । प्रथयन्तः । न । विप्राः । वपाऽवन्तम् ।
न । अग्निना । तपन्तः ॥ पितुः । न । पुत्रः । उपसि ।
प्रेष्ठः । आ । घर्मः । अग्निम् । ऋतयन् । असादि ॥७॥

अच्छा मही बृहती शंतमा गीर्दूतो न गन्त्वश्विना हुवध्यै ।
मयोभुवा सरथा यातमर्वाग्गन्तं निधिं धुरमाणिर्न नाभिम् ॥८॥
अच्छ । मही । बृहती । शम्ऽतमा । गीः । दूतः । न । गन्तु ।
अश्विना । हुवध्यै ॥ मयःऽभुवा । सऽरथा । आ । यातम् ।
अर्वाक् । गन्तम् । निऽधिम् । धुरम् । आणिः । न । नाभिम् ॥८॥

प्र तव्यसो नमउक्तिं तुरस्याहं पूष्ण उत वायोरदिक्षि ।
या राधसा चोदितारा मतीनां या वाजस्य द्रविणोदा उत त्मन् ॥९॥
प्र । तव्यसः । नमःऽउक्तिम् । तुरस्य । अहम् । पूष्णः ।
उत । वायोः । अदिक्षि ॥ या । राधसा । चोदितारा ।
मतीनाम् । या । वाजस्य । द्रविणःऽदौ । उत । त्मन् ॥९॥

आ नामभिर्मरुतो वक्षि विश्वाना रूपेभिर्जातवेदो हुवानः ।
यज्ञं गिरो जरितुः सुष्टुतिं च विश्वे गन्त मरुतो विश्व ऊती ॥१०॥ ( २१ )
आ । नामऽभिः । मरुतः । वक्षि । विश्वान् । आ । रूपेभिः ।
जातऽवेदः । हुवानः ॥ यज्ञम् । गिरः । जरितुः । सुऽस्तुतिम् ।
च । विश्वे । गन्त । मरुतः । विश्वे । ऊती ॥१०॥

**आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञम् ।**
**हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥११॥**
आ । नः । दिवः । बृहतः । पर्वतात् । आ । सरस्वती ।
यजता । गन्तु । यज्ञम् ॥ हवम् । देवी । जुजुषाणा ।
घृताची । शग्माम् । नः । वाचम् । उशती । शृणोतु ॥११॥

**आ वेधसं नीलपृष्ठं बृहन्तं बृहस्पतिं सदने सादयध्वम् ।**
**सादद्योनिं दम ऽआ दीदिवांसं हिरण्यवर्णमरुषं सपेम ॥१२॥**
आ । वेधसम् । नील०पृष्ठम् । बृहन्तम् । बृहस्पतिम् ।
सदने । सादयध्वम् ॥ सादत्०योनिम् । दमे । आ ।
दीदि०वांसम् । हिरण्य०वर्णम् । अरुषम् । सपेम ॥१२॥

**आ धर्णसिर्बृहद्दिवो रराणो विश्वेभिर्गन्त्वोमभिर्हुवानः ।**
**ग्ना वसान ऽओषधीरमृध्रस्त्रिधातुशृङ्गो वृषभो वयोधाः ॥१३॥**
आ । धर्णसिः । बृहत्०दिवः । रराणः । विश्वेभिः ।
गन्तु । ओम०भिः । हुवानः ॥ ग्नाः । वसानः । ओषधीः ।
अमृध्रः । त्रिधातु०शृङ्गः । वृषभः । वयः२धाः ॥१३॥

**मातुष्पदे परमे शुक्र ऽआयोर्विपन्यवो रास्पिरासो ऽअग्मन् ।**
**सुशेव्यं नमसा रातहव्याः शिशुं मृजन्त्यायवो न वासे ॥१४॥**
मातुः । पदे । परमे । शुक्रे । आयोः । विपन्यवः ।
रास्पिरासः । अग्मन् ॥ सु०शेव्यम् । नमसा । रात०हव्याः ।
शिशुम् । मृजन्ति । आयवः । न । वासे ॥१४॥

**बृहद्वयो बृहते तुभ्यमग्ने धियाजुरो मिथुनासः सचन्त ।**
**देवोदेवः सुहवो भूतु मह्यं मा नो माता पृथिवी दुर्मतौ धात् ॥१५॥**

बृहत् । वयः । बृहते । तुभ्यम् । अग्ने । धिया०जुरः ।
मिथुनासः । सचन्त ॥ देवः२देवः । सु०हवः । भूतु ।
मह्यम् । मा । नः । माता । पृथिवी । दुः२मतौ । धात् ॥१५॥

**उरौ देवा ऽअनिबाधे स्याम ॥१६॥**
उरौ । देवाः । अनि०बाधे । स्याम ॥१६॥

**समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।**
**आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥१७॥ ( २२ ) [ २८० ]**
सम् । अश्विनोः । अवसा । नूतनेन । मयः२भुवा ।
सु०प्रनीती । गमेम ॥ आ । नः । रयिम् । वहतम् । आ ।
उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥१७॥

# ( ४४ )

१६ काश्यपोऽवत्सारः ( १० क्षत्र-मनस-एवावद-यजत-सध्रि-अवत्साराः, ११ विश्ववार-यजत- मायी-अवत्साराः, १२ अवत्सारेण सह सदापृण-यजत-बाहुवृक्त-श्रुतवित्-तर्याः, १३ सुतंभरश्च ) । विश्वे देवाः । जगती, १४-१६ त्रिष्टुप् ।

**तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ।**
**प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्द्धसे ॥१॥**
तम् । प्रत्न०था । पूर्व०था । विश्व०था । इम्०अथा । ज्येष्ठ०तातिम् ।
बर्हि०सदम् । स्वः२विदम् ॥ प्रतीचीनम् । वृजनम् । दोहसे ।
गिरा । आशुम् । जयन्तम् । अनु । यासु । वर्द्धसे ॥१॥

**श्रिये सुदृशीरुपरस्य याः स्वर्विरोचमानः ककुभामचोदते ।**
**सुगोपा ऽअसि न दभाय सुक्रतो परो मायाभिर्ऋत ऽआस नाम ते ॥२॥**

श्रिये । सु०दृशीः । उपरस्य । याः । स्वः । वि०रोचमानः । ककुभाम् ।
अचोदते ॥ सु०गोपाः । असि । न । दभाय । सुक्रतो इति सु०क्रतो ।
परः । मायाभिः । ऋते । आस । नाम । ते ॥२॥

अत्यं हविः सचते सच्च धातु चारिष्टगातुः स होता सहोभरिः ।
प्रसर्स्राणो ऽअनु बर्हिर्वृषा शिशुर्मध्ये युवाजरो विस्रुहा हितः ॥३॥
अत्यम् । हविः । सचते । सत् । च । धातु । च । अरिष्ट०गातुः ।
सः । होता । सहः०भरिः ॥ प्र०सर्स्राणः । अनु । बर्हिः । वृषा ।
शिशुः । मध्ये । युवा । अजरः । वि०स्रुहा । हितः ॥३॥

प्र व ऽएते सुयुजो यामन्निष्टये नीचीरमुष्मै यम्य ऽऋतावृधः ।
सुयन्तुभिः सर्वशासैरभीशुभिः क्रिविर्नामानि प्रवणे मुषायति ॥४॥
प्र । वः । एते । सु०युजः । यामन् । इष्टये । नीचीः ।
अमुष्मै । यम्यः । ऋत०वृधः ॥ सुयन्तु०भिः । सर्व०शासैः ।
अभीशु०भिः । क्रिविः । नामानि । प्रवणे । मुषायति ॥४॥

संजर्भुराणस्तरुभिः सुतेगृभं वयाकिनं चित्तगर्भासु सुस्वरुः ।
धारवाकेष्वृजुगाथ शोभसे वर्द्धस्व पत्नीरभि जीवो ऽअध्वरे ॥५॥ ( २३ )
सम्०जर्भुराणः । तरु०भिः । सुते०गृभम् । वयाकिनम् ।
चित्त०गर्भासु । सु०स्वरुः ॥ धार०वाकेषु । ऋजु०गाथ ।
शोभसे । वर्द्धस्व । पत्नीः । अभि । जीवः । अध्वरे ॥५॥

यादृगेव ददृशे तादृगुच्यते सं च्छायया दधिरे सिध्रयाप्स्वा ।
महीमस्मभ्यमुरुषामुरु ज्रयो बृहत्सुवीरमनपच्युतं सहः ॥६॥
यादृक् । एव । ददृशे । तादृक् । उच्यते । सम् । च्छायया । दधिरे ।
सिध्रया । अप्०सु । आ ॥ महीम् । अस्मभ्यम् । उरु०साम् ।
उरु । ज्रयः । बृहत् । सु०वीरम् । अनप०च्युतम् । सहः ॥६॥

वेत्यग्रुर्जनिवान्वा ऽअति स्पृधः समर्यता मनसा सूर्यः कविः ।
घ्रंसं रक्षन्तं परि विश्वतो गयमस्माकं शर्म वनवत्स्वावसुः ॥७॥
वेति । अग्रुः । जनि०वान् । वै । अति । स्पृधः । स०मर्यता ।
मनसा । सूर्यः । कविः ॥ घ्रंसम् । रक्षन्तम् । परि । विश्वतः ।
गयम् । अस्माकम् । शर्म । वनवत् । स्व०वसुः ॥७॥

ज्यायांसमस्य यतुनस्य केतुन ऽऋषिस्वरं चरति यासु नाम ते ।
यादृश्मिन्धायि तमपस्यया विदद्य ऽउ स्वयं वहते सो ऽअरं करत् ॥८॥
ज्यायांसम् । अस्य । यतुनस्य । केतुना । ऋषि०स्वरम् । चरति ।
यासु । नाम । ते ॥ यादृश्मिन् । धायि । तम् । अपस्यया । विदत् ।
यः । ऊँ इति । स्वयम् । वहते । सः । अरम् । करत् ॥८॥

समुद्रमासामव तस्थे ऽअग्रिमा न रिष्यति सवनं यस्मिन्नायता ।
अत्रा न हार्दि क्रवणस्य रेजते यत्रा मतिर्विद्यते पूतबन्धनी ॥९॥
समुद्रम् । आसाम् । अव । तस्थे । अग्रिमा । न । रिष्यति ।
सवनम् । यस्मिन् । आ०यता ॥ अत्र । न । हार्दि । क्रवणस्य ।
रेजते । यत्र । मतिः । विद्यते । पूत०बन्धनी ॥९॥

स हि क्षत्रस्य मनसस्य चित्तिभिरेवावदस्य यजतस्य सध्रेः ।
अवत्सारस्य स्पृणवाम रण्वभिः शविष्ठं वाजं विदुषा चिदर्ध्यम् ॥१०॥ ( २४ )
सः । हि । क्षत्रस्य । मनसस्य । चित्ति०भिः । एव०वदस्य ।
यजतस्य । सध्रेः ॥ अव०त्सारस्य । स्पृणवाम । रण्व०भिः ।
शविष्ठम् । वाजम् । विदुषा । चित् । अर्ध्यम् ॥१०॥

श्येन ऽआसामदितिः कक्ष्यो३ मदो विश्ववारस्य यजतस्य मायिनः ।
समन्यमन्यमर्थयन्त्येतवे विदुर्विषाणं परिपानमन्ति ते ॥११॥

श्येनः । आसाम् । अदितिः । कक्ष्यः । मदः । विश्व०वारस्य ।
यजतस्य । मायिनः ॥ सम् । अन्यम्०अन्यम् । अर्थयन्ति ।
एतवे । विदुः । वि०सानम् । परि०पानम् । अन्ति । ते ॥११॥

**सदापृणो यजतो वि द्विषो वधीद्बाहुवृक्तः श्रुतवित्तर्यो वः सचा ।**
**उभा स वरा प्रत्येति भाति च यदीं गणं भजते सुप्रयावभिः ॥१२॥**
सदा०पृणः । यजतः । वि । द्विषः । वधीत् । बाहु०वृक्तः ।
श्रुत०वित् । तर्यः । वः । सचा ॥ उभा । सः । वरा । प्रति ।
एति । भाति । च । यत् । ईम् । गणम् । भजते । सुप्रयाव०भिः ॥१२॥

**सुतंभरो यजमानस्य सत्पतिर्विश्वासामूधः स धियामुदञ्चनः ।**
**भरद्धेनू रसवच्छिश्रिये पयोऽनुब्रुवाणो ऽअध्येति न स्वपन् ॥१३॥**
सुतम्०भरः । यजमानस्य । सत्०पतिः । विश्वासाम् । ऊधः । सः ।
धियाम् । उत्०अञ्चनः ॥ भरत् । धेनुः । रस०वत् । शिश्रिये ।
पयः । अनु०ब्रुवाणः । अधि । एति । न । स्वपन् ॥१३॥

**यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति ।**
**यो जागार तमयं सोम ऽआह तवाहमस्मि सख्ये न्योकाः ॥१४॥**
यः । जागार । तम् । ऋचः । कामयन्ते । यः । जागार । तम् ।
ऊँ इति । सामानि । यन्ति ॥ यः । जागार । तम् । अयम् ।
सोमः । आह । तव । अहम् । अस्मि । सख्ये । नि०ओकाः ॥१४॥

**अग्निर्जागार तमृचः कामयन्तेऽग्निर्जागार तमु सामानि यन्ति ।**
**अग्निर्जागार तमयं सोम ऽआह तवाहमस्मि सख्ये न्योकाः ॥१५॥**
अग्निः । जागार । तम् । ऋचः । कामयन्ते । अग्निः । जागार । तम् ।
ऊँ इति । सामानि । यन्ति ॥ अग्निः । जागार । तम् । अयम् । सोमः ।
आह । तव । अहम् । अस्मि । सख्ये । नि०ओकाः ॥१५॥

*जागर्षि त्वं भुवने जातवेदो जागर्षि यत्र यजते हविष्मान् ।
इदं हविः श्रद्दधानो जुहोमि तेन पासि गुह्यं नाम गोनाम् ॥१६॥ ( २५ ) [ २९५+१ ] = २९६
जागर्षि । त्वम् । भुवने । जात०वेदः । जागर्षि । यत्र ।
यजते । हविष्मान् ॥ इदम् । हविः । श्रत्०दधानः ।
जुहोमि । तेन । पासि । गुह्यम् । नाम । गोनाम् ॥१६॥

## ( ४५ ) [ अथ चतुर्थोऽनुवाकः ॥४॥ सू. ४५-५६

११ सदापृण आत्रेयः । विश्वे देवाः । त्रिष्टुप्, ९ पुरस्ताज्ज्योतिः ।

विदा दिवो विष्यन्नद्रिमुक्थैरायत्या ऽउषसो ऽअर्चिनो गुः ।
अपावृत व्रजिनीरुत्स्वर्गाद्वि दुरो मानुषीर्देव ऽआवः ॥१॥
विदाः । दिवः । वि०स्यन् । अद्रिम् । उक्थैः । आ०यत्याः ।
उषसः । अर्चिनः । गुः ॥ अप । अवृत । व्रजिनीः । उत् ।
स्वः । गात् । वि । दुरः । मानुषीः । देवः । आवरित्यावः ॥१॥

वि सूर्यो ऽअमतिं न श्रियं सादोर्वाद्गवां माता जानती गात् ।
धन्वर्णसो नद्य१ः खादोअर्णाः स्थूणेव सुमिता दृंहत द्यौः ॥२॥
वि । सूर्यः । अमतिम् । न । श्रियम् । सात् । आ । ऊर्वात् ।
गवाम् । माता । जानती । गात् ॥ धन्व०अर्णसः । नद्यः ।
खादः२अर्णाः । स्थूणाऽइव । सु०मिता । दृंहत । द्यौः ॥२॥

अस्मा ऽउक्थाय पर्वतस्य गर्भो महीनां जनुषे पूर्व्याय ।
वि पर्वतो जिहीत साधत द्यौराविवासन्तो दसयन्त भूम ॥३॥
अस्मै । उक्थाय । पर्वतस्य । गर्भः । महीनाम् ।
जनुषे । पूर्व्याय ॥ वि । पर्वतः । जिहीत । साधत ।
द्यौः । आ०विवासन्तः । दसयन्त । भूम ॥३॥

**सूक्तेभिर्वो वचोभिर्देवजुष्टैरिन्द्रा न्व१ग्नी ऽअवसे हुवध्यै ।**
**उक्थेभिर्हि ष्मा कवयः सुयज्ञा ऽआविवासन्तो मरुतो यजन्ति ॥४॥**
सु॰उक्तेभिः । वः । वचः॰भिः । देव॰जुष्टैः । इन्द्रा । नु ।
अग्नी इति । अवसे । हुवध्यै ॥ उक्थेभिः । हि । स्म ।
कवयः । सु॰यज्ञाः । आ॰विवासन्तः । मरुतः । यजन्ति ॥४॥

**एतो न्व१द्य सुध्यो३ भवाम प्र दुच्छुना मिनवामा वरीयः ।**
**आरे द्वेषांसि सनुतर्दधामायाम प्राञ्चो यजमानमच्छ ॥५॥ ( २६ )**
एतो इति । नु । अद्य । सु॰ध्यः । भवाम । प्र । दुच्छुनाः ।
मिनवाम । वरीयः ॥ आरे । द्वेषांसि । सनुतः । दधाम ।
अयाम । प्राञ्चः । यजमानम् । अच्छ ॥५॥

**एता धियं कृणवामा सखायोऽप या माताँ ऽऋणुत व्रजं गोः ।**
**यया मनुर्विशिशिप्रं जिगाय यया वणिग्वङ्कुरापा पुरीषम् ॥६॥**
आ । इत । धियम् । कृणवाम । सखायः । अप । या ।
माता । ऋणुत । व्रजम् । गोः ॥ यया । मनुः । विशि॰शिप्रम् ।
जिगाय । यया । वणिक् । वङ्कुः । आप । पुरीषम् ॥६॥

**अनूनोदत्र हस्तयतो ऽअद्रिरार्चन्येन दश मासो नवग्वाः ।**
**ऋतं यती सरमा गा ऽअविन्दद्विश्वानि सत्याङ्गिराश्चकार ॥७॥**
अनूनोत् । अत्र । हस्त॰यतः । अद्रिः । आर्चन् । येन ।
दश । मासः । नव॰ग्वाः ॥ ऋतम् । यती । सरमा । गाः ।
अविन्दत् । विश्वानि । सत्या । अङ्गिराः । चकार ॥७॥

**विश्वे ऽअस्या व्युषि माहिनायाः सं यद्गोभिरङ्गिरसो नवन्त ।**
**उत्स ऽआसां परमे सधस्थ ऽऋतस्य पथा सरमा विदद्गाः ॥८॥**

विश्वे । अस्याः । वि०उषि । माहिनायाः । सम् । यत् ।
गोभिः । अङ्गिरसः । नवन्त ॥ उत्सः । आसाम् । परमे ।
सध०स्थे । ऋतस्य । पथा । सरमा । विदत् । गाः ॥८॥

**आ सूर्यो यातु सप्ताश्वः क्षेत्रं यदस्योर्विया दीर्घयाथे ।**
**रघुः श्येनः पतयदन्धो ऽअच्छा युवा कविर्दीदयद्गोषु गच्छन् ॥९॥**
आ । सूर्यः । यातु । सप्त०अश्वः । क्षेत्रम् । यत् । अस्य ।
उर्विया । दीर्घ०याथे ॥ रघुः । श्येनः । पतयत् । अन्धः ।
अच्छ । युवा । कविः । दीदयत् । गोषु । गच्छन् ॥९॥

**आ सूर्यो ऽअरुहच्छुक्रमर्णोऽयुक्त यद्धरितो वीतपृष्ठाः ।**
**उद्ना न नावमनयन्त धीरा ऽआशृण्वतीरापो ऽअर्वागतिष्ठन् ॥१०॥**
आ । सूर्यः । अरुहत् । शुक्रम् । अर्णः । अयुक्त । यत् ।
हरितः । वीत०पृष्ठाः ॥ उद्ना । न । नावम् । अनयन्त ।
धीराः । आ०शृण्वतीः । आपः । अर्वाक् । अतिष्ठन् ॥१०॥

**धियं वो ऽअप्सु दधिषे स्वर्षां ययातरन्दश मासो नवग्वाः ।**
**अया धिया स्याम देवगोपा ऽअया धिया तुतुर्यामात्यंहः ॥११॥ ( २७ ) [ ३०७ ]**
धियम् । वः । अप्०सु । दधिषे । स्वः२साम् । यया । अतरन् ।
दश । मासः । नव०ग्वाः ॥ अया । धिया । स्याम । देव०गोपाः ।
अया । धिया । तुतुर्याम । अति । अंहः ॥११॥

# ( ४६ )

८ प्रतिक्षत्र आत्रेयः । विश्वे देवाः, ७-८ देवपत्न्यः । जगती, २, ८ त्रिष्टुप् ।

**हयो न विद्वाँ ऽअयुजि स्वयं धुरि तां वहामि प्रतरणीमवस्युवम् ।**
**नास्या वश्मि विमुचं नावृतं पुनर्विद्वान्पथः पुरएत ऽऋजु नेषति ॥१॥**

हर्यः । न । विद्वान् । अयुजि । स्वयम् । धुरि । ताम् । वहामि ।
प्र०तरणीम् । अवस्युवम् ॥ न । अस्याः । वश्मि । वि०मुचम् । न ।
आ०वृतम् । पुनः । विद्वान् । पथः । पुरः२एता । ऋजु । नेषति ॥१॥

**अग्न ऽइन्द्र वरुण मित्र देवाः शर्द्धः प्र यन्त मारुतोत विष्णो ।**
**उभा नासत्या रुद्रो ऽअध ग्नाः पूषा भगः सरस्वती जुषन्त ॥२॥**
अग्ने । इन्द्र । वरुण । मित्र । देवाः । शर्द्धः । प्र । यन्त ।
मारुत । उत । विष्णो इति ॥ उभा । नासत्या । रुद्रः ।
अध । ग्नाः । पूषा । भगः । सरस्वती । जुषन्त ॥२॥

**इन्द्राग्नी मित्रावरुणादितिं स्वः पृथिवीं द्यां मरुतः पर्वताँ ऽअपः ।**
**हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शंसं सवितारमूतये ॥३॥**
इन्द्राग्नी इति । मित्रावरुणा । अदितिम् । स्व१रिति स्वः । पृथिवीम् ।
द्याम् । मरुतः । पर्वतान् । अपः ॥ हुवे । विष्णुम् । पूषणम् ।
ब्रह्मणः । पतिम् । भगम् । नु । शंसम् । सवितारम् । ऊतये ॥३॥

**उत नो विष्णुरुत वातो ऽअस्रिधो द्रविणोदा ऽउत सोमो मयस्करत् ।**
**उत ऽऋभव ऽउत राये नो ऽअश्विनोत त्वष्टोत विभ्वानु मंसते ॥४॥**
उत । नः । विष्णुः । उत । वातः । अस्रिधः । द्रविणः२दा । उत ।
सोमः । मयः । करत् ॥ उत । ऋभवः । उत । राये । नः ।
अश्विना । उत । त्वष्टा । उत । विभ्वा । अनु । मंसते ॥४॥

**उत त्यन्नो मारुतं शर्द्ध ऽआ गमद्दिविक्षयं यजतं बर्हिरासदे ।**
**बृहस्पतिः शर्म पूषोत नो यमद्वरूथ्यं१ वरुणो मित्रो ऽअर्यमा ॥५॥**
उत । त्यम् । नः । मारुतम् । शर्द्धः । आ । गमत् । दिवि०क्षयम् ।
यजतम् । बर्हिः । आ०सदे ॥ बृहस्पतिः । शर्म । पूषा । उत ।
नः । यमत् । वरूथ्यम् । वरुणः । मित्रः । अर्यमा ॥५॥

**उत त्ये नः पर्वतासः सुशस्तयः सुदीतयो नद्य१स्त्रामणे भुवन् ।**
**भगो विभक्ता शवसावसा गमदुरुव्यचा ऽअदितिः श्रोतु मे हवम् ॥६॥**
उत । त्ये । नः । पर्वतासः । सु॰शस्तयः । सु॰दीतयः । नद्यः ।
त्रामणे । भुवन् ॥ भगः । वि॰भक्ता । शवसा । अवसा । आ ।
गमत् । उरु॰व्यचाः । अदितिः । श्रोतु । मे । हवम् ॥६॥

**देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।**
**याः पार्थिवासो या ऽअपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥७॥**
देवानाम् । पत्नीः । उशतीः । अवन्तु । नः । प्र । अवन्तु । नः ।
तुजये । वाज॰सातये ॥ याः । पार्थिवासः । याः । अपाम् । अपि ।
व्रते । ताः । नः । देवीः । सु॰हवाः । शर्म । यच्छत ॥७॥

**उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य१ग्नाय्यश्विनी राट् ।**
**आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऽऋतुर्जनीनाम् ॥८॥ (२८) [३१५]**
उत । ग्नाः । व्यन्तु । देव॰पत्नीः । इन्द्राणी । अग्नायी ।
अश्विनी । राट् ॥ आ । रोदसी इति । वरुणानी ।
शृणोतु । व्यन्तु । देवीः । यः । ऋतुः । जनीनाम् ॥८॥

॥ इति चतुर्थाष्टके द्वितीयोऽध्यायः ॥ २ ॥

# द्वितीयाध्यायस्य मन्त्रवर्गानुक्रमणी

म॒हि॑ म॒हे त॒वसे॑ ॥१॥

प॒पृक्षेण्य॑मिन्द्र॒ ॥२॥

अजा॑तशत्रुम॒जरा॒ ॥३॥

वि॒त्वक्षेण॒ः सम॑ृतौ ॥४॥

यस्ते॒ साधि॒ष्ठोऽव॑स॒ ॥ ५॥

त्वामिद् वृ॑त्रहन्तम॒ ॥६॥

स आ ग॑म॒दिन्द्रो॒ ॥७॥

सं भा॒नुनो यतते॒ ॥८॥

उ॒रोष्ट॑ इन्द्र॒ ॥९॥

यदि॑न्द्र चित्र मे॒हना ॥१०॥

आ या॒ह्यद्रि॑भिः ॥११॥

स्व॑र्भा॒नोर॒ध ॥१२॥

को नु वां॑ मित्रावरुणा ॥१३॥

प्र वो॑ वा॒युं र॑थयुजं ॥१४॥

क॒था म॒हे रु॒द्रिया॑य ॥१५॥

क॒था दा॑शेम॒ ॥१६॥

प्र शंत॑मा॒ वरु॑णं॒ ॥१७॥

म॒रुत्व॑तो॒ अप्र॑तीतस्य ॥१८॥

तमु॑ ष्टुहि॒ यः स्वि॒षु ॥१९॥

आ धे॒नव॒ः पय॑सा॒ ॥२०॥

आ नो॑ म॒हीम॒रम॑तिं ॥२१॥

आ नो॑ दि॒वो बृ॑ह॒तः ॥२२॥

तं प्र॒त्नथा॑ पू॒र्वथा॑ ॥२३॥

या॒दृगेव ददृ॑शे ॥२४॥

श्येन आ॑सामदि॑तिः ॥२५॥

वि॒दा दि॒वो वि॒ष्यन्न ॥२६॥

ए॒ता धियं॑ कृ॒णवा॑मा ॥२७॥

हयो॒ न वि॒द्वाँ अ॑युजि ॥२८॥

**॥ इति शाङ्खायनसंहितायां चतुर्थाष्टके द्वितीयोऽध्यायः ॥**

**( द्वितीयाध्याये वर्गाः २८, सूक्तानि १४, ऋचः १४६ + १ = १४७ )**

# ॥ चतुर्थाष्टके तृतीयोऽध्यायः॥

अथ तृतीयोऽध्यायः॥३॥ वर्गाः १-३१ ] [ पञ्चममण्डले सूक्तानि ४७-६२ ]

## ( ४७ )

७ प्रतिरथ आत्रेयः । विश्वे देवाः । त्रिष्टुप् ।

प्रयुञ्जती दिव एति ब्रुवाणा मही माता दुहितुर्बोधयन्ती ।
आविवासन्ती युवतिर्मनीषा पितृभ्य आ सदने जोहुवाना ॥१॥
प्र॰युञ्जती । दिवः । एति । ब्रुवाणा । मही । माता ।
दुहितुः । बोधयन्ती ॥ आ॰विवासन्ती । युवतिः ।
मनीषा । पितृ॰भ्यः । आ । सदने । जोहुवाना ॥१॥

अजिरासस्तदप ईयमाना आतस्थिवांसो अमृतस्य नाभिम् ।
अनन्तास उरवो विश्वतः सीं परि द्यावापृथिवी यन्ति पन्थाः ॥२॥
अजिरासः । तत्॰अपः । ईयमानाः । आतस्थि॰वांसः ।
अमृतस्य । नाभिम् ॥ अनन्तासः । उरवः । विश्वतः ।
सीम् । परि । द्यावापृथिवी इति । यन्ति । पन्थाः ॥२॥

उक्षा समुद्रो अरुषः सुपर्णः पूर्वस्य योनिं पितुरा विवेश ।
मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसस्पात्यन्तौ ॥३॥
उक्षा । समुद्रः । अरुषः । सु॰पर्णः । पूर्वस्य । योनिम् ।
पितुः । आ । विवेश । मध्ये । दिवः । नि॰हितः । पृश्निः ।
अश्मा । वि । चक्रमे । रजसः । पाति । अन्तौ ॥३॥

चत्वार ईं बिभ्रति क्षेमयन्तो दश गर्भं चरसे धापयन्ते ।
त्रिधातवः परमा अस्य गावो दिवश्चरन्ति परि सद्यो अन्तान् ॥४॥

चत्वारः । ईम् । बिभ्रति । क्षेम०यन्तः । दश । गर्भम् ।
चरसे । धापयन्ते ॥ त्रि०धातवः । परमाः । अस्य ।
गावः । दिवः । चरन्ति । परि । सद्यः । अन्तान् ॥४॥

**इदं वपुर्निवचनं जनासश्चरन्ति यन्नद्यस्तस्थुरापः ।**
**द्वे यदीं बिभृतो मातुरन्ये ऽइहेह जाते यम्याइ सबन्धू ॥५॥**
इदम् । वपुः । नि०वचनम् । जनासः । चरन्ति । यत् । नद्यः ।
तस्थुः । आपः ॥ द्वे इति । यत् । ईम् । बिभृतः । मातुः ।
अन्ये इति। इह०इह । जाते इति । यम्या । सबन्धू इति स०बन्धू ॥५॥

**वि तन्वते धियो ऽअस्मा ऽअपांसि वस्त्रा पुत्राय मातरो वयन्ति ।**
**उपप्रक्षे वृषणो मोदमाना दिवस्पथा वध्वो यन्त्यच्छ ॥६॥**
वि । तन्वते । धियः । अस्मै । अपांसि । वस्त्रा ।
पुत्राय । मातरः । वयन्ति ॥ उप०प्रक्षे । वृषणः ।
मोदमानाः । दिवः । पथा । वध्वः । यन्ति । अच्छ ॥६॥

**तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम् ।**
**अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥७॥ (१) [३२२]**
तत् । अस्तु । मित्रावरुणा । तत् । अग्ने । शम् । योः ।
अस्मभ्यम् । इदम् । अस्तु । शस्तम् ॥ अशीमहि । गाधम् ।
उत । प्रति०स्थाम् । नमः । दिवे । बृहते । सादनाय ॥७॥

# (४८)

५ प्रतिभानुरात्रेयः । विश्वे देवाः । जगती ।

**कदु प्रियाय धाम्ने मनामहे स्वक्षत्राय स्वयशसे महे वयम् ।**
**आमेन्यस्य रजसो यदभ्र ऽआँ ऽअपो वृणाना वितनोति मायिनी ॥१॥**

कत् । ऊँ इति । प्रियाय । धाम्ने । मनामहे । स्व०क्षत्राय ।
स्व०यशसे । महे । वयम् ॥ आ०मेन्यस्य । रजसः । यत् ।
अभ्रे । आ । अपः । वृणाना । वि०तनोति । मायिनी ॥१॥

**ता ऽअत्नत वयुनं वीरवक्षणं समान्या वृतया विश्वमा रजः ।**
**अपो ऽअपाचीरपरा ऽअपेजते प्र पूर्वाभिस्तिरते देवयुर्जनः ॥२॥**
ताः । अत्नत । वयुनम् । वीर०वक्षणम् । समान्या । वृतया ।
विश्वम् । आ । रजः ॥ अपो इति । अपाचीः । अपराः ।
अप । ईजते । प्र । पूर्वाभिः । तिरते । देव०युः । जनः ॥२॥

**आ ग्रावभिरहन्येभिरक्तुभिर्वरिष्ठं वज्रमा जिघर्ति मायिनि ।**
**शतं वा यस्य प्रचरन्त्स्वे दमे संवर्तयन्तो वि च वर्तयन्नहा ॥३॥**
आ । ग्राव०भिः । अहन्येभिः । अक्तु०भिः । वरिष्ठम् । वज्रम् ।
आ । जिघर्ति । मायिनि ॥ शतम् । वा । यस्य । प्र०चरन् ।
स्वे । दमे । सम्०वर्तयन्तः । वि । च । वर्तयन् । अहा ॥३॥

**तामस्य रीतिं परशोरिव प्रत्यनीकमख्यं भुजे ऽअस्य वर्पसः ।**
**सचा यदि पितुमन्तमिव क्षयं रत्नं दधाति भरहूतये विशे ॥४॥**
ताम् । अस्य । रीतिम् । परशोःऽइव । प्रति । अनीकम् । अख्यम् ।
भुजे । अस्य । वर्पसः ॥ सचा । यदि । पितुमन्तम्ऽइव ।
क्षयम् । रत्नम् । दधाति । भर०हूतये । विशे ॥४॥

**स जिह्वया चतुरनीक ऽऋञ्जते चारु वसानो वरुणो यतन्नरिम् ।**
**न तस्य विद्म पुरुषत्वता वयं यतो भगः सविता दाति वार्यम् ॥५॥ ( २ )[ ३२७ ]**
सः । जिह्वया । चतुः२अनीकः । ऋञ्जते । चारु । वसानः ।
वरुणः । यतन् । अरिम् ॥ न । तस्य । विद्म । पुरुष०त्वता ।
वयम् । यतः । भगः । सविता । दाति । वार्यम् ॥५॥

# ( ४९ )

५ प्रतिप्रभ आत्रेयः, (५ तृणपाणिः) । विश्वेदेवाः । त्रिष्टुप् ।

**देवं वो ऽअद्य सवितारमेषे भगं च रत्नं विभजन्तमायोः ।**

**आ वां नरा पुरुभुजा ववृत्यां दिवेदिवे चिदश्विना सखीयन् ॥१॥**

देवम् । वः । अद्य । सवितारम् । आ । ईषे । भगम् । च ।
रत्नम् । वि॰भजन्तम् । आयोः ॥ आ । वाम् । नरा । पुरु॰भुजा ।
ववृत्याम् । दिवे॰दिवे । चित् । अश्विना । सखि॰यन् ॥१॥

**प्रति प्रयाणमसुरस्य विद्वान्त्सूक्तैर्देवं सवितारं दुवस्य ।**

**उप ब्रुवीत नमसा विजानञ्ज्येष्ठं च रत्नं विभजन्तमायोः ॥२॥**

प्रति । प्र॰यानम् । असुरस्य । विद्वान् । सु॰उक्तैः । देवम् ।
सवितारम् । दुवस्य ॥ उप । ब्रुवीत । नमसा । वि॰जानन् ।
ज्येष्ठम् । च । रत्नम् । वि॰भजन्तम् । आयोः ॥२॥

**अदत्रया दयते वार्याणि पूषा भगो ऽअदितिर्वस्त ऽउस्रः ।**

**इन्द्रो विष्णुर्वरुणो मित्रो ऽअग्निरहानि भद्रा जनयन्त दस्माः ॥३॥**

अदत्र॰या । दयते । वार्याणि । पूषा । भगः । अदितिः ।
वस्ते । उस्रः ॥ इन्द्रः । विष्णुः । वरुणः । मित्रः ।
अग्निः । अहानि । भद्रा । जनयन्त । दस्माः ॥३॥

**तन्नो ऽअनर्वा सविता वरूथं तत्सिन्धव ऽइषयन्तो ऽअनु ग्मन् ।**

**उप यद्वोचे ऽअध्वरस्य होता रायः स्याम पतयो वाजरत्नाः ॥४॥**

तत् । नः । अनर्वा । सविता । वरूथम् । तत् । सिन्धवः ।
इषयन्तः । अनु । ग्मन् ॥ उप । यत् । वोचे । अध्वरस्य ।
होता । रायः । स्याम । पतयः । वाज॰रत्नाः ॥४॥

**प्र ये वसुभ्य ईवदा नमो दुर्ये मित्रे वरुणे सूक्तवाचः ।**

**अवैत्वभ्वं कृणुता वरीयो दिवस्पृथिव्योरवसा मदेम ॥५॥ (३) [ ३३२ ]**

प्र । ये । वसुऽभ्यः । ईवत् । आ । नमः । दुः । ये । मित्रे ।

वरुणे । सूक्तऽवाचः ॥ अव । एतु । अभ्वम् । कृणुत ।

वरीयः । दिवःऽपृथिव्योः । अवसा । मदेम ॥५॥

# अथ खिलम्

२ प्रतिप्रभ आत्रेयः (तृणपाणिः) । विश्वे देवाः । अनुष्टुप् ।

*** सूक्तान्ते तृणान्यग्नावरण्ये वोदकेऽपि वा ।**

**यत्स्तृणैरध्ययनं तदधीतं तृणानि भवते भव ॥१॥**

सूक्तऽअन्ते । तृणानि । अग्नौ । अरण्ये । वा ।

उदके । अपि । वा ॥ यत् । स्तृणैः । अधिऽअयनम् ।

तत् । अधिऽइतम् । तृणानि । भवते । भव ॥१॥

***वापीकूपतडागानां समुद्रं गच्छ स्वाहा ॥२॥ (७)**

वापीकूपत । डागानाम् । समुद्रम् । गच्छ । स्वाहा ॥२॥

## (५०)

५ स्वस्त्यात्रेयः । विश्वे देवाः । अनुष्टुप्, ५ पङ्क्तिः ।

**विश्वो देवस्य नेतुर्मर्त्तो वुरीत सख्यम् ।**

**विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे ॥१॥**

विश्वः । देवस्य । नेतुः । मर्त्तः । वुरीत । सख्यम् ॥

विश्वः । राये । इषुध्यति । द्युम्नम् । वृणीत । पुष्यसे ॥१॥

**ते ते देव नेतर्ये चेमाँ अनुशसे ।**

**ते राया ते ह्याऽपृचे सचेमहि सचथ्यैः ॥२॥**

ते । ते । देव । नेतः । ये । च । इमान् । अनु०शसे ॥
ते । राया । ते । हि । आ०पृचे । सचेमहि । सचथ्यैः ॥२॥

अतो न ऽआ नॄनतिथीनतः पत्नीर्दशस्यत ।
आरे विश्वं पथेष्ठां द्विषो युयोतु यूयुविः ॥३॥
अतः । नः । आ । नॄन् । अतिथीन् । अतः । पत्नीः । दशस्यत ॥
आरे । विश्वम् । पथे०स्थाम् । द्विषः । युयोतु । यूयुविः ॥३॥

यत्र वह्निरभिहितो दुद्रवद्द्रोण्यः पशुः ।
नृमणा वीरपस्त्योऽर्णा धीरेव सनिता ॥४॥
यत्र । वह्निः । अभि०हितः । दुद्रवत् । द्रोण्यः । पशुः ॥
नृ०मनाः । वीर०पस्त्यः । अर्णाः । धीराऽइव । सनिता ॥४॥

एष ते देव नेता रथस्पतिः शं रयिः ।
शं राये शं स्वस्तय ऽइषःस्तुतो मनामहे देवस्तुतो मनामहे ॥५॥ (४) [ ३३७ ]
एषः । ते । देव । नेतरिति । रथःपतिः । शम् ।
रयिः ॥ शम् । राये । शम् । स्वस्तये । इषः२स्तुतः ।
मनामहे । देव०स्तुतः । मनामहे ॥५॥

## ( ५१ )

१५ स्वस्त्यात्रेयः । विश्वे देवाः, ४, ६-७ इन्द्रवायू, ५ वायुः । १-४ गायत्री, ५-१० उष्णिक्, ११-१३ जगतीत्रिष्टुब्वा, १४-१५ अनुष्टुप् ।

अग्ने सुतस्य पीतये विश्वैरूमेभिरा गहि ।
देवेभिर्हव्यदातये ॥१॥
अग्ने । सुतस्य । पीतये । विश्वैः । ऊमेभिः । आ । गहि ॥
देवेभिः । हव्य०दातये ॥१॥

**ऋतधीतय ऽआ गत सत्यधर्माणो ऽअध्वरम् ।**
**अग्नेः पिबत जिह्वया ॥२॥**
ऋत०धीतयः । आ । गत । सत्य०धर्माणः । अध्वरम् ॥
अग्नेः । पिबत । जिह्वया ॥२॥

**विप्रेभिर्विप्र सन्त्य प्रातर्यावभिरा गहि ।**
**देवेभिः सोमपीतये ॥३॥**
विप्रेभिः । विप्र । सन्त्य । प्रातर्याव०भिः । आ । गहि ॥
देवेभिः । सोम०पीतये ॥३॥

**अयं सोमश्चमू सुतोऽमत्रे परि षिच्यते ।**
**प्रिय ऽइन्द्राय वायवे ॥४॥**
अयम् । सोमः । चमू इति । सुतः । अमत्रे । परि । सिच्यते ॥
प्रियः । इन्द्राय । वायवे ॥४॥

**वायवा याहि वीतये जुषाणो हव्यदातये ।**
**पिबा सुतस्यान्धसो ऽअभि प्रयः ॥५॥ ( ५ )**
वायो इति । आ । याहि । वीतये । जुषाणः । हव्य०दातये ॥
पिब । सुतस्य । अन्धसः । अभि । प्रयः ॥५॥

**इन्द्रश्च वायवेषां सुतानां पीतिमर्हथः ।**
**ताञ्जुषेथामरेपसावभि प्रयः ॥६॥**
इन्द्रः । च । वायो इति । एषाम् । सुतानाम् । पीतिम् । अर्हथः ॥
तान् । जुषेथाम् । अरेपसौ । अभि । प्रयः ॥६॥

सुता ऽइन्द्राय वायवे सोमासो दध्याशिरः ।
निम्नं न यन्ति सिन्धवोऽभि प्रयः ॥७॥
सुताः । इन्द्राय । वायवे । सोमासः । दधि॰आशिरः ॥
निम्नम् । न । यन्ति । सिन्धवः । अभि । प्रयः ॥७॥

सजूर्विश्वेभिर्देवेभिरश्विभ्यामुषसा सजूः ।
आ याह्यग्ने ऽअत्रिवत्सुते रण ॥८॥
स॰जूः । विश्वेभिः । देवेभिः । अश्वि॰भ्याम् । उषसा । स॰जूः ॥
आ । याहि । अग्ने । अत्रि॰वत् । सुते । रण ॥८॥

सजूर्मित्रावरुणाभ्यां सजूः सोमेन विष्णुना ।
आ याह्यग्ने ऽअत्रिवत्सुते रण ॥९॥
स॰जूः । मित्रावरुणाभ्याम् । स॰जूः । सोमेन । विष्णुना ॥
आ । याहि । अग्ने । अत्रि॰वत् । सुते । रण ॥९॥

सजूरादित्यैर्वसुभिः सजूरिन्द्रेण वायुना ।
आ याह्यग्ने ऽअत्रिवत्सुते रण ॥१०॥ (६)
स॰जूः । आदित्यैः । वसु॰भिः । स॰जूः । इन्द्रेण । वायुना ॥
आ । याहि । अग्ने । अत्रि॰वत् । सुते । रण ॥१०॥

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा ऽअसुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥११॥
स्वस्ति । नः । मिमीताम् । अश्विना । भगः । स्वस्ति ।
देवी । अदितिः । अनर्वणः ॥ स्वस्ति । पूषा । असुरः ।
दधातु । नः । स्वस्ति । द्यावापृथिवी इति । सु॰चेतुना ॥११॥

**स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।**
**बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय ऽआदित्यासो भवन्तु नः ॥१२॥**
स्वस्तये । वायुम् । उप । ब्रवामहै । सोमम् । स्वस्ति ।
भुवनस्य । यः । पतिः ॥ बृहस्पतिम् । सर्व॰गणम् ।
स्वस्तये । स्वस्तये । आदित्यासः । भवन्तु । नः ॥१२॥

**विश्वे देवा नो ऽअद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ।**
**देवा ऽअवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥१३॥**
विश्वे । देवाः । नः । अद्य । स्वस्तये । वैश्वानरः ।
वसुः । अग्निः । स्वस्तये ॥ देवाः । अवन्तु । ऋभवः ।
स्वस्तये । स्वस्ति । नः । रुद्रः । पातु । अंहसः ॥१३॥

**स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति ।**
**स्वस्ति न ऽइन्द्रश्चाग्निश्च स्वस्ति नो ऽअदिते कृधि ॥१४॥**
स्वस्ति । मित्रावरुणा । स्वस्ति । पथ्ये । रेवति ॥
स्वस्ति । नः । इन्द्रः । च । अग्निः । च ।
स्वस्ति । नः । अदिते । कृधि ॥१४॥

**स्वस्ति पन्थामनु चरेम सूर्याचन्द्रमसाविव ।**
**पुनर्ददताघ्नता जानता सं गमेमहि ॥१५॥ (७)** **[ ३५२ ]**
स्वस्ति । पन्थाम् । अनु । चरेम । सूर्याचन्द्रमसौऽइव ॥
पुनः । ददता । अघ्नता । जानता । सम् । गमेमहि ॥१५॥

# अथ खिलम्

२ स्वस्त्यात्रेयः । विश्वे देवाः । त्रिष्टुप् ।

*** स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् ।**

**असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवा रुहेम ॥१॥**

स्वस्ति॰अयनम् । तार्क्ष्यम् ।अरिष्ट॰नेमिम् । महत्॰भूतम् ।
वायसम् । देवतानाम् ॥ असुर॰घ्नम् । इन्द्र॰सखम् ।
समत्॰सु । बृहत् । यशः । नावम्ऽइव । आ । रुहेम ॥१॥

*** अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् ।**

**प्रयतपाणिः शरणं प्र पद्ये स्वस्ति संबाधेष्वभयं नो अस्तु ॥२॥ (९)**

अंहः२मुचम् । आङ्गिरसम् । गयम् । च । स्वस्ति । आत्रेयम् ।
मनसा । च तार्क्ष्यम् ॥ प्रयत॰पाणिः । शरणम् । प्र । पद्ये ।
स्वस्ति । सम्॰बाधेषु । अभयम् । नः । अस्तु ॥२॥

## (५२)

१७ श्यावाश्व आत्रेयः । मरुतः । अनुष्टुप्, ६, १६-१७ पङ्क्तिः ।

**प्र श्यावाश्व धृष्णुयार्चा मरुद्भिर्ऋक्वभिः ।**

**ये ऽअद्रोघमनुष्वधं श्रवो मदन्ति यज्ञियाः ॥१॥**

प्र । श्याव॰अश्व । धृष्णु॰या । अर्च । मरुत्॰भिः । ऋक्व॰भिः ।
ये । अद्रोघम् । अनु॰स्वधम् । श्रवः । मदन्ति । यज्ञियाः ॥१॥

**ते हि स्थिरस्य शवसः सखायः सन्ति धृष्णुया ।**

**ते यामन्ना धृषद्विनस्त्मना पान्ति शश्वतः ॥२॥**

ते । हि । स्थिरस्य । शवसः । सखायः । सन्ति । धृष्णु॰या ।
ते । यामन् । आ । धृषत्॰विनः । त्मना । पान्ति । शश्वतः ॥२॥

ते स्पन्द्रासो नोक्षणोऽति ष्कन्दन्ति शर्वरीः ।
मरुतामधा महो दिवि क्षमा च मन्महे ॥३॥
ते । स्पन्द्रासः । न । उक्षणः । अति । स्कन्दन्ति । शर्वरीः ॥
मरुताम् । अध । महः । दिवि । क्षमा । च । मन्महे ॥३॥

मरुत्सु वो दधीमहि स्तोमं यज्ञं च धृष्णुया ।
विश्वे ये मानुषा युगा पान्ति मर्त्यं रिषः ॥४॥
मरुत्ऽसु । वः । दधीमहि । स्तोमम् । यज्ञम् । च । धृष्णुऽया ।
विश्वे । ये । मानुषा । युगा । पान्ति । मर्त्यम् । रिषः ॥४॥

अर्हन्तो ये सुदानवो नरो ऽअसामिशवसः ।
प्र यज्ञं यज्ञियेभ्यो दिवो ऽअर्चा मरुद्भ्यः ॥५॥ (८)
अर्हन्तः । ये । सुऽदानवः । नरः । असामिऽशवसः ।
प्र । यज्ञम् । यज्ञियेभ्यः । दिवः । अर्च । मरुत्ऽभ्यः ॥५॥

आ रुक्मैरा युधा नर ऽऋष्वा ऽऋष्टीरसृक्षत ।
अन्वेनाँ ऽअह विद्युतो मरुतो जज्झतीरिव भानुरर्त त्मना दिवः ॥६॥
आ । रुक्मैः । आ । युधा । नरः । ऋष्वाः । ऋष्टीः ।
असृक्षत ॥ अनु । एनान् । अह । विऽद्युतः । मरुतः ।
जज्झतीःऽइव । भानुः । अर्त । त्मना । दिवः ॥६॥

ये वावृधन्त पार्थिवा य ऽउरावन्तरिक्ष ऽआ ।
वृजने वा नदीनां सधस्थे वा महो दिवः ॥७॥
ये । ववृधन्त । पार्थिवाः । ये । उरौ । अन्तरिक्षे । आ ॥
वृजने । वा । नदीनाम् । सधऽस्थे । वा । महः । दिवः ॥७॥

शर्द्धो मारुतमुच्छंस सत्यशवसमृभ्वसम् ।
उत स्म ते शुभे नरः प्र स्पन्द्रा युजत त्मना ॥८॥
शर्द्धः । मारुतम् । उत् । शंस । सत्य॰शवसम् । ऋभ्वसम् ।
उत । स्म । ते । शुभे । नरः । प्र । स्पन्द्राः । युजत । त्मना ॥८॥

उत स्म ते परुष्ण्यामूर्णा वसत शुन्ध्यवः ।
उत पव्या रथानामद्रिं भिन्दन्त्योजसा ॥९॥
उत । स्म । ते । परुष्ण्याम् । ऊर्णाः । वसत । शुन्ध्यवः ।
उत । पव्या । रथानाम् । अद्रिम् । भिन्दन्ति । ओजसा ॥९॥

आपथयो विपथयोऽन्तस्पथा ऽअनुपथाः ।
एतेभिर्मह्यं नामभिर्यज्ञं विष्टार ऽओहते ॥१०॥ (९)
आ॰पथयः । वि॰पथयः । अन्तः॰पथाः । अनु॰पथाः ।
एतेभिः । मह्यम् । नाम॰भिः । यज्ञम् । वि॰स्तारः । ओहते ॥१०॥

अधा नरो न्योहतेऽधा नियुत ऽओहते ।
अधा पारावता ऽइति चित्रा रूपाणि दर्श्या ॥११॥
अध । नरः । नि । ओहते । अध । नि॰युतः । ओहते ॥
अध । पारावताः । इति । चित्रा । रूपाणि । दर्श्या ॥११॥

छन्दःस्तुभः कुभन्यव ऽउत्समा कीरिणो नृतुः ।
ते मे के चिन्न तायव ऽऊमा ऽआसन्दृशि त्विषे ॥१२॥
छन्दः॰स्तुभः । कुभन्यवः । उत्सम् । आ । कीरिणः । नृतुः ॥
ते । मे । के । चित् । न । तायवः । ऊमाः । आसन् । दृशि । त्विषे ॥१२॥

य ऽऋष्वा ऽऋष्टिविद्युतः कवयः सन्ति वेधसः ।

तमृषे मारुतं गणं नमस्या रमया गिरा ॥१३॥

यः । ऋष्वाः । ऋष्टि०विद्युतः । कवयः । सन्ति । वेधसः ॥

तम् । ऋषे । मारुतम् । गणम् । नमस्य । रमय । गिरा ॥१३॥

अच्छ ऽऋषे मारुतं गणं दाना मित्रं न योषणा ।

दिवो वा धृष्णव ऽओजसा स्तुता धीभिरिषण्यत ॥१४॥

अच्छ । ऋषे । मारुतम् । गणम् । दाना । मित्रम् । न । योषणा ॥

दिवः । वा । धृष्णवः । ओजसा । स्तुताः । धीभिः । इषण्यत ॥१४॥

नू मन्वान ऽएषां देवाँ ऽअच्छा न वक्षणा ।

दाना सचेत सूरिभिर्यामश्रुतेभिरञ्जिभिः ॥१५॥

नु । मन्वानः । एषाम् । देवान् । अच्छ । न । वक्षणा ।

दाना । सचेत । सूरि०भिः । याम०श्रुतेभिः । अञ्जि०भिः ॥१५॥

प्र ये मे बन्ध्वेषे गां वोचन्त सूरयः पृश्निं वोचन्त मातरम् ।

अधा पितरमिष्मिणं रुद्रं वोचन्त शिक्वसः ॥१६॥

प्र । ये । मे । बन्धु०एषे । गाम् । वोचन्त । सूरयः । पृश्निम् । वोचन्त । मातरम् ॥

अध । पितरम् । इष्मिणम् । रुद्रम् । वोचन्त । शिक्वसः ॥१६॥

सप्त मे सप्त शाकिन ऽएकमेका शता ददुः ।

यमुनायामधि श्रुतमुद्राधो गव्यं मृजे नि राधो ऽअश्व्यं मृजे ॥१७॥ ( १० ) [ ३६९ ]

सप्त । मे । सप्त । शाकिनः । एकम्०एका । शता ।

ददुः ॥ यमुनायाम् । अधि । श्रुतम् । उत् । राधः ।

गव्यम् । मृजे । नि । राधः । अश्व्यम् । मृजे ॥१७॥

# ( ५३ )

१६ श्यावाश्व आत्रेयः। मरुतः। १, ५, १०-११, १५ ककुप्, २ बृहती, ३ अनुष्टुप्, ४ पुर उष्णिक्, ६-७, ९, १३-१४, १६ सतो बृहती, ८, १२ गायत्री।

को वेद जानमेषां को वा पुरा सुम्नेष्वास मरुताम् ।
यद्युयुज्रे किलास्यः ॥१॥
कः । वेद । जानम् । एषाम् । कः । वा । पुरा । सुम्नेषु । आस । मरुताम् ॥
यत् । युयुज्रे । किलास्यः ॥१॥

ऐतान्रथेषु तस्थुषः कः शुश्राव कथा ययुः ।
कस्मै सस्रुः सुदासे ऽअन्वापय ऽइळाभिर्वृष्टयः सह ॥२॥
आ । एतान् । रथेषु । तस्थुषः । कः । शुश्राव । कथा । ययुः ॥
कस्मै । सस्रुः । सु०दासे । अनु । आपयः । इळाभिः । वृष्टयः । सह ॥२॥

ते म ऽआहुर्य ऽआययुरुप द्युभिर्विभिर्मदे ।
नरो मर्या ऽअरेपस ऽइमान्पश्यन्निति ष्टुहि ॥३॥
ते । मे । आहुः । ये । आ०ययुः । उप । द्यु०भिः । वि०भिः । मदे ॥
नरः । मर्याः । अरेपसः । इमान् । पश्यन् । इति । स्तुहि ॥३॥

ये ऽअञ्जिषु ये वाशीषु स्वभानवः स्रक्षु रुक्मेषु खादिषु ।
श्राया रथेषु धन्वसु ॥४॥
ये । अञ्जिषु । ये । वाशीषु । स्व०भानवः । स्रक्षु । रुक्मेषु । खादिषु ॥
श्रायाः । रथेषु । धन्व०सु ॥४॥

युष्माकं स्मा रथाँ ऽअनु मुदे दधे मरुतो जीरदानवः ।
वृष्टी द्यावो यतीरिव ॥५॥ ( ११ )

युष्माकम् । स्म । रथान् । अनु । मुदे । दधे । मरुतः । जीरदानवः ॥
वृष्टी । द्यावः । यतीःऽइव ॥५॥

**आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः ।**
**वि पर्जन्यं सृजन्ति रोदसी ऽअनु धन्वना यन्ति वृष्टयः ॥६॥**
आ । यम् । नरः । सुऽदानवः । ददाशुषे । दिवः । कोशम् । अचुच्यवुः ॥
वि । पर्जन्यम् । सृजन्ति । रोदसी इति । अनु । धन्वना । यन्ति । वृष्टयः ॥६॥

**ततृदानाः सिन्धवः क्षोदसा रजः प्र सस्रुर्धेनवो यथा ।**
**स्यन्नाअश्वाइवाध्वनो विमोचने वि यद्वर्त्तन्त ऽएन्यः ॥७॥**
ततृदानाः । सिन्धवः । क्षोदसा । रजः । प्र । सस्रुः । धेनवः । यथा ॥
स्यन्नाः । अश्वाःऽइव । अध्वनः । विऽमोचने । वि । यत् । वर्त्तन्ते । एन्यः ॥७॥

**आ यात मरुतो दिव ऽआन्तरिक्षादमादुत ।**
**माव स्थात परावतः ॥८॥**
आ । यात । मरुतः । दिवः । आ । अन्तरिक्षात् । अमात् । उत ॥
मा । अव । स्थात । पराऽवतः ॥८॥

**मा वो रसानितभा कुभा क्रुमुर्मा वः सिन्धुर्नि रीरमत् ।**
**मा वः परि ष्ठात्सरयुः पुरीषिण्यस्मे ऽइत्सुम्नमस्तु वः ॥९॥**
मा । वः । रसा । अनितभा । कुभा । क्रुमुः । मा । वः ।
सिन्धुः । नि । रीरमत् ॥ मा । वः । परि । स्थात् । सरयुः ।
पुरीषिणी । अस्मे इति । इत् । सुम्नम् । अस्तु । वः ॥९॥

**तं वः शर्द्धं रथानां त्वेषं गणं मारुतं नव्यसीनाम् ।**
**अनु प्र यन्ति वृष्टयः ॥१०॥ ( १२ )**

तम् । वः । शर्द्धम् । रथानाम् । त्वेषम् । गणम् । मारुतम् । नव्यसीनाम् ॥
अनु । प्र । यन्ति । वृष्टयः ॥१०॥

शर्द्धंशर्द्धं व ऽएषां व्रातंव्रातं गणंगणं सुशस्तिभिः ।
अनु क्रामेम धीतिभिः ॥११॥
शर्द्धम्०शर्द्धम् । वः । एषाम् । व्रातम्०व्रातम् । गणम्०गणम् । सुशस्ति०भिः ॥
अनु । क्रामेम । धीति०भिः ॥११॥

कस्मा ऽअद्य सुजाताय रातहव्याय प्र ययुः ।
एना यामेन मरुतः ॥१२॥
कस्मै । अद्य । सु०जाताय । रात०हव्याय । प्र । ययुः ।
एना । यामेन । मरुतः ॥१२॥

येन तोकाय तनयाय धान्यं१ बीजं वहध्वे ऽअक्षितम् ।
अस्मभ्यं तद्धत्तन यद्व ऽईमहे राधो विश्वायु सौभगम् ॥१३॥
येन । तोकाय । तनयाय । धान्यम् । बीजम् । वहध्वे ।
अक्षितम् ॥ अस्मभ्यम् । तत् । धत्तन । यत् । वः ।
ईमहे । राधः । विश्व०आयु । सौभगम् ॥१३॥

अतीयाम निदस्तिरः स्वस्तिभिर्हित्वावद्यमरातीः ।
वृष्ट्वी शं योराप ऽउस्रि भेषजं स्याम मरुतः सह ॥१४॥
अति । इयाम । निदः । तिरः । स्वस्ति०भिः । हित्वा । अवद्यम् । अरातीः ॥
वृष्ट्वी । शम् । योः । आपः । उस्रि । भेषजम् । स्याम । मरुतः । सह ॥१४॥

सुदेवः समहासति सुवीरो नरो मरुतः स मर्त्यः ।
यं त्रायध्वे स्याम ते ॥१५॥

सु०देवः । समह । असति । सु०वीरः । नरः । मरुतः । सः । मर्त्यः ॥
यम् । त्रायध्वे । स्याम । ते ॥१५॥

स्तुहि भोजान्त्स्तुवतो ऽअस्य यामनि रणन्गावो न यवसे ।
यतः पूर्वाँ इव सखीँरनु ह्वय गिरा गृणीहि कामिनः ॥१६॥ (१३) [३८५]
स्तुहि । भोजान् । स्तुवतः । अस्य । यामनि ।
रणम् । गावः । न । यवसे ॥ यतः । पूर्वान्ऽइव ।
सखीन् । अनु । ह्वय । गिरा । गृणीहि । कामिनः ॥१६॥

## (५४)

१५ श्यावाश्व आत्रेयः । मरुतः । जगती, १४ त्रिष्टुप् ।

प्र शर्द्धाय मारुताय स्वभानव ऽइमां वाचमनजा पर्वतच्युते ।
घर्मस्तुभे दिव ऽआ पृष्ठयज्वने द्युम्नश्रवसे महि नृम्णमर्चत ॥१॥
प्र । शर्द्धाय । मारुताय । स्व०भानवे । इमाम् । वाचम् ।
अनज । पर्वत०च्युते ॥ घर्म०स्तुभे । दिवः । आ ।
पृष्ठ०यज्वने । द्युम्न०श्रवसे । महि । नृम्णम् । अर्चत ॥१॥

प्र वो मरुतस्तविषा ऽउदन्यवो वयोवृधो ऽअश्वयुजः परिज्रयः ।
सं विद्युता दधति वाशति त्रितः स्वरन्त्यापोऽवना परिज्रयः ॥२॥
प्र । वः । मरुतः । तविषाः । उदन्यवः । वयः॰वृधः ।
अश्व०युजः । परि०ज्रयः ॥ सम् । वि०द्युता । दधति ।
वाशति । त्रितः । स्वरन्ति । आपः । अवना । परि०ज्रयः ॥२॥

विद्युन्महसो नरो ऽअश्मदिद्यवो वातत्विषो मरुतः पर्वतच्युतः ।
अब्दया चिन्मुहुरा ह्लादुनीवृतः स्तनयदमा रभसा ऽउदोजसः ॥३॥

विद्युत्०महसः । नरः । अश्म०दिद्यवः । वात०त्विषः ।
मरुतः । पर्वत०च्युतः ॥ अब्द०या । चित् । मुहुः । आ ।
ह्रादुनि०वृतः । स्तनयत्०अमाः । रभसाः । उत्०ओजसः ॥३॥

**व्य१क्तून्रुद्रा व्यहानि शिक्वसो व्य१न्तरिक्षं वि रजांसि धूतयः ।**
**वि यदज्राँ ऽअजथ नाव ऽई यथा वि दुर्गाणि मरुतो नाह रिष्यथ ॥४॥**
वि । अक्तून् । रुद्राः । वि । अहानि । शिक्वसः । वि । अन्तरिक्षम् ।
वि । रजांसि । धूतयः ॥ वि । यत् । अज्रान् । अजथ । नावः ।
ईम् । यथा । वि । दुःऽगानि । मरुतः । न । अह । रिष्यथ ॥४॥

**तद्वीर्यं वो मरुतो महित्वनं दीर्घं ततान सूर्यो न योजनम् ।**
**एता न यामे ऽअगृभीतशोचिषोऽनश्वदां यन्न्ययातना गिरिम् ॥५॥ (१४)**
तत् । वीर्यम् । वः । मरुतः । महि०त्वनम् । दीर्घम् । ततान ।
सूर्यः । न । योजनम् ॥ एताः । न । यामे । अगृभीत०शोचिषः ।
अनश्व०दाम् । यत् । नि । अयातन । गिरिम् ॥५॥

**अभ्राजि शर्धो मरुतो यदर्णसं मोषथा वृक्षं कपनेव वेधसः ।**
**अध स्मा नो ऽअरमतिं सजोषसश्चक्षुरिव यन्तमनु नेषथा सुगम् ॥६॥**
अभ्राजि । शर्धः । मरुतः । यत् । अर्णसम् । मोषथ । वृक्षम् ।
कपनाऽइव । वेधसः ॥ अध । स्म । नः । अरमतिम् । स०जोषसः ।
चक्षुःऽइव । यन्तम् । अनु । नेषथ । सु०गम् ॥६॥

**न स जीयते मरुतो न हन्यते न स्रेधति न व्यथते न रिष्यति ।**
**नास्य राय ऽउप दस्यन्ति नोतय ऽऋषिं वा यं राजानं वा सुषूदथ ॥७॥**
न । सः । जीयते । मरुतः । न । हन्यते । न । स्रेधति । न ।
व्यथते । न । रिष्यति ॥ न । अस्य । रायः । उप । दस्यन्ति ।
न । ऊतयः । ऋषिम् । वा । यम् । राजानम् । वा । सुसूदथ ॥७॥

नियुत्वन्तो ग्रामजितो यथा नरोऽर्यमणो न मरुतः कबन्धिनः ।
पिन्वन्त्युत्सं यदिनासो ऽअस्वरन्व्युन्दन्ति पृथिवीं मध्वो ऽअन्धसा ॥८॥
नियुत्वन्तः । ग्राम०जितः । यथा । नरः । अर्यमणः । न ।
मरुतः । कबन्धिनः ॥ पिन्वन्ति । उत्सम् । यत् । इनासः ।
अस्वरन् । वि । उन्दन्ति । पृथिवीम् । मध्वः । अन्धसा ॥८॥

प्रवत्वतीयं पृथिवी मरुद्भ्यः प्रवत्वती द्यौर्भवति प्रयद्भ्यः ।
प्रवत्वतीः पथ्या ऽअन्तरिक्ष्याः प्रवत्वन्तः पर्वता जीरदानवः ॥९॥
प्रवत्वती । इयम् । पृथिवी । मरुत्०भ्यः । प्रवत्वती ।
द्यौः । भवति । प्रयत्०भ्यः ॥ प्रवत्वतीः । पथ्याः ।
अन्तरिक्ष्याः । प्रवत्वन्तः । पर्वताः । जीर०दानवः ॥९॥

यन्मरुतः सभरसः स्वर्णरः सूर्य ऽउदिते मदथा दिवो नरः ।
न वोऽश्वाः श्रथयन्ताह सिस्रतः सद्यो ऽअस्याध्वनः पारमश्नुथ ॥१०॥ ( १५ )
यत् । मरुतः । स०भरसः । स्वः२नरः । सूर्ये । उत्०इते ।
मदथ । दिवः । नरः ॥ न । वः । अश्वाः । श्रथयन्त । अह ।
सिस्रतः । सद्यः । अस्य । अध्वनः । पारम् । अश्नुथ ॥१०॥

अंसेषु व ऽऋष्टयः पत्सु खादयो वक्षःसु रुक्मा मरुतो रथे शुभः ।
अग्निभ्राजसो विद्युतो गभस्त्योः शिप्राः शीर्षसु वितता हिरण्ययीः ॥११॥
अंसेषु । वः । ऋष्टयः । पत्०सु । खादयः । वक्षः२सु ।
रुक्माः । मरुतः । रथे । शुभः ॥ अग्नि०भ्राजसः । वि०द्युतः ।
गभस्त्योः । शिप्राः । शीर्ष०सु । वि०तताः । हिरण्ययीः ॥११॥

तं नाकमर्यो ऽअगृभीतशोचिषं रुशत्पिप्पलं मरुतो वि धूनुथ ।
समच्यन्त वृजनातित्विषन्त यत्स्वरन्ति घोषं विततमृतायवः ॥१२॥

तम् । नाकम् । अर्यः । अगृभीत०शोचिषम् । रुशत् । पिप्पलम् ।
मरुतः । वि । धूनुथ ॥ सम् । अच्यन्त । वृजना । अतित्विषन्त ।
यत् । स्वरन्ति । घोषम् । वि०ततम् । ऋत०यवः ॥१२॥

**युष्मादत्तस्य मरुतो विचेतसो रायः स्याम रथ्योइ वयस्वतः ।**
**न यो युच्छति तिष्योइ यथा दिवोइऽस्मे रारन्त मरुतः सहस्रिणम् ॥१३॥**

युष्मा०दत्तस्य । मरुतः । वि०चेतसः । रायः । स्याम ।
रथ्यः । वयस्वतः ॥ न । यः । युच्छति । तिष्यः । यथा ।
दिवः । अस्मे इति । ररन्त । मरुतः । सहस्रिणम् ॥१३॥

**यूयं रयिं मरुतः स्पार्हवीरं यूयमृषिमवथ सामविप्रम् ।**
**यूयमर्वन्तं भरताय वाजं यूयं धत्थ राजानं श्रुष्टिमन्तम् ॥१४॥**

यूयम् । रयिम् । मरुतः । स्पार्ह०वीरम् । यूयम् । ऋषिम् ।
अवथ । साम०विप्रम् ॥ यूयम् । अर्वन्तम् । भरताय ।
वाजम् । यूयम् । धत्थ । राजानम् । श्रुष्टि०मन्तम् ॥१४॥

**तद्वो यामि द्रविणं सद्यऊतयो येना स्वर्ण ततनाम नॄँरभि ।**
**इदं सु मे मरुतो हर्यता वचो यस्य तरेम तरसा शतं हिमाः ॥१५॥ ( १६ ) [ ४०० ]**

तत् । वः । यामि । द्रविणम् । सद्यःऽऊतयः । येन । स्वः ।
न । ततनाम । नॄन् । अभि ॥ इदम् । सु । मे । मरुतः ।
हर्यत । वचः । यस्य । तरेम । शतम् । हिमाः ॥१५॥

## ( ५५ )

१० श्यावाश्व आत्रेयः । मरुतः । जगती, १० त्रिष्टुप् ।

**प्रयज्यवो मरुतो भ्राजदृष्टयो बृहद्वयो दधिरे रुक्मवक्षसः ।**
**ईयन्ते ऽअश्वैः सुयमेभिराशुभिः शुभं यातामनु रथा ऽअवृत्सत ॥१॥**

प्र०यज्यवः । मरुतः । भ्राजत्०ऋष्टयः । बृहत् । वयः ।
दधिरे । रुक्म०वक्षसः ॥ ईयन्ते । अश्वैः । सु०यमेभिः ।
आशु०भिः । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥१॥

**स्वयं दधिध्वे तविषीं यथा विद बृहन्महान्त ऽउर्विया वि राजथ ।**
**उतान्तरिक्षं ममिरे व्योजसा शुभं यातामनु रथा ऽअवृत्सत ॥२॥**

स्वयम् । दधिध्वे । तविषीम् । यथा । विद । बृहत् । महान्तः ।
उर्विया । वि । राजथ ॥ उत । अन्तरिक्षम् । ममिरे । वि ।
ओजसा । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥२॥

**साकं जाताः सुभ्वः साकमुक्षिताः श्रिये चिदा प्रतरं वावृधुर्नरः ।**
**विरोकिणः सूर्यस्येव रश्मयः शुभं यातामनु रथा ऽअवृत्सत ॥३॥**

साकम् । जाताः । सु०भ्वः । साकम् । उक्षिताः । श्रिये । चित् ।
आ । प्र०तरम् । ववृधुः । नरः ॥ वि०रोकिणः । सूर्यस्यऽइव ।
रश्मयः । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥३॥

**आभूषेण्यं वो मरुतो महित्वनं दिदृक्षेण्यं सूर्यस्येव चक्षणम् ।**
**उतो ऽअस्माँ ऽअमृतत्वे दधातन शुभं यातामनु रथा ऽअवृत्सत ॥४॥**

आ०भूषेण्यम् । वः । मरुतः । महि०त्वनम् । दिदृक्षेण्यम् ।
सूर्यस्यऽइव । चक्षणम् ॥ उतो इति । अस्मान् । अमृत०त्वे ।
दधातन । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥४॥

**उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।**
**न वो दस्रा ऽउप दस्यन्ति धेनवः शुभं यातामनु रथा ऽअवृत्सत ॥५॥ (१७)**

उत् । ईरयथ । मरुतः । समुद्रतः । यूयम् । वृष्टिम् ।
वर्षयथ । पुरीषिणः ॥ न । वः । दस्राः । उप । दस्यन्ति ।
धेनवः । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥५॥

**यदश्वान्धूर्षु पृषतीरयुग्ध्वं हिरण्ययान्प्रत्यत्काँ ऽअमुग्ध्वम् ।**

**विश्वा ऽइत्स्पृधो मरुतो व्यस्यथ शुभं यातामनु रथा ऽअवृत्सत ॥६॥**

यत् । अश्वान् । धूःरसु । पृषतीः । अयुग्ध्वम् । हिरण्ययान् । ?
प्रति । अत्कान् । अमुग्ध्वम् ॥ विश्वाः । इत् । स्पृधः । मरुतः ।
वि । अस्यथ । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥६॥

**न पर्वता न नद्यो वरन्त वो यत्राचिध्वं मरुतो गच्छथेदु तत् ।**

**उत द्यावापृथिवी याथना परि शुभं यातामनु रथा ऽअवृत्सत ॥७॥**

न । पर्वताः । न । नद्यः । वरन्त । वः । यत्र । अचिध्वम् ।
मरुतः । गच्छथ । इत् । ऊँ इति । तत् ॥ उत । द्यावापृथिवी इति ।
याथन । परि । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥७॥

**यत्पूर्व्यं मरुतो यच्च नूतनं यदुद्यते वसवो यच्च शस्यते ।**

**विश्वस्य तस्य भवथा नवेदसः शुभं यातामनु रथा ऽअवृत्सत ॥८॥**

यत् । पूर्व्यम् । मरुतः । यत् । च । नूतनम् । यत् । उद्यते ।
वसवः । यत् । च । शस्यते ॥ विश्वस्य । तस्य । भवथ ।
नवेदसः । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥८॥

**मृळत नो मरुतो मा वधिष्टनास्मभ्यं शर्म बहुलं वि यन्तन ।**

**अधि स्तोत्रस्य सख्यस्य गातन शुभं यातामनु रथा ऽअवृत्सत ॥९॥**

मृळत । नः । मरुतः । मा । वधिष्टन । अस्मभ्यम् । शर्म ।
बहुलम् । वि । यन्तन ॥ अधि । स्तोत्रस्य । सख्यस्य ।
गातन । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥९॥

**यूयमस्मान्नयत वस्यो ऽअच्छा निरंहतिभ्यो मरुतो गृणानाः ।**

**जुषध्वं नो हव्यदातिं यजत्रा वयं स्याम पतयो रयीणाम् ॥१०॥ ( १८ ) [ ४१० ]**

यूयम् । अस्मान् । नयत । वस्यः । अच्छ । निः ।
अंहतिऽभ्यः । मरुतः । गृणानाः ॥ जुषध्वम् । नः ।
हव्यऽदातिम् । यजत्राः । वयम् । स्याम । पतयः । रयीणाम् ॥१०॥

# ( ५६ )

९ श्यावाश्व आत्रेयः । मरुतः । बृहती, ३, ७ सतोबृहती ।

**अग्ने शर्धन्तमा गणं पिष्टं रुक्मेभिरञ्जिभिः ।**
**विशो अद्य मरुतामव ह्वये दिवश्चिद्रोचनादधि ॥१॥**
अग्ने । शर्धन्तम् । आ । गणम् । पिष्टम् । रुक्मेभिः । अञ्जिऽभिः ॥
विशः । अद्य । मरुताम् । अव । ह्वये । दिवः । चित् । रोचनात् । अधि ॥१॥

**यथा चिन्मन्यसे हृदा तदिन्मे जग्मुराशसः ।**
**ये ते नेदिष्ठं हवनान्यागमन्तान्वर्ध भीमसंदृशः ॥२॥**
यथा । चित् । मन्यसे । हृदा । तत् । इत् । मे । जग्मुः । आऽशसः ॥
ये । ते । नेदिष्ठम् । हवनानि । आऽगमन् । तान् । वर्ध । भीमऽसंदृशः ॥२॥

**मीळ्हुष्मतीव पृथिवी पराहता मदन्त्येत्यस्मदा ।**
**ऋक्षो न वो मरुतः शिमीवाँ अमो दुध्रो गौरिव भीमयुः ॥३॥**
मीळ्हुष्मतीऽइव । पृथिवी । पराऽहता । मदन्ती । एति । अस्मत् । आ ॥
ऋक्षः । न । वः । मरुतः । शिमीऽवान् । अमः । दुध्रः । गौःऽइव । भीमऽयुः ॥३॥

**नि ये रिणन्त्योजसा वृथा गावो न दुर्धुरः ।**
**अश्मानं चित्स्वर्यं१ पर्वतं गिरिं प्र च्यावयन्ति यामभिः ॥४॥**
नि । ये । रिणन्ति । ओजसा । वृथा । गावः । न । दुःऽधुरः ॥
अश्मानम् । चित् । स्वर्यम् । पर्वतम् । गिरिम् । प्र । च्यवयन्ति । यामऽभिः ॥४॥

उत्तिष्ठ नूनमेषां स्तोमैः समुक्षितानाम् ।
मरुतां पुरुतममपूर्व्यं गवां सर्गमिव ह्वये ॥५॥ (१९)
उत् । तिष्ठ । नूनम् । एषाम् । स्तोमैः । सम्ऽउक्षितानाम् ॥
मरुताम् । पुरुऽतमम् । अपूर्व्यम् । गवाम् । सर्गम्ऽइव । ह्वये ॥५॥

युङ्ग्ध्वं ह्यरुषी रथे युङ्ग्ध्वं रथेषु रोहितः ।
युङ्ग्ध्वं हरी ऽअजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे ॥६॥
युङ्ग्ध्वम् । हि । अरुषीः । रथे । युङ्ग्ध्वम् । रथेषु । रोहितः ॥
युङ्ग्ध्वम् । हरी इति । अजिरा । धुरि । वोळ्हवे । वहिष्ठा । धुरि । वोळ्हवे ॥६॥

उत स्य वाज्यरुषस्तुविष्वणिरिह स्म धायि दर्शतः ।
मा वो यामेषु मरुतश्चिरं करत्प्र तं रथेषु चोदत ॥७॥
उत । स्यः । वाजी । अरुषः । तुविऽस्वनिः । इह । स्म । धायि । दर्शतः ॥
मा । वः । यामेषु । मरुतः । चिरम् । करत् । प्र । तम् । रथेषु । चोदत ॥७॥

रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।
आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥८॥
रथम् । नु । मारुतम् । वयम् । श्रवस्युम् । आ । हुवामहे ॥
आ । यस्मिन् । तस्थौ । सुऽरणानि । बिभ्रती । सचा । मरुत्ऽसु । रोदसी ॥८॥

तं वः शर्द्धं रथेशुभं त्वेषं पनस्युमा हुवे ।
यस्मिन्त्सुजाता सुभगा महीयते सचा मरुत्सु मीळ्हुषी ॥९॥ (२०) [४१९]
तम् । वः । शर्द्धम् । रथेऽशुभम् । त्वेषम् । पनस्युम् । आ । हुवे ॥
यस्मिन् । सुऽजाता । सुऽभगा । महीयते । सचा । मरुत्ऽसु । मीळ्हुषी ॥९॥

## (५७) [-अथ पञ्चमोऽनुवाकः- ॥५॥ सू. ५७-७२

८ श्यावाश्व आत्रेयः । मरुतः । जगती, ७-८ त्रिष्टुप् ।

**आ रुद्रास ऽइन्द्रवन्तः सजोषसो हिरण्यरथाः सुवितायं गन्तन ।**
**इयं वो ऽअस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव ऽउत्सा ऽउदन्यवे ॥१॥**

आ । रुद्रासः । इन्द्र०वन्तः । स०जोषसः । हिरण्य०रथाः ।
सुवितायं । गन्तन ॥ इयम् । वः । अस्मत् । प्रति । हर्यते ।
मतिः । तृष्ण०जे । न । दिवः । उत्साः । उदन्यवे ॥१॥

**वाशीमन्त ऽऋष्टिमन्तो मनीषिणः सुधन्वान ऽइषुमन्तो निषङ्गिणः ।**
**स्वश्वाः स्थ सुरथाः पृश्निमातरः स्वायुधा मरुतो याथना शुभम् ॥२॥**

वाशी०मन्तः । ऋष्टि०मन्तः । मनीषिणः । सु०धन्वानः ।
इषु०मन्तः । निषङ्गिणः ॥ सु०अश्वाः । स्थ । सु०रथाः ।
पृश्नि०मातरः । सु०आयुधाः । मरुतः । याथन । शुभम् ॥२॥

**धूनुथ द्यां पर्वतान्दाशुषे वसु नि वो वना जिहते यामनो भिया ।**
**कोपयथ पृथिवीं पृश्निमातरः शुभे यदुग्राः पृषतीरयुग्ध्वम् ॥३॥**

धूनुथ । द्याम् । पर्वतान् । दाशुषे । वसु । नि । वः । वना ।
जिहते । यामनः । भिया ॥ कोपयथ । पृथिवीम् । पृश्नि०मातरः ।
शुभे । यत् । उग्राः । पृषतीः । अयुग्ध्वम् ॥३॥

**वातत्विषो मरुतो वर्षनिर्णिजो यमाइव सुसदृशः सुपेशसः ।**
**पिशङ्गाश्वा ऽअरुणाश्वा ऽअरेपसः प्रत्वक्षसो महिना द्यौरिवोरवः ॥४॥**

वात०त्विषः । मरुतः । वर्ष०निर्निजः । यमाःऽइव ।
सु०संदृशः । सु०पेशसः ॥ पिशङ्ग०अश्वाः । अरुण०अश्वाः ।
अरेपसः । प्र०त्वक्षसः । महिना । द्यौःऽइव । उरवः ॥४॥

पुरुद्रप्सा ऽअञ्जिमन्तः सुदानवस्त्वेषसंदृशो ऽअनवभ्रराधसः ।
सुजातासो जनुषा रुक्मवक्षसो दिवो ऽअर्का ऽअमृतं नाम भेजिरे ॥५॥ ( २१ )
पुरु०द्रप्साः । अञ्जि०मन्तः । सु०दानवः । त्वेष०संदृशः ।
अनवभ्र०राधसः ॥ सु०जातासः । जनुषा । रुक्म०वक्षसः ।
दिवः । अर्काः । अमृतम् । नाम । भेजिरे ॥५॥

ऋष्टयो वो मरुतो ऽअंसयोरधि सह ऽओजो बाह्वोर्वो बलं हितम् ।
नृम्णा शीर्षस्वायुधा रथेषु वो विश्वा वः श्रीरधि तनूषु पिपिशे ॥६॥
ऋष्टयः । वः । मरुतः । अंसयोः । अधि । सहः । ओजः ।
बाह्वोः । वः । बलम् । हितम् ॥ नृम्णा । शीर्ष०सु । आयुधा ।
रथेषु । वः । विश्वा । वः । श्रीः । अधि । तनूषु । पिपिशे ॥६॥

गोमदश्वावद्रथवत्सुवीरं चन्द्रवद्राधो मरुतो ददा नः ।
प्रशस्तिं नः कृणुत रुद्रियासो भक्षीय वोऽवसो दैव्यस्य ॥७॥
गो०मत् । अश्व०वत् । रथ०वत् । सु०वीरम् । चन्द्र०वत् ।
राधः । मरुतः । दद । नः ॥ प्र०शस्तिम् । नः । कृणुत ।
रुद्रियासः । भक्षीय । वः । अवसः । दैव्यस्य ॥७॥

हये नरो मरुतो मृळता नस्तुवीमघासो ऽअमृता ऽऋतज्ञाः ।
सत्यश्रुतः कवयो युवानो बृहद्गिरयो बृहदुक्षमाणाः ॥८॥ ( २२ ) [ ४२७ ]
हये । नरः । मरुतः । मृळत । नः । तुवि०मघासः ।
अमृताः । ऋत०ज्ञाः ॥ सत्य०श्रुतः । कवयः ।
युवानः । बृहत्०गिरयः । बृहत् । उक्षमाणाः ॥८॥

# ( ५८ )

८ श्यावाश्व आत्रेयः । मरुतः । त्रिष्टुप् ।

**तमु नूनं तविषीमन्तमेषां स्तुषे गणं मारुतं नव्यसीनाम् ।**
**य ऽआश्वश्वा ऽअमवद्वहन्त ऽउतेशिरे ऽअमृतस्य स्वराजः ॥१॥**
तम् । ऊँ इति । नूनम् । तविषीऽमन्तम् । एषाम् । स्तुषे ।
गणम् । मारुतम् । नव्यसीनाम् ॥ ये । आशुऽअश्वाः ।
अमऽवत् । वहन्ते । उत । ईशिरे । अमृतस्य । स्वऽराजः ॥१॥

**त्वेषं गणं तवसं खादिहस्तं धुनिव्रतं मायिनं दातिवारम् ।**
**मयोभुवो ये ऽअमिता महित्वा वन्दस्व विप्र तुविराधसो नॄन् ॥२॥**
त्वेषम् । गणम् । तवसम् । खादिऽहस्तम् । धुनिऽव्रतम् ।
मायिनम् । दातिऽवारम् ॥ मयःऽभुवः । ये । अमिताः ।
महिऽत्वा । वन्दस्व । विप्र । तुविऽराधसः । नॄन् ॥२॥

**आ वो यन्तूदवाहासो ऽअद्य वृष्टिं ये विश्वे मरुतो जुनन्ति ।**
**अयं यो ऽअग्निर्मरुतः समिद्ध ऽएतं जुषध्वं कवयो युवानः ॥३॥**
आ । वः । यन्तु । उदऽवाहासः । अद्य । वृष्टिम् । ये ।
विश्वे । मरुतः । जुनन्ति ॥ अयम् । यः । अग्निः ।
मरुतः । सम्ऽइद्धः । एतम् । जुषध्वम् । कवयः । युवानः ॥३॥

**यूयं राजानमिर्यं जनाय विभ्वतष्टं जनयथा यजत्राः ।**
**युष्मदेति मुष्टिहा बाहुजूतो युष्मत्सदश्वो मरुतः सुवीरः ॥४॥**
यूयम् । राजानम् । इर्यम् । जनाय । विभ्वऽतष्टम् ।
जनयथ । यजत्राः ॥ युष्मत् । एति । मुष्टिऽहा ।
बाहुऽजूतः । युष्मत् । सत्ऽअश्वः । मरुतः । सुऽवीरः ॥४॥

**अराइवेदचरमा ऽअहेव प्रप्र जायन्ते ऽअकवा महोभिः ।**
**पृश्नेः पुत्रा ऽउपमासो रभिष्ठाः स्वया मत्या मरुतः सं मिमिक्षुः ॥५॥**
अराःऽइव । इत् । अचरमाः । अहाऽइव । प्र०प्र । जायन्ते ।
अकवाः । महःऽभिः ॥ पृश्नेः । पुत्राः । उप०मासः ।
रभिष्ठाः । स्वया । मत्या । मरुतः । सम् । मिमिक्षुः ॥५॥

**यत्प्रायासिष्ट पृषतीभिरश्वैर्वीळुपविभिर्मरुतो रथेभिः ।**
**क्षोदन्त ऽआपो रिणते वनान्यवोस्रियो वृषभः क्रन्दतु द्यौः ॥६॥**
यत् । प्र । अयासिष्ट । पृषतीभिः । अश्वैः । वीळुपवि०भिः ।
मरुतः । रथेभिः ॥ क्षोदन्ते । आपः । रिणते ।
वनानि । अव । उस्रियः । वृषभः । क्रन्दतु । द्यौः ॥६॥

**प्रथिष्ट यामन्पृथिवी चिदेषां भर्तेव गर्भं स्वमिच्छवो धुः ।**
**वातान्ह्यश्वान्धुर्यायुयुज्रे वर्षं स्वेदं चक्रिरे रुद्रियासः ॥७॥**
प्रथिष्ट । यामन् । पृथिवी । चित् । एषाम् । भर्ताऽइव ।
गर्भम् । स्वम् । इत् । शवः । धुः ॥ वातान् । हि । अश्वान् ।
धुरि । आ०युयुज्रे । वर्षम् । स्वेदम् । चक्रिरे । रुद्रियासः ॥७॥

**हये नरो मरुतो मृळता नस्तुवीमघासो ऽअमृता ऽऋतज्ञाः ।**
**सत्यश्रुतः कवयो युवानो बृहद्गिरयो बृहदुक्षमाणाः ॥८॥ ( २३ ) [ ४३५ ]**
हये । नरः । मरुतः । मृळत । नः । तुवि०मघासः ।
अमृताः । ऋत०ज्ञाः ॥ सत्य०श्रुतः । कवयः ।
युवानः । बृहत्०गिरयः । बृहत् । उक्षमाणाः ॥८॥

# ( ५९ )

८ श्यावाश्व आत्रेयः । मरुतः । जगती, ८ त्रिष्टुप् ।

प्र वः स्पळक्रन्त्सुविताय दावनेऽर्चा दिवे प्र पृथिव्या ऽऋतं भरे ।
उक्षन्ते ऽअश्वान्तरुषन्त ऽआ रजोऽनु स्वं भानुं श्रथयन्ते ऽअर्णवैः ॥१॥
प्र । वः । स्पट् । अक्रन् । सुविताय । दावने । अर्च । दिवे ।
प्र । पृथिव्यै । ऋतम् । भरे ॥ उक्षन्ते । अश्वान् । तरुषन्ते ।
आ । रजः । अनु । स्वम् । भानुम् । श्रथयन्ते । अर्णवैः ॥१॥

अमादेषां भियसा भूमिरेजति नौर्न पूर्णा क्षरति व्यथिर्यती ।
दूरेदृशो ये चितयन्त ऽएमभिरन्तर्महे विदथे येतिरे नरः ॥२॥
अमात् । एषाम् । भियसा । भूमिः । एजति । नौः । न ।
पूर्णा । क्षरति । व्यथिः । यती ॥ दूरे०दृशः । ये । चितयन्ते ।
एम०भिः । अन्तः । महे । विदथे । येतिरे । नरः ॥२॥

गवामिव श्रियसे शृङ्गमुत्तमं सूर्यो न चक्षू रजसो विसर्जने ।
अत्याइव सुभ्वश्चारवः स्थन मर्याइव श्रियसे चेतथा नरः ॥३॥
गवाम्ऽइव । श्रियसे । शृङ्गम् । उत्०तमम् । सूर्यः । न ।
चक्षुः । रजसः । वि०सर्जने ॥ अत्याःऽइव । सु०भ्वः ।
चारवः । स्थन । मर्याःऽइव । श्रियसे । चेतथ । नरः ॥३॥

को वो महान्ति महतामुदश्नवत्कस्काव्या मरुतः को ह पौंस्या ।
यूयं ह भूमिं किरणं न रेजथ प्र यद्भरध्वे सुविताय दावने ॥४॥
कः । वः । महान्ति । महताम् । उत् । अश्नवत् । कः ।
काव्या । मरुतः । कः । ह । पौंस्या ॥ यूयम् । ह । भूमिम् ।
किरणम् । न । रेजथ । प्र । यत् । भरध्वे । सुविताय । दावने ॥४॥

**अश्वाइवेदरुषासः सबन्धवः शूराइव प्रयुधः प्रोत युयुधुः ।**
**मर्याइव सुवृधो वावृधुर्नरः सूर्यस्य चक्षुः प्र मिनन्ति वृष्टिभिः ॥५॥**

अश्वाःऽइव । इत् । अरुषासः । सऽबन्धवः । शूराःऽइव ।
प्रऽयुधः । प्र । उत । युयुधुः ॥ मर्याःऽइव । सुऽवृधः । ववृधुः ।
नरः । सूर्यस्य । चक्षुः । प्र । मिनन्ति । वृष्टिऽभिः ॥५॥

**ते ऽअज्येष्ठा ऽअकनिष्ठास ऽउद्भिदोऽमध्यमासो महसा वि वावृधुः ।**
**सुजातासो जनुषा पृश्निमातरो दिवो मर्या ऽआ नो ऽअच्छा जिगातन ॥६॥**

ते । अज्येष्ठाः । अकनिष्ठासः । उत्ऽभिदः । अमध्यमासः ।
महसा । वि । ववृधुः ॥ सुऽजातासः । जनुषा । पृश्निऽमातरः ।
दिवः । मर्याः । आ । नः । अच्छ । जिगातन ॥६॥

**वयो न ये श्रेणीः पप्तुरोजसान्तान्दिवो बृहतः सानुनस्परि ।**
**अश्वास ऽएषामुभये यथा विदुः प्र पर्वतस्य नभनूँरचुच्यवुः ॥७॥**

वयः । न । ये । श्रेणीः । पप्तुः । ओजसा । अन्तान् ।
दिवः । बृहतः । सानुनः । परि ॥ अश्वासः । एषाम् ।
उभये । यथा । विदुः । प्र । पर्वतस्य । नभनून् । अचुच्यवुः ॥७॥

**मिमातु द्यौरदितिर्वीतये नः सं दानुचित्रा ऽउषसो यतन्ताम् ।**
**आचुच्यवुर्दिव्यं कोशमेत ऽऋषे रुद्रस्य मरुतो गृणानाः ॥८॥ ( २४ ) [ ४४३ ]**

मिमातु । द्यौः । अदितिः । वीतये । नः । सम् । दानुऽचित्राः ।
उषसः । यतन्ताम् ॥ आ । अचुच्यवुः । दिव्यम् । कोशम् ।
एते । ऋषे । रुद्रस्य । मरुतः । गृणानाः ॥८॥

# ( ६० )

८ श्यावाश्व आत्रेयः । मरुतः । त्रिष्टुप्, ७-८ जगती ।

**ईळे ऽअग्निं स्ववसं नमोभिरिह प्रसत्तो वि चयत्कृतं नः ।**
**रथैरिव प्र भरे वाजयद्भिः प्रदक्षिणिन्मरुतां स्तोममृध्याम् ॥१॥**

इळे । अग्निम् । सु०अवसम् । नमः२भिः । इह । प्र०सत्तः ।
वि । चयत् । कृतम् । नः ॥ रथैःऽइव । प्र । भरे ।
वाजयत्०भिः । प्र०दक्षिणित् । मरुताम् । स्तोमम् । ऋध्याम् ॥१॥

**आ ये तस्थुः पृषतीषु श्रुतासु सुखेषु रुद्रा मरुतो रथेषु ।**
**वना चिदुग्रा जिहते नि वो भिया पृथिवी चिद्रेजते पर्वतश्चित् ॥२॥**

आ । ये । तस्थुः । पृषतीषु । श्रुतासु । सु०खेषु । रुद्राः ।
मरुतः । रथेषु ॥ वना । चित् । उग्राः । जिहते । नि ।
वः । भिया । पृथिवी । चित् । रेजते । पर्वतः । चित् ॥२॥

**पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित्सानु रेजत स्वने वः ।**
**यत्क्रीळथ मरुत ऽऋष्टिमन्त ऽआपइव सध्र्यञ्चो धवध्वे ॥३॥**

पर्वतः । चित् । महि । वृद्धः । बिभाय । दिवः । चित् ।
सानु । रेजत । स्वने । वः ॥ यत् । क्रीळथ । मरुतः ।
ऋष्टि०मन्तः । आपःऽइव । सध्र्यञ्चः । धवध्वे ॥३॥

**वराइवेद्रैवतासो हिरण्यैरभि स्वधाभिस्तन्वः पिपिश्रे ।**
**श्रिये श्रेयांसस्तवसो रथेषु सत्रा महांसि चक्रिरे तनूषु ॥४॥**

वराःऽइव । इत् । रैवतासः । हिरण्यैः । अभि ।
स्वधाभिः । तन्वः । पिपिश्रे ॥ श्रिये । श्रेयांसः ।
तवसः । रथेषु । सत्रा । महांसि । चक्रिरे । तनूषु ॥४॥

**अज्येष्ठासो ऽअकनिष्ठास ऽएते सं भ्रातरो वावृधुः सौभगाय ।**
**युवा पिता स्वपा रुद्र ऽएषां सुदुघा पृश्निः सुदिना मरुद्भ्यः ॥५॥**
अज्येष्ठासः । अकनिष्ठासः । एते । सम् । भ्रातरः ।
ववृधुः । सौभगाय ॥ युवा । पिता । सु०अपाः । रुद्रः ।
एषाम् । सु०दुघा । पृश्निः । सु०दिना । मरुत्०भ्यः ॥५॥

**यदुत्तमे मरुतो मध्यमे वा यद्वावमे सुभगासो दिवि ष्ठ ।**
**अतो नो रुद्रा ऽउत वा न्वस्याग्ने वित्ताद्धविषो यद्यजाम ॥६॥**
यत् । उत्०तमे । मरुतः । मध्यमे । वा । यत् । वा । अवमे ।
सु०भगासः । दिवि । स्थ ॥ अतः । नः । रुद्राः । उत । वा ।
नु । अस्य । अग्ने । वित्तात् । हविषः । यत् । यजाम ॥६॥

**अग्निश्च यन्मरुतो विश्ववेदसो दिवो वहध्व ऽउत्तरादधि ष्णुभिः ।**
**ते मन्दसाना धुनयो रिशादसो वामं धत्त यजमानाय सुन्वते ॥७॥**
अग्निः । च । यत् । मरुतः । विश्व०वेदसः । दिवः । वहध्वे ।
उत्०तरात् । अधि । स्नु०भिः ॥ ते । मन्दसानाः । धुनयः ।
रिशादसः । वामम् । धत्त । यजमानाय । सुन्वते ॥७॥

**अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः ।**
**पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः ॥८॥ ( २५ ) [ ४५१ ]**
अग्ने । मरुत्०भिः । शुभयत्०भिः । ऋक्व०भिः । सोमम् ।
पिब । मन्दसानः । गणश्रि०भिः ॥ पावकेभिः । विश्वम्०इन्वेभिः ।
आयु०भिः । वैश्वानर । प्र०दिवा । केतुना । स०जूः ॥८॥

# ( ६१ )

१९ श्यावाश्व आत्रेयः । १-४, ११-१६ मरुतः, ५-८ तरन्तमहिषी शशीयसी, ९ वैददश्विः पुरमीळ्हः, १० वैददश्विस्तरन्त, १७-१९ दार्भ्यो रथवीतिः । गायत्री, ३ निचृत्, ५ अनुष्टुप्, ९ सतोबृहती ।

**के ष्ठा नरः श्रेष्ठतमा य ऽएकऽएक ऽआयय ।**
**परमस्याः परावतः ॥१॥**

कः । स्थ । नरः । श्रेष्ठ०तमाः । ये । एकः२एकः । आ०यय ॥
परमस्याः । परा०वतः ॥१॥

**क्व१ वोऽश्वाः क्वा३भीशवः कथं शेक कथा यय ।**
**पृष्ठे सदो नसोर्यमः ॥२॥**

क्व । वः । अश्वाः । क्व । अभीशवः । कथम् । शेक । कथा । यय ॥
पृष्ठे । सदः । नसोः । यमः ॥२॥

**जघने चोद ऽएषां वि सक्थानि नरो यमुः ।**
**पुत्रकृथे न जनयः ॥३॥**

जघने । चोदः । एषाम् । वि । सक्थानि । नरः । यमुः ॥
पुत्र०कृथे । न । जनयः ॥३॥

**परा वीरास ऽएतन मर्यासो भद्रजानयः ।**
**अग्नितपो यथासथ ॥४॥**

परा । वीरासः । इतन । मर्यासः । भद्र०जानयः ॥
अग्नि०तपः । यथा । असथ ॥४॥

**सनत्साश्व्यं पशुमुत गव्यं शतावयम् ।**
**श्यावाश्वस्तुताय या दोर्वीरायोपबर्बृहत् ॥५॥ ( २६ )**

सनत् । सा । अश्व्यम् । पशुम् । उत । गव्यम् । शत०अवयम् ॥
श्यावाश्व०स्तुताय । या । दोः । वीराय । उप०बर्बृहत् ॥५॥

**उत त्वा स्त्री शशीयसी पुंसो भवति वस्यसी ।**
**अदेवत्रादराधसः ॥६॥**
उत । त्वा । स्त्री । शशीयसी । पुंसः । भवति । वस्यसी ॥
अदेव०त्रात् । अराधसः ॥६॥

**वि या जानाति जसुरिं वि तृष्यन्तं वि कामिनम् ।**
**देवत्रा कृणुते मनः ॥७॥**
वि । या । जानाति । जसुरिम् । वि । तृष्यन्तम् । वि । कामिनम् ॥
देव०त्रा । कृणुते । मनः ॥७॥

**उत घा नेमो ऽअस्तुतः पुमाँ ऽइति ब्रुवे पणिः ।**
**स वैरदेय ऽइत्समः ॥८॥**
उत । घ । नेमः । अस्तुतः । पुमान् । इति । ब्रुवे । पणिः ॥
सः । वैर०देये । इत् । समः ॥८॥

**उत मेऽरपद्युवतिर्ममन्दुषी प्रति श्यावाय वर्तनिम् ।**
**वि रोहिता पुरुमीळ्हाय येमतुर्विप्राय दीर्घयशसे ॥९॥**
उत । मे । अरपत् । युवतिः । ममन्दुषी । प्रति । श्यावाय । वर्त्तनिम् ॥
वि । रोहिता । पुरु०मीळ्हाय । येमतुः । विप्राय । दीर्घ०यशसे ॥९॥

**यो मे धेनूनां शतं वैददश्विर्यथा ददत् ।**
**तरन्तईव मंहना ॥१०॥ (२७)**

यः । मे । धेनूनाम् । शतम् । वैदत्०अश्विः । यथा । ददत् ॥
तरन्तःऽइव । मंहना ॥१०॥

**य ऽईं वहन्त ऽआशुभिः पिबन्तो मदिरं मधु ।**
**अत्र श्रवांसि दधिरे ॥११॥**
ये । ईम् । वहन्ते । आशु०भिः । पिबन्तः । मदिरम् । मधु ॥
अत्र । श्रवांसि । दधिरे ॥११॥

**येषां श्रियाधि रोदसी विभ्राजन्ते रथेष्वा ।**
**दिवि रुक्मइवोपरि ॥१२॥**
येषाम् । श्रिया । अधि । रोदसी इति । वि०भ्राजन्ते । रथेषु । आ ॥
दिवि । रुक्मःऽइव । उपरि ॥१२॥

**युवा स मारुतो गणस्त्वेषरथो ऽअनेद्यः ।**
**शुभंयावाप्रतिष्कुतः ॥१३॥**
युवा । सः । मारुतः । गणः । त्वेष०रथः । अनेद्यः ॥
शुभम्०यावा । अप्रति०स्कुतः ॥१३॥

**को वेद नूनमेषां यत्रा मदन्ति धूतयः ।**
**ऋतजाता ऽअरेपसः ॥१४॥**
कः । वेद । नूनम् । एषाम् । यत्र । मदन्ति । धूतयः ॥
ऋत०जाताः । अरेपसः ॥१४॥

**यूयं मर्त्तं विपन्यवः प्रणेतार ऽइत्था धिया ।**
**श्रोतारो यामहूतिषु ॥१५॥ ( २८ )**
यूयम् । मर्त्तम् । विपन्यवः । प्र०नेतारः । इत्था । धिया ॥
श्रोतारः । याम०हूतिषु ॥१५॥

**ते नो वसूनि काम्या पुरुश्चन्द्रा रिशादसः ।**

**आ यज्ञियासो ववृत्तन ॥१६॥**

ते । नः । वसूनि । काम्या । पुरु०चन्द्राः । रिशादसः ॥

आ । यज्ञियासः । ववृत्तन ॥१६॥

**एतं मे स्तोममूर्म्ये दार्भ्याय परा वह ।**

**गिरो देवि रथीरिव ॥१७॥**

एतम् । मे । स्तोमम् । ऊर्म्ये । दार्भ्याय । परा । वह ॥

गिरः । देवि । रथीःऽइव ॥१७॥

**उत मे वोचतादिति सुतसोमे रथवीतौ ।**

**न कामो ऽअप वेति मे ॥१८॥**

उत । मे । वोचतात् । इति । सुत०सोमे । रथ०वीतौ ।

न । कामः । अप । वेति । मे ॥१८॥

**एष क्षेति रथवीतिर्मघवा गोमतीरनु ।**

**पर्वतेष्वपश्रितः ॥१९॥ ( २९ )** [ ४७० ]

एषः । क्षेति । रथ०वीतिः । मघ०वा । गो०मतीः । अनु ॥

पर्वतेषु । अप०श्रितः ॥१९॥

# ( ६२ )

९ श्रुतविदात्रेयः । मित्रावरुणौ । त्रिष्टुप् ।

**ऋतेन ऽऋतमपिहितं ध्रुवं वां सूर्यस्य यत्र विमुचन्त्यश्वान् ।**

**दश शता सह तस्थुस्तदेकं देवानां श्रेष्ठं वपुषामपश्यम् ॥१॥**

ऋतेन । ऋतम् । अपि॰हितम् । ध्रुवम् । वाम् । सूर्यस्य । यत्र ।
वि॰मुचन्ति । अश्वान् ॥ दश । शता । सह । तस्थुः । तत् ।
एकम् । देवानाम् । श्रेष्ठम् । वपुषाम् । अपश्यम् ॥१॥

**तत्सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहभिर्दुदुह्रे ।**
**विश्वाः पिन्वथः स्वसरस्य धेना ऽअनु वामेकः पविरा ववर्त ॥२॥**
तत् । सु । वाम् । मित्रावरुणा । महि॰त्वम् । ईर्मा । तस्थुषीः ।
अहः॰भिः । दुदुह्रे ॥ विश्वाः । पिन्वथः । स्वसरस्य । धेनाः ।
अनु । वाम् । एकः । पविः । आ । ववर्त ॥२॥

**अधारयतं पृथिवीमुत द्यां मित्रराजाना वरुणा महोभिः ।**
**वर्द्धयतमोषधीः पिन्वतं गा ऽअव वृष्टिं सृजतं जीरदानू ॥३॥**
अधारयतम् । पृथिवीम् । उत । द्याम् । मित्र॰राजाना ।
वरुणा । महः२भिः ॥ वर्द्धयतम् । ओषधीः । पिन्वतम् ।
गाः । अव । वृष्टिम् । सृजतम् । जीरदानू इति जीर॰दानू ॥३॥

**आ वामश्वासः सुयुजो वहन्तु यतरश्मय ऽउप यन्त्वर्वाक् ।**
**घृतस्य निर्णिगनु वर्त्तते वामुप सिन्धवः प्रदिवि क्षरन्ति ॥४॥**
आ । वाम् । अश्वासः । सु॰युजः । वहन्तु । यत॰रश्मयः ।
उप । यन्तु । अर्वाक् ॥ घृतस्य । निः२निक् । अनु । वर्त्तते ।
वाम् । उप । सिन्धवः । प्र॰दिवि । क्षरन्ति ॥४॥

**अनु श्रुताममतिं वर्द्धदुर्वी बर्हिरिव यजुषा रक्षमाणा ।**
**नमस्वन्ता धृतदक्षाधि गर्त्ते मित्रासाथे वरुणेळास्वन्तः ॥५॥ ( ३० )**
अनु । श्रुताम् । अमतिम् । वर्द्धत् । उर्वीम् । बर्हिःऽइव ।
यजुषा । रक्षमाणा ॥ नमस्वन्ता । धृत॰दक्षा । अधि । गर्त्ते ।
मित्र । आसाथे इति । वरुण । इळासु । अन्तरिति ॥५॥

**अक्रविहस्ता सुकृते परस्पा यं त्रासाथे वरुणेळास्वन्तः ।**

**राजाना क्षत्रमहृणीयमाना सहस्रस्थूणं बिभृथः सह द्वौ ॥६॥**

अक्रवि०हस्ता । सु०कृते । परः२पा । यम् । त्रासाथे ।

वरुणा । इळासु । अन्तरिति ॥ राजाना । क्षत्रम् ।

अहृणीयमाना । सहस्र०स्थूणम् । बिभृथः । सह । द्वौ ॥६॥

**हिरण्यनिर्णिगयो ऽअस्य स्थूणा वि भ्राजते दिव्यश्वाजनीव ।**

**भद्रे क्षेत्रे निमिता तिल्विले वा सनेम मध्वो ऽअधिगर्त्यस्य ॥७॥**

हिरण्य०निर्निक् । अयः । अस्य । स्थूणा । वि । भ्राजते ।

दिवि । अश्वाजनीऽइव ॥ भद्रे । क्षेत्रे । नि०मिता ।

तल्विले । वा । सनेम । मध्वः । अधि०गर्त्यस्य ॥७॥

**हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्य ।**

**आ रोहथो वरुण मित्र गर्त्तमतश्चक्षाथे ऽअदितिं दितिं च ॥८॥**

हिरण्य०रूपम् । उषसः । वि०उष्टौ । अयः२स्थूणम् ।

उत्०इता । सूर्यस्य ॥ आ । रोहथः । वरुण । मित्र ।

गर्त्तम् । अतः । चक्षाथे इति । अदितिम् । दितिम् । च ॥८॥

**यद्बंहिष्ठं नातिविधे सुदानू ऽअच्छिद्रं शर्म भुवनस्य गोपा ।**

**तेन नो मित्रावरुणावविष्टं सिषासन्तो जिगीवांसः स्याम ॥९॥ ( ३१ )[ ४७९ ]**

यत् । बंहिष्ठम् । न । अति०विधे । सुदानू इति सु०दानू ।

अच्छिद्रम् । शर्म । भुवनस्य । गोपा । तेन । नः । मित्रावरुणौ ।

अविष्टम् । सिसासन्तः । जिगीवांसः । स्याम ॥९॥

॥ इति चतुर्थाष्टके तृतीयोऽध्यायः ॥ ३ ॥

# तृतीयाध्यायस्य मन्त्रवर्गानुक्रमणी



**॥ इति शाङ्खायनसंहितायां चतुर्थाष्टके तृतीयोऽध्यायः ॥**

**(तृतीयाध्याये वर्गाः ३१, सूक्तानि १६, ऋचः १६४ + ४ खिलानि)**

# ॥ चतुर्थाष्टके चतुर्थोऽध्यायः॥

**अथ चतुर्थोऽध्यायः॥४॥ वर्गाः १-३६ ]** **[ पञ्चममण्डले सूक्तानि ६३-८७**

**षष्ठमण्डले सूक्तम् १**

## ( ६३ )

**७ अर्चनाना आत्रेयः । मित्रवरुणौ । जगती ।**

**ऋतस्य गोपावधि तिष्ठथो रथं सत्यधर्माणा परमे व्योमनि ।**
**यमत्र मित्रावरुणावथो युवं तस्मै वृष्टिर्मधुमत्पिन्वते दिवः ॥१॥**

ऋतस्य । गोपौ । अधि । तिष्ठथः । रथम् । सत्य॰धर्माणा ।
परमे । वि॰ओमनि ॥ यम् । अत्र । मित्रावरुणा । अवथः ।
युवम् । तस्मै । वृष्टिः । मधु॰मत् । पिन्वते । दिवः ॥१॥

**सम्राजावस्य भुवनस्य राजथो मित्रावरुणा विदथे स्वर्दृशा ।**
**वृष्टिं वां राधो ऽअमृतत्वमीमहे द्यावापृथिवी वि चरन्ति तन्यवः ॥२॥**

सम्॰राजौ । अस्य । भुवनस्य । राजथः । मित्रावरुणा ।
विदथे । स्वः॒२दृशा ॥ वृष्टिम् । वाम् । राधः । अमृत॰त्वम् ।
ईमहे । द्यावापृथिवी इति । वि । चरन्ति । तन्यवः ॥२॥

**सम्राजा ऽउग्रा वृषभा दिवस्पती पृथिव्या मित्रावरुणा विचर्षणी ।**
**चित्रेभिरभ्रैरुप तिष्ठथो रवं द्यां वर्षयथो ऽअसुरस्य मायया ॥३॥**

सम्॰राजौ । उग्रा । वृषभा । दिवः । पती इति । पृथिव्याः ।
मित्रावरुणा । विचर्षणी इति वि॰चर्षणी । चित्रेभिः । अभ्रैः ।
उप । तिष्ठथः । रवम् । द्याम् । वर्षयथः । असुरस्य । मायया ॥३॥

**माया वां मित्रावरुणा दिवि श्रिता सूर्यो ज्योतिश्चरति चित्रमायुधम् ।**
**तमभ्रेण वृष्ट्या गूहथो दिवि पर्जन्य द्रप्सा मधुमन्त ऽईरते ॥४॥**

माया । वाम् । मित्रावरुणा । दिवि । श्रिता । सूर्यः । ज्योतिः ।
चरति । चित्रम् । आयुधम् ॥ तम् । अभ्रेण । वृष्ट्या । गूहथः ।
दिवि । पर्जन्य । द्रप्साः । मधु॰मन्तः । ईरते ॥४॥

**रथं युञ्जते मरुतः शुभे सुखं शूरो न मित्रावरुणा गविष्टिषु ।**
**रजांसि चित्रा वि चरन्ति तन्यवो दिवः सम्राजा पयसा न उक्षतम् ॥५॥**
रथम् । युञ्जते । मरुतः । शुभे । सु॰खम् । शूरः । न ।
मित्रावरुणा । गो॰इष्टिषु ॥ रजांसि । चित्रा । वि । चरन्ति ।
तन्यवः । दिवः । सम्॰राजा । पयसा । नः । उक्षतम् ॥५॥

**वाचं सु मित्रावरुणाविरावतीं पर्जन्यश्चित्रां वदति त्विषीमतीम् ।**
**अभ्रा वसत मरुतः सु मायया द्यां वर्षयतमरुणामरेपसम् ॥६॥**
वाचम् । सु । मित्रावरुणौ । इरा॰वतीम् । पर्जन्यः । चित्राम् ।
वदति । त्विषि॰मतीम् ॥ अभ्रा । वसत । मरुतः । सु ।
मायया । द्याम् । वर्षयतम् । अरुणाम् । अरेपसम् ॥६॥

**धर्मणा मित्रावरुणा विपश्चिता व्रता रक्षेथे ऽअसुरस्य मायया ।**
**ऋतेन विश्वं भुवनं वि राजथः सूर्यमा धत्थो दिवि चित्र्यं रथम् ॥७॥ (१) [ ४८६ ]**
धर्मणा । मित्रावरुणा । विपः॰चिता । व्रता । रक्षेथे इति ।
असुरस्य । मायया ॥ ऋतेन । विश्वम् । भुवनम् । वि ।
राजथः । सूर्यम् । आ । धत्थः । दिवि । चित्र्यम् । रथम् ॥७॥

## ( ६४ )

७ अर्चनाना आत्रेयः । मित्रवरुणौ । अनुष्टुप्, ७ पङ्क्तिः ।

**वरुणं वो रिशादसमृचा मित्रं हवामहे ।**
**परि व्रजेव बाह्वोर्जगन्वांसा स्वर्णरम् ॥१॥**

वरुणम् । वः । रिशादसम् । ऋचा । मित्रम् । हवामहे ॥
परि । व्रजाऽइव । बाह्वोः । जगन्वांसा । स्वः२नरम् ॥१॥

**ता बाहवा सुचेतुना प्र यन्तमस्मा ऽअर्चते ।**
**शेवं हि जार्यं वां विश्वासु क्षासु जोगुवे ॥२॥**
ता । बाहवा । सु०चेतुना । प्र । यन्तम् । अस्मै । अर्चते ॥
शेवम् । हि । जार्यम् । वाम् । विश्वासु । क्षासु । जोगुवे ॥२॥

**यन्नूनमश्यां गतिं मित्रस्य यायां पथा ।**
**अस्य प्रियस्य शर्मण्यहिंसानस्य सश्चिरे ॥३॥**
यत् । नूनम् । अश्याम् । गतिम् । मित्रस्य । यायाम् । पथा ॥
अस्य । प्रियस्य । शर्मणि । अहिंसानस्य । सश्चिरे ॥३॥

**युवाभ्यां मित्रावरुणोपमं धेयामृचा ।**
**यद्ध क्षये मघोनां स्तोतॄणां च स्पूर्धसे ॥४॥**
युवाभ्याम् । मित्रावरुणा । उप०मम् । धेयाम् । ऋचा ॥
यत् । ह । क्षये । मघोनाम् । स्तोतॄणाम् । च । स्पूर्धसे ॥४॥

**आ नो मित्र सुदीतिभिर्वरुणश्च सधस्थ ऽआ ।**
**स्वे क्षये मघोनां सखीनां च वृधसे ॥५॥**
आ । नः । मित्र । सुदीति०भिः । वरुणः । च । सध०स्थे । आ ॥
स्वे । क्षये । मघोनाम् । सखीनाम् । च । वृधसे ॥५॥

**युवं नो येषु वरुण क्षत्रं बृहच्च बिभृथः ।**
**उरु णो वाजसातये कृतं राये स्वस्तये ॥६॥**

युवम् । नः । येषु । वरुणा । क्षत्रम् । बृहत् । च । बिभृथः ।
उरु । नः । वाजऽसातये । कृतम् । राये । स्वस्तये ॥६॥

**उच्छन्त्यां मे यजता देवक्षत्रे रुशद्गवि ।**
**सुतं सोमं न हस्तिभिरा पड्भिर्धावतं नरा बिभ्रतावर्चनानसम् ॥७॥ ( २ ) [ ४९३ ]**
उच्छन्त्याम् । मे । यजता । देवऽक्षत्रे । रुशत्ऽगवि ॥
सुतम् । सोमम् । न । हस्तिऽभिः । आ । पट्ऽभिः ।
धावतम् । नरा । बिभ्रतौ । अर्चनानसम् ॥७॥

## ( ६५ )

६ रातहव्य आत्रेयः । मित्रवरुणौ । अनुष्टुप्, ६ पङ्क्तिः ।

**यश्चिकेत स सुक्रतुर्देवत्रा स ब्रवीतु नः ।**
**वरुणो यस्य दर्शतो मित्रो वा वनते गिरः ॥१॥**
यः । चिकेत । सः । सुऽक्रतुः । देवऽत्रा । सः । ब्रवीतु । नः ॥
वरुणः । यस्य । दर्शतः । मित्रः । वा । वनते । गिरः ॥१॥

**ता हि श्रेष्ठवर्चसा राजाना दीर्घश्रुत्तमा ।**
**ता सत्पती ऽऋतावृध ऽऋतावाना जनेजने ॥२॥**
ता । हि । श्रेष्ठऽवर्चसा । राजाना । दीर्घश्रुत्ऽतमा ॥
ता । सत्पती इति सत्ऽपती । ऋतऽवृधा । ऋतऽवाना । जनेऽजने ॥२॥

**ता वामियानोऽवसे पूर्वा ऽउप ब्रुवे सचा ।**
**स्वश्वासः सु चेतुना वाजाँ ऽअभि प्र दावने ॥३॥**
ता । वाम् । इयानः । अवसे । पूर्वौ । उप । ब्रुवे । सचा ॥
सुऽअश्वासः । सु । चेतुना । वाजान् । अभि । प्र । दावने ॥३॥

मित्रो ऽअंहोश्चिदादुरु क्षयाय गातुं वनते ।
मित्रस्य हि प्रतूर्वतः सुमतिरस्ति विधतः ॥४॥
मित्रः । अंहोः । चित् । आत् । उरु । क्षयाय । गातुम् । वनते ॥
मित्रस्य । हि । प्रऽतूर्वतः । सुऽमतिः । अस्ति । विधतः ॥४॥

वयं मित्रस्यावसि स्याम सप्रथस्तमे ।
अनेहसस्त्वोतयः सत्रा वरुणशेषसः ॥५॥
वयम् । मित्रस्य । अवसि । स्याम । सप्रथःऽतमे ॥
अनेहसः । त्वाऽऊतयः । सत्रा । वरुणऽशेषसः ॥५॥

युवं मित्रेमं जनं यतथः सं च नयथः ।
मा मघोनः परि ख्यतं मो ऽअस्माकमृषीणां गोपीथे न ऽउरुष्यतम् ॥६॥ ( ३ ) [ ४९९ ]
युवम् । मित्रा । इमम् । जनम् । यतथः । सम् । च । नयथः ॥
मा । मघोनः । परि । ख्यतम् । मो इति । अस्माकम् ।
ऋषीणाम् । गोऽपीथे । नः । उरुष्यतम् ॥६॥

## ( ६६ )

६ रातहव्य आत्रेयः । मित्रावरुणौ । अनुष्टुप् ।

आ चिकितान सुक्रतू देवौ मर्त्त रिशादसा ।
वरुणाय ऽऋतपेशसे दधीत प्रयसे महे ॥१॥
आ । चिकितान । सुक्रतू इति सुऽक्रतू । देवौ । मर्त्त । रिशादसा ॥
वरुणाय । ऋतऽपेशसे । दधीत । प्रयसे महे ॥१॥

ता हि क्षत्रमविह्रुतं सम्यगसुर्य१माशाते ।
अध व्रतेव मानुषं स्व१र्ण धायि दर्शतम् ॥२॥

ता । हि । क्षत्रम् । अवि॑ऽह्रुतम् । सम्यक् । असुर्य॑म् । आशाते इति॑ ॥
अध॑ । व्रताऽइ॑व । मानु॑षम् । स्व॑: । न । धायि । दर्शतम् ॥२॥

**ता वामेषे रथानामुर्वीं गव्यूतिमेषाम् ।**
**रातह॑व्यस्य सुष्टुतिं दधृक्स्तोमैर्मनामहे ॥३॥**
ता । वाम् । एषे । रथा॑नाम् । उर्वीम् । गव्यूतिम् । एषाम् ।
रातऽह॑व्यस्य । सुऽस्तुतिम् । दधृक् । स्तोमैः । मनामहे ॥३॥

**अधा हि काव्या युवं दक्ष॑स्य पूर्भिर॑द्भुता ।**
**नि केतुना जना॑नां चिकेथे॑ पूतदक्षसा ॥४॥**
अध॑ । हि । काव्या॑ । युवम् । दक्ष॑स्य । पू:ऽभिः । अद्भुता ।
नि । केतुना॑ । जना॑नाम् । चिकेथे इति॑ । पूतऽदक्षसा ॥४॥

**तदृतं पृ॑थिवि बृहच्छ्र॑वएष ऽऋषीणाम् ।**
**ज्रयसानावरं॑ पृथ्वति॑ क्षरन्ति यामभिः ॥५॥**
तत् । ऋतम् । पृथिवि । बृहत् । श्रवःऽएषे । ऋषीणाम् ॥
ज्रयसानौ । अर॑म् । पृथु । अति॑ । क्षरन्ति । याम॑ऽभिः ॥५॥

**आ यद्वामीयचक्षसा मित्रं वयं च॑ सूरयः ।**
**व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्यै ॥६॥ (४)** [ ५०५ ]
आ । यत् । वाम् । ईय॑ऽचक्षसा । मित्रा॑ । वयम् । च । सूरयः ॥
व्यचिष्ठे । बहुऽपाय्ये । यतेमहि । स्वऽराज्ये ॥६॥

# ( ६७ )

५ यजत आत्रेयः । मित्रावरुणौ । अनुष्टुप् ।

**बळित्था देव निष्कृतमादित्या यजतं बृहत् ।**
**वरुण मित्रार्यमन्वर्षिष्ठं क्षत्रमाशाथे ॥१॥**

बट् । इत्था । देव । निःऽकृतम् । आदित्या । यजतम् । बृहत् ॥
वरुण । मित्र । अर्यमन् । वर्षिष्ठम् । क्षत्रम् । आशाथे इति ॥१॥

**आ यद्योनिं हिरण्ययं वरुण मित्र सदथः ।**
**धर्त्तारा चर्षणीनां यन्तं सुम्नं रिशादसा ॥२॥**

आ । यत् । योनिम् । हिरण्ययम् । वरुण । मित्र । सदथः ॥
धर्त्तारा । चर्षणीनाम् । यन्तम् । सुम्नम् । रिशादसा ॥२॥

**विश्वे हि विश्ववेदसो वरुणो मित्रो ऽअर्यमा ।**
**व्रता पदेव सश्चिरे पान्ति मर्त्यं रिषः ॥३॥**

विश्वे । हि । विश्वऽवेदसः । वरुणः । मित्रः । अर्यमा ॥
व्रता । पदाऽइव । सश्चिरे । पान्ति । मर्त्यम् । रिषः ॥३॥

**ते हि सत्या ऽऋतस्पृश ऽऋतावानो जनेजने ।**
**सुनीथासः सुदानवोंऽहोश्चिदुरुचक्रयः ॥४॥**

ते । हि । सत्याः । ऋतऽस्पृशः । ऋतऽवानः । जनेऽजने ॥
सुऽनीथासः । सुऽदानवः । अंहोः । चित् । उरुऽचक्रयः ॥४॥

**को नु वां मित्रास्तुतो वरुणो वा तनूनाम् ।**
**तत्सु वामेषते मतिरत्रिभ्य ऽएषते मतिः ॥५॥ ( ५ )** [ ५१० ]

कः । नु । वाम् । मित्र । अस्तुतः । वरुणः । वा । तनूनाम् ।
तत् । सु । वाम् । आ । ईषते । मतिः । अत्रिऽभ्यः । आ । ईषते । मतिः ॥५॥

# ( ६८ )

**५ यजत आत्रेयः । मित्रवरुणौ । गायत्री ।**

**प्र वो मित्राय गायत वरुणाय विपा गिरा ।**

**महिक्षत्रावृतं बृहत् ॥१॥**

प्र । वः । मित्राय । गायत । वरुणाय । विपा । गिरा ॥
महिऽक्षत्रौ । ऋतम् । बृहत् ॥१॥

**सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च ।**

**देवा देवेषु प्रशस्ता ॥२॥**

सम्ऽराजा । या । घृतयोनी इति घृतऽयोनी । मित्रः । च । उभा । वरुणः । च ॥
देवा । देवेषु । प्रऽशस्ता ॥२॥

**ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य ।**

**महि वां क्षत्रं देवेषु ॥३॥**

ता । नः । शक्तम् । पार्थिवस्य । महः । रायः । दिव्यस्य ॥
महि । वाम् । क्षत्रम् । देवेषु ॥३॥

**ऋतमृतेन सपन्तेषिरं दक्षमाशाते ।**

**अद्रुहा देवौ वर्द्धेते ॥४॥**

ऋतम् । ऋतेन । सपन्ता । इषिरम् । दक्षम् । आशाते इति ॥
अद्रुहा । देवौ । वर्द्धेते इति ॥४॥

**वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः ।**

**बृहन्तं गर्त्तमाशाते ॥५॥ ( ६ )**

वृष्टि०द्यावा । रीति०आपा । इषः । पती इति । दानु०मत्याः ॥

बृहन्तम् । गर्त्तम् । आशाते इति ॥५॥

# ( ६९ )

**४ उरुचक्रिरात्रेयः । मित्रावरुणौ । त्रिष्टुप् ।**

**त्री रोचना वरुण त्रीँरुत द्यून्त्रीणि मित्र धारयथो रजांसि ।**

**वावृधानावमतिं क्षत्रियस्यानु व्रतं रक्षमाणावजुर्यम् ॥१॥**

त्री । रोचना । वरुण । त्रीन् । उत । द्यून् । त्रीणि ।

मित्र । धारयथः । रजांसि ॥ ववृधानौ । अमतिम् ।

क्षत्रियस्य । अनु । व्रतम् । रक्षमाणौ । अजुर्यम् ॥१॥

**इरावतीर्वरुण धेनवो वां मधुमद्वां सिन्धवो मित्र दुह्रे ।**

**त्रयस्तस्थुर्वृषभासस्तिसॄणां धिषणानां रेतोधा वि द्युमन्तः ॥२॥**

इरा०वतीः । वरुण । धेनवः । वाम् । मधु०मत् । वाम् ।

सिन्धवः । मित्र । दुह्रे ॥ त्रयः । तस्थुः । वृषभासः ।

तिसॄणाम् । धिषणानाम् । रेतः२धाः । वि । द्यु०मन्तः ॥२॥

**प्रातर्देवीमदितिं जोहवीमि मध्यंदिन उदिता सूर्यस्य ।**

**राये मित्रावरुणा सर्वतातेळे तोकाय तनयाय शं योः ॥३॥**

प्रातः । देवीम् । अदितिम् । जोहवीमि । मध्यन्दिने ।

उत्०इता । सूर्यस्य ॥ राये । मित्रावरुणा । सर्व०ताता ।

ईळे । तोकाय । तनयाय । शम् । योः ॥३॥

**या धर्त्तारा रजसो रोचनस्योतादित्या दिव्या पार्थिवस्य ।**

**न वां देवा ऽअमृता ऽआ मिनन्ति व्रतानि मित्रावरुणा ध्रुवाणि ॥४॥ (७) [ ५१९ ]**

या । धर्त्तारा । रजसः । रोचनस्य । उत । आदित्या ।

दिव्या । पार्थिवस्य ॥ न । वाम् । देवाः । अमृताः ।

आ । मिनन्ति । व्रतानि । मित्रावरुणा । ध्रुवाणि ॥४॥

## ( ७० )

४ उरुचक्रिरात्रेयः । मित्रावरुणौ । गायत्री ।

**पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण ।**

**मित्र वंसि वां सुमतिम् ॥१॥**

पुरु०उरुणा । चित् । हि । अस्ति । अवः । नूनम् । वाम् । वरुण ॥

मित्र । वंसि । वाम् । सु०मतिम् ॥१॥

**ता वां सम्यगद्रुह्वाणेषमश्याम धायसे ।**

**वयं ते रुद्रा स्याम ॥२॥**

ता । वाम् । सम्यक् । अद्रुह्वाणा । इषम् । अश्याम । धायसे ॥

वयम् । ते । रुद्रा । स्याम ॥२॥

**पातं नो रुद्रा पायुभिरुत त्रायेथां सुत्रात्रा ।**

**तुर्याम दस्यूंतनूभिः ॥३॥**

पातम् । नः । रुद्रा । पायु०भिः । उत । त्रायेथाम् । सु०त्रात्रा ॥

तुर्याम । दस्यून् । तनू०भिः ॥३॥

**मा कस्याद्भुतक्रतू यक्षं भुजेमा तनूभिः ।**

**मा शेषसा मा तनसा ॥४॥ (८) [ ५२३ ]**

मा । कस्यं । अद्भुतक्रतू इत्यद्भुत०क्रतू । यक्षम् । भुजेम । तनूभिः ॥
मा । शेषसा । मा । तनसा ॥४॥

# ( ७१ )

३ बाहुवृक्त आत्रेयः । मित्रावरुणौ । गायत्री ।

**आ नो गन्तं रिशादसा वरुण मित्र बर्हणा ।**
**उपेमं चारुमध्वरम् ॥१॥**

आ । नः । गन्तम् । रिशादसा । वरुण । मित्र । बर्हणा ॥
उप । इमम् । चारुम् । अध्वरम् ॥१॥

**विश्वस्य हि प्रचेतसा वरुण मित्र राजथः ।**
**ईशाना पिप्यतं धियः ॥२॥**

विश्वस्य । हि । प्र०चेतसा । वरुण । मित्र । राजथः ॥
ईशाना । पिप्यतम् । धियः ॥२॥

**उप नः सुतमा गतं वरुण मित्र दाशुषः ।**
**अस्य सोमस्य पीतये ॥३॥ ( ९ )** [ ५२६ ]

उप । नः । सुतम् । आ । गतम् । वरुण । मित्र । दाशुषः ॥
अस्य । सोमस्य । पीतये ॥३॥

# ( ७२ )

३ बाहुवृक्त आत्रेयः । मित्रावरुणौ । उष्णिक् ।

**आ मित्रे वरुणे वयं गीर्भिर्जुहुमो ऽअत्रिवत् ।**
**नि बर्हिषि सदतं सोमपीतये ॥१॥**

आ । मित्रे । वरुणे । वयम् । गीःऽभिः । जुहुमः । अत्रि०वत् ॥
नि । बर्हिषि । सदतम् । सोम०पीतये ॥१॥

**व्रतेन स्थो ध्रुवक्षेमा धर्मणा यातयज्जना ।**
**नि बर्हिषि सदतं सोमपीतये ॥२॥**
व्रतेन । स्थः । ध्रुव०क्षेमा । धर्मणा । यातयत्०जना ॥
नि । बर्हिषि । सदतम् । सोम०पीतये ॥२॥

**मित्रश्च नो वरुणश्च जुषेतां यज्ञमिष्टये ।**
**नि बर्हिषि सदतां सोमपीतये ॥३॥ (१०)** [५२९]
मित्रः । च । नः । वरुणः । च । जुषेताम् । यज्ञम् । इष्टये ॥
नि । बर्हिषि । सदतम् । सोम०पीतये ॥३॥

## (७३) [ अथ षष्ठोऽनुवाकः ॥६॥ सू. ७३-८७

**१० पौर आत्रेयः । अश्विना । अनुष्टुप् ।**

**यदद्य स्थः परावति यदर्वावत्यश्विना ।**
**यद्वा पुरू पुरुभुजा यदन्तरिक्ष ऽआ गतम् ॥१॥**
यत् । अद्य । स्थः । परा०वति । यत् । अर्वा०वति । अश्विना ॥
यत् । वा । पुरु । पुरु०भुजा । यत् । अन्तरिक्षे । आ । गतम् ॥१॥

**इह त्या पुरुभूतमा पुरू दंसांसि बिभ्रता ।**
**वरस्या याम्यध्रिगू हुवे तुविष्टमा भुजे ॥२॥**
इह । त्या । पुरु०भूतमा । पुरु । दंसांसि । बिभ्रता ॥
वरस्या । यामि । अध्रिगू इत्यध्रि०गू । हुवे । तुविः२तमा । भुजे ॥२॥

**ईर्मान्यद्वपुषे वपुश्चक्रं रथस्य येमथुः ।**
**पर्यन्या नाहुषा युगा मह्ना रजांसि दीयथः ॥३॥**
ईर्मा । अन्यत् । वपुषे । वपुः । चक्रम् । रथस्य । येमथुः ॥
परि । अन्या । नाहुषा । युगा । मह्ना । रजांसि । दीयथः ॥३॥

**तदू षु वामेना कृतं विश्वा यद्वामनु ष्टवे ।**
**नाना जातावरेपसा समस्मे बन्धुमेयथुः ॥४॥**
तत् । ऊँ इति । सु । वाम् । एना । कृतम् । विश्वा । यत् । वाम् । अनु । स्तवे ॥
नाना । जातौ । अरेपसा । सम् । अस्मे इति । बन्धुम् । आ । ईयथुः ॥४॥

**आ यद्वां सूर्या रथं तिष्ठद्रघुष्यदं सदा ।**
**परि वामरुषा वयो घृणा वरन्त ऽआतपः ॥५॥ ( ११ )**
आ । यत् । वाम् । सूर्या । रथम् । तिष्ठत् । रघु०स्यदम् । सदा ॥
परि । वाम् । अरुषाः । वयः । घृणा । वरन्ते । आ०तपः ॥५॥

**युवोरत्रिश्चिकेतति नरा सुम्नेन चेतसा ।**
**घर्मं यद्वामरेपसं नासत्यास्ना भुरण्यति ॥६॥**
युवोः । अत्रिः । चिकेतति । नरा । सुम्नेन । चेतसा ॥
घर्मम् । यत् । वाम् । अरेपसम् । नासत्या । आस्ना । भुरण्यति ॥६॥

**उग्रो वां ककुहो ययिः शृण्वे यामेषु संतनिः ।**
**यद्वां दंसोभिरश्विनात्रिर्नराववर्त्तति ॥७॥**
उग्रः । वाम् । ककुहः । ययिः । शृण्वे । यामेषु । सम्०तनिः ॥
यत् । वाम् । दंसः२भिः । अश्विना । अत्रिः । नरा । आ०ववर्त्तति ॥७॥

**मध्व ऽऊ षु मधूयुवा रुद्रा सिषक्ति पिप्युषी ।**
**यत्समुद्राति पर्षथः पक्वाः पृक्षो भरन्त वाम् ॥८॥**
मध्वः । ऊँ इति । सु । मधु०युवा । रुद्रा । सिसक्ति । पिप्युषी ॥
यत् । समुद्रा । अति । पर्षथः । पक्वाः । पृक्षः । भरन्त । वाम् ॥८॥

सत्यमिद्वा ऽउ ऽअश्विना युवामाहुर्मयोभुवा ।
ता यामन्यामहूतमा यामन्ना मृळयत्तमा ॥९॥
सत्यम् । इत् । वै । ॐ इति । अश्विना । युवाम् । आहुः । मयःऽभुवा ॥
ता । यामन् । याम॰हूतमा । यामन् । आ । मृळयत्॰तमा ॥९॥

इमा ब्रह्माणि वर्द्धनाश्विभ्यां सन्तु शंतमा ।
या तक्षाम रथाँऽइवावोचाम बृहन्नमः ॥१०॥ ( १२ )　　[ ५३९ ]
इमा । ब्रह्माणि । वर्द्धना । अश्वि॰भ्याम् । सन्तु । शम्॰तमा ॥
या । तक्षाम । रथान्ऽइव । अवोचाम । बृहत् । नमः ॥१०॥

## ( ७४ )

१० पौर आत्रेयः । अश्विना । अनुष्टुप्, ८ निचृत् ।

कूष्ठो देवावश्विनाद्या दिवो मनावसू ।
तच्छ्रवथो वृषणवसू ऽअत्रिर्वामा विवासति ॥१॥
कू॰स्थः । देवौ । अश्विना । अद्य । दिवः । मनावसू इति ॥
तत् । श्रवथः । वृषणवसू इति वृषण्॰वसू । अत्रिः । वाम् । आ । विवासति ॥१॥

कुह त्या कुह नु श्रुता दिवि देवा नासत्या ।
कस्मिन्ना यतथो जने को वां नदीनां सचा ॥२॥
कुह । त्या । कुह । नु । श्रुता । दिवि । देवा । नासत्या ॥
कस्मिन् । आ । यतथः । जने । कः । वाम् । नदीनाम् । सचा ॥२॥

कं याथः कं ह गच्छथः कमच्छा युञ्जाथे रथम् ।
कस्य ब्रह्माणि रण्यथो वयं वामुश्मसीष्टये ॥३॥
कम् । याथः । कम् । ह । गच्छथः । कम् । अच्छ । युञ्जाथे इति । रथम् ॥
कस्य । ब्रह्माणि । रण्यथः । वयम् । वाम् । उश्मसि । इष्टये ॥३॥

**पौरं चिद्ध्युदप्रुतं पौर पौराय जिन्वथः ।**

**यदीं गृभीततातये सिंहमिव द्रुहस्पदे ॥४॥**

पौरम् । चित् । हि । उद०प्रुतम् । पौर । पौराय । जिन्वथः ॥

यत् । ईम् । गृभीत०तातये । सिंहम्०इव । द्रुहः । पदे ॥४॥

**प्र च्यवानाज्जुजुरुषो वव्रिमत्कं न मुञ्चथः ।**

**युवा यदी कृथः पुनरा काममृण्वे वध्वः ॥५॥ ( १३ )**

प्र । च्यवानात् । जुजुरुषः । वव्रिम् । अत्कम् । न । मुञ्चथः ॥

युवा । यदि । कृथः । पुनः । आ । कामम् । ऋण्वे । वध्वः ॥५॥

**अस्ति हि वामिह स्तोता स्मसि वां संदृशि श्रिये ।**

**नू श्रुतं म ऽआ गतमवोभिर्वाजिनीवसू ॥६॥**

अस्ति । हि । वाम् । इह । स्तोता । स्मसि । वाम् । सम्०दृशि । श्रिये ॥

नु । श्रुतम् । मे । आ । गतम् । अवः२भिः । वाजिनीवसू इति वाजिनी०वसू ॥६॥

**को वामद्य पुरूणामा वव्ने मर्त्यानाम् ।**

**को विप्रो विप्रवाहसा को यज्ञैर्वाजिनीवसू ॥७॥**

कः । वाम् । अद्य । पुरूणाम् । आ । वव्ने । मर्त्यानाम् ॥

कः । विप्रः । विप्र०वाहसा । कः । यज्ञैः । वाजिनीवसू इति वाजिनी०वसू ॥७॥

**आ वां रथो रथानां येष्ठो यात्वश्विना ।**

**पुरू चिदस्मयुस्तिर ऽआङ्गूषो मर्त्येष्वा ॥८॥**

आ । वाम् । रथः । रथानाम् । येष्ठः । यातु । अश्विना ॥

पुरु । चित् । अस्म०युः । तिरः । आङ्गूषः । मर्त्येषु । आ ॥८॥

शमू षु वां मधूयुवास्माकमस्तु चर्कृतिः ।
अर्वाचीना विचेतसा विभिः श्येनेव दीयतम् ॥९॥
शम् । ऊँ इति । सु । वाम् । मधु०युवा । अस्माकम् । अस्तु । चर्कृतिः ॥
अर्वाचीना । वि०चेतसा । वि०भिः । श्येनाऽइव । दीयतम् ॥९॥

अश्विना यद्ध कर्हि चिच्छुश्रूयातमिमं हवम् ।
वस्वीरू षु वां भुजः पृञ्चन्ति सु वां पृचः ॥१०॥ (१४) [ ५४९ ]
अश्विना । यत् । ह । कर्हि । चित् । शुश्रुयातम् । इमम् । हवम् ॥
वस्वीः । ऊँ इति । सु । वाम् । भुजः । पृञ्चन्ति । सु । वाम् । पृचः ॥१०॥

## ( ७५ )

९ अवस्युरात्रेयः । अश्विनौ । पङ्क्तिः ।

प्रति प्रियतमं रथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृषिः स्तोमेन प्रति भूषति माध्वी मम श्रुतं हवम् ॥१॥
प्रति । प्रिय०तमम् । रथम् । वृषणम् । वसु०वाहनम् ॥
स्तोता । वाम् । अश्विनौ । ऋषिः । स्तोमेन । प्रति ।
भूषति । माध्वी इति । मम । श्रुतम् । हवम् ॥१॥

अत्यायातमश्विना तिरो विश्वा ऽअहं सना ।
दस्रा हिरण्यवर्त्तनी सुषुम्ना सिन्धुवाहसा माध्वी मम श्रुतं हवम् ॥२॥
अति०आयातम् । अश्विना । तिरः । विश्वाः । अहम् ।
सना ॥ दस्रा । हिरण्य०वर्त्तनी इति हिरण्य०वर्त्तनी । सु०सुम्ना ।
सिन्धु०वाहसा । माध्वी इति । मम । श्रुतम् । हवम् ॥२॥

आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम् ।
रुद्रा हिरण्यवर्त्तनी जुषाणा वाजिनीवसू माध्वी मम श्रुतं हवम् ॥३॥

आ । नः । रत्नानि । बिभ्रतौ । अश्विना । गच्छतम् । युवम् ॥
रुद्रा । हिरण्य०वर्त्तनी इति हिरण्य०वर्त्तनी । जुषाणा । वाजिनीवसू
इति वाजिनी०वसू । माध्वी इति । मम । श्रुतम् । हवम् ॥३॥

**सुष्टुभो वां वृषण्वसू रथे वाणीच्याहिता ।**
**उत वां ककुहो मृगः पृक्षः कृणोति वापुषो माध्वी मम श्रुतं हवम् ॥४॥**
सु०स्तुभः । वाम् । वृषण्वसू इति वृषण्०वसू । रथे । वाणीची ।
आहिता ॥ उत । वाम् । ककुहः । मृगः । पृक्षः । कृणोति ।
वापुषः । माध्वी इति । मम । श्रुतम् । हवम् ॥४॥

**बोधिन्मनसा रथ्येषिरा हवनश्रुता ।**
**विभिश्च्यवानमश्विना नि याथो ऽअद्वयाविनं माध्वी मम श्रुतं हवम् ॥५॥ ( १५ )**
बोधित्०मनसा । रथ्या । इषिरा । हवन०श्रुता ॥
वि०भिः । च्यवानम् । अश्विना । नि । याथः ।
अद्वयाविनम् । माध्वी इति । मम । श्रुतम् । हवम् ॥५॥

**आ वां नरा मनोयुजोऽश्वासः प्रुषितप्सवः ।**
**वयो वहन्तु पीतये सह सुम्नेभिरश्विना माध्वी मम श्रुतं हवम् ॥६॥**
आ । वाम् । नरा । मनः२युजः । अश्वासः । प्रुषित०प्सवः ॥
वयः । वहन्तु । पीतये । सह । सुम्नेभिः । अश्विना ।
माध्वी इति । मम । श्रुतम् । हवम् ॥६॥

**अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।**
**तिरश्चिदर्यया परि वर्त्तिर्यातमदाभ्या माध्वी मम श्रुतं हवम् ॥७॥**
अश्विनौ । आ । इह । गच्छतम् । नासत्या । मा । वि ।
वेनतम् ॥ तिरः । चित् । अर्य०या । परि । वर्त्तिः । यातम् ।
अदाभ्या । माध्वी इति । मम । श्रुतम् । हवम् ॥७॥

**अस्मिन्यज्ञे ऽअदाभ्या जरितारं शुभस्पती ।**
**अवस्युमश्विना युवं गृणन्तमुप भूषथो माध्वी मम श्रुतं हवम् ॥८॥**
अस्मिन् । यज्ञे । अदाभ्या । जरितारम् । शुभः । पती इति ॥
अवस्युम् । अश्विना । युवम् । गृणन्तम् । उप । भूषथः ।
माध्वी इति । मम । श्रुतम् । हवम् ॥८॥

**अभूदुषा रुशत्पशुराग्निरधाय्यृत्वियः ।**
**अयोजि वां वृषण्वसू रथो दस्रावमर्त्त्यो माध्वी मम श्रुतं हवम् ॥९॥ ( १६ ) [ ५५८ ]**
अभूत् । उषा । रुशत्०पशुः । आ । अग्निः । अधायि ।
ऋत्वियः ॥ अयोजि । वाम् । वृषण्वसू इति वृषण्०वसू ।
रथः । दस्रौ । अमर्त्त्यः । माध्वी इति । मम । श्रुतम् । हवम् ॥९॥

## ( ७६ )

५ भौमोऽत्रिः । अश्विनौ । त्रिष्टुप् ।

**आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो ऽअस्थुः ।**
**अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छ ॥१॥**
आ । भाति । अग्निः । उषसाम् । अनीकम् । उत् । विप्राणाम् ।
देव०याः । वाचः । अस्थुः ॥ अर्वाञ्चा । नूनम् । रथ्या । इह ।
यातम् । पीपि०वांसम् । अश्विना । घर्मम् । अच्छ ॥१॥

**न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।**
**दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्त्तिं दाशुषे शंभविष्ठा ॥२॥**
न । संस्कृतम् । प्र । मिमीतः । गमिष्ठा । अन्ति । नूनम् ।
अश्विना । उप०स्तुता । इह ॥ दिवा । अभि०पित्वे । अवसा ।
आ०गमिष्ठा । प्रति । अवर्त्तिम् । दाशुषे । शम्०भविष्ठा ॥२॥

**उता यातं संगवे प्रातरह्नो मध्यंदिन उदिता सूर्यस्य ।**
**दिवा नक्तमवसा शंतमेन नेदानीं पीतिरश्विना ततान ॥३॥**
उत । आ । यातम् । सम्ऽगवे । प्रातः । अह्नः । मध्यन्दिने ।
उत्ऽइता । सूर्यस्य ॥ दिवा । नक्तम् । अवसा । शम्ऽतमेन ।
न । इदानीम् । पीतिः । अश्विना । आ । ततान ॥३॥

**इदं हि वां प्रदिवि स्थानमोक इमे गृहा अश्विनेदं दुरोणम् ।**
**आ नो दिवो बृहतः पर्वतादाद्भ्यो यातमिषमूर्जं वहन्ता ॥४॥**
इदम् । हि । वाम् । प्रऽदिवि । स्थानम् । ओकः । इमे । गृहाः ।
अश्विना । इदम् । दुरोणम् ॥ आ । नः । दिवः । बृहतः ।
पर्वतात् । आ । अत्ऽभ्यः । यातम् । इषम् । ऊर्जम् । वहन्ता ॥४॥

**समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।**
**आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥५॥ (१७) [ ५६३ ]**
सम् । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा ।
सुऽप्रनीती । गमेम ॥ आ । नः । रयिम् । वहतम् । आ ।
उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥५॥

## ( ७७ )

५ भौमोऽत्रिः । अश्विनौ । त्रिष्टुप् ।

**प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः ।**
**प्रातर्हि यज्ञमश्विना दधाते प्र शंसन्ति कवयः पूर्वभाजः ॥१॥**
प्रातःऽयावाना । प्रथमा । यजध्वम् । पुरा । गृध्रात् ।
अररुषः । पिबातः ॥ प्रातः । हि । यज्ञम् । अश्विना ।
दधाते इति । प्र । शंसन्ति । कवयः । पूर्वऽभाजः ॥१॥

**प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया ऽअजुष्टम् ।**
**उतान्यो ऽअस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान् ॥२॥**

प्रातः । यजध्वम् । अश्विना । हिनोत । न । सायम् । अस्ति ।
देव०याः । अजुष्टम् ॥ उत । अन्यः । अस्मत् । यजते ।
वि । च । आवः । पूर्वःऽपूर्वः । यजमानः । वनीयान् ॥२॥

**हिरण्यत्वङ्मधुवर्णो घृतस्नुः पृक्षो वहन्ना रथो वर्तते वाम् ।**
**मनोजवा ऽअश्विना वातरंहा येनातियाथो दुरितानि विश्वा ॥३॥**

हिरण्य०त्वक् । मधु०वर्णः । घृत०स्नुः । पृक्षः । वहन् । आ ।
रथः । वर्तते । वाम् ॥ मनःऽजवाः । अश्विना । वात०रंहाः ।
येन । अति०याथः । दुःऽइतानि । विश्वा ॥३॥

**यो भूयिष्ठं नासत्याभ्यां विवेष चनिष्ठं पित्वो ररते विभागे ।**
**स तोकमस्य पीपरच्छमीभिरनूर्ध्वभासः सदमित्तुतुर्यात् ॥४॥**

यः । भूयिष्ठम् । नासत्याभ्याम् । विवेष । चनिष्ठम् ।
पित्वः । ररते । वि०भागे ॥ सः । तोकम् । अस्य । पीपरत् ।
शमीभिः । अनूर्ध्व०भासः । सदम् । इत् । तुतुर्यात् ॥४॥

**समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।**
**आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥५॥ ( १८ ) [ ५६८ ]**

सम् । अश्विनोः । अवसा । नूतनेन । मयः०ऽभुवा।
सु०प्रनीनी। गमेम॥ आ । नः । रयिम् । वहतम्। आ ।
उत। वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥५॥

# ( ७८ )

९ सप्तवध्रिरात्रेयः । अश्विनौ ( ५-९ गर्भस्त्राविण्युपनिषद् ) ।
अनुष्टुप्, १-३ उष्णिक्, ४ त्रिष्टुप् ।

**अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।**
**हंसाविव पततमा सुताँ उप ॥१॥**

अश्विनौ । आ । इह । गच्छतम् । नासत्या । मा । वि । वेनतम् ॥
हंसौऽइव । पततम् । आ । सुतान् । उप ॥१॥

**अश्विना हरिणाविव गौराविवानु यवसम् ।**
**हंसाविव पततमा सुताँ उप ॥२॥**

अश्विना । हरिणौऽइव । गौरौऽइव । अनु । यवसम् ॥
हंसौऽइव । पततम् । आ । सुतान् । उप ॥२॥

**अश्विना वाजिनीवसू जुषेथां यज्ञमिष्टये ।**
**हंसाविव पततमा सुताँ उप ॥३॥**

अश्विना । वाजिनीवसू इति वाजिनी०वसू । जुषेथाम् । यज्ञम् । इष्टये ॥
हंसौऽइव । पततम् । आ । सुतान् । उप ॥३॥

**अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेव योषा ।**
**श्येनस्य चिज्जवसा नूतनेनागच्छतमश्विना शंतमेन ॥४॥**

अत्रिः । यत् । वाम् । अव०रोहन् । ऋबीसम् । अजोहवीत् ।
नाधमानाऽइव । योषा ॥ श्येनस्य । चित् । जवसा ।
नूतनेन । आ । अगच्छतम् । अश्विना । शम्०तमेन ॥४॥

**वि जिहीष्व वनस्पते योनिः सूष्यन्त्याइव ।**
**श्रुतं मे ऽअश्विना हवं सप्तवध्रिं च मुञ्चतम् ॥५॥ ( १९ )**

वि । जिहीष्व । वनस्पते । योनिः । सूष्यन्त्याःऽइव ॥
श्रुतम् । मे । अश्विना । हवम् । सप्तऽवध्रिम् । च । मुञ्चतम् ॥५॥

**भीताय नाधमानाय ऽऋषये सप्तवध्रये ।**
**मायाभिरश्विना युवं वृक्षं सं च वि चाचथः ॥६॥**
भीताय । नाधमानाय । ऋषये । सप्तऽवध्रये ॥
मायाभिः । अश्विना । युवम् । वृक्षम् । सम् । च । वि । च । अचथः ॥६॥

**यथा वातः पुष्करिणीं समिङ्गयति सर्वतः ।**
**एवा ते गर्भ ऽएजतु निरैतु दशमास्यः ॥७॥**
यथा । वातः । पुष्करिणीम् । सम्ऽइङ्गयति । सर्वतः ।
एव । ते । गर्भः । एजतु । निःऽऐतु । दशऽमास्यः ॥७॥

**यथा वातो यथा वनं यथा समुद्र ऽएजति ।**
**एवा त्वं दशमास्य सहावेहि जरायुणा ॥८॥**
यथा । वातः । यथा । वनम् । यथा । समुद्रः । एजति ॥
एव । त्वम् । दशऽमास्य । सह । अव । इहि । जरायुणा ॥८॥

**दश मासाञ्छशयानः कुमारो ऽअधि मातरि ।**
**निरैतु जीवो ऽअक्षतो जीवो जीवन्त्या ऽअधि ॥९॥ ( २० )** [ ५७७ ]
दश । मासान् । शशयानः । कुमारः । अधि । मातरि ॥
निःऽऐतु । जीवः । अक्षतः । जीवः । जीवन्त्या । अधि ॥९॥

# ( ७९ )

१० सत्यश्रवा आत्रेयः । उषाः । पङ्क्तिः ।

**महे नो ऽअद्य बोधयोषो राये दिवित्मती ।**
**यथा चिन्नो ऽअबोधयः सत्यश्रवसि वाय्ये सुजाते ऽअश्वसूनृते ॥१॥**

महे । नः । अद्य । बोधय । उषः । राये ।
दिवित्मती ॥ यथा । चित् । नः । अबोधयः ।
सत्य०श्रवसि । वाय्ये । सु०जाते । अश्व०सूनृते ॥१॥

**या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः ।**
**सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते ऽअश्वसूनृते ॥२॥**

या । सु०नीथे । शौचत्०रथे । वि । औच्छः ।
दुहितः । दिवः ॥ सा । वि । उच्छ । सहीयसि ।
सत्य०श्रवसि । वाय्ये । सु०जाते । अश्व०सूनृते ॥२॥

**सा नो ऽअद्याभरद्वसुर्व्युच्छा दुहितर्दिवः ।**
**यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते ऽअश्वसूनृते ॥३॥**

सा । नः । अद्य । आभरत्०वसुः । वि । उच्छ ।
दुहितः । दिवः ॥ यो इति । वि । औच्छः । सहीयसि ।
सत्य०श्रवसि । वाय्ये । सु०जाते । अश्व०सूनृते ॥३॥

**अभि ये त्वा विभावरि स्तोमैर्गृणन्ति वह्नयः ।**
**मघैर्मघोनि सुश्रियो दामन्वन्तः सुरातयः सुजाते ऽअश्वसूनृते ॥४॥**

अभि । ये । त्वा । विभा०वरि । स्तोमैः । गृणन्ति ।
वह्नयः ॥ मघैः । मघोनि । सु०श्रियः । दामन्०वन्तः ।
सु०रातयः । सु०जाते । अश्व०सूनृते ॥४॥

यच्चिद्धि ते गणा इमे छदयन्ति मघत्तये ।
परि चिद्वष्टयो दधुर्ददतो राधो अह्रयं सुजाते अश्वसूनृते ॥५॥ ( २१ )
यत् । चित् । हि । ते । गणाः । इमे । छदयन्ति ।
मघत्तये ॥ परि । चित् । वष्टयः । दधुः । ददतः ।
राधः । अह्रयम् । सु॰जाते । अश्व॰सूनृते ॥५॥

ऐषु धा वीरवद्यश उषो मघोनि सूरिषु ।
ये नो राधांस्यह्रया मघवानो अरासत सुजाते अश्वसूनृते ॥६॥
आ । एषु । धाः । वीर॰वत् । यशः । उषः ।
मघोनि । सूरिषु ॥ ये । नः । राधांसि । अह्रया ।
मघ॰वानः । अरासत । सु॰जाते । अश्व॰सूनृते ॥६॥

तेभ्यो द्युम्नं बृहद्यश उषो मघोन्या वह ।
ये नो राधांस्यश्व्या गव्या भजन्त सूरयः सुजाते अश्वसूनृते ॥७॥
तेभ्यः । द्युम्नम् । बृहत् । यशः । उषः । मघोनि ।
आ । वह ॥ ये । नः । राधांसि । अश्व्या । गव्या ।
भजन्त । सूरयः । सु॰जाते । अश्व॰सूनृते ॥७॥

उत नो गोमतीरिष आ वहा दुहितर्दिवः ।
साकं सूर्यस्य रश्मिभिः शुक्रैः शोचद्भिरर्चिभिः सुजाते अश्वसूनृते ॥८॥
उत । नः । गो॰मतीः । इषः । आ । वह । दुहितः ।
दिवः ॥ साकम् । सूर्यस्य । रश्मि॰भिः । शुक्रैः ।
शोचत्॰भिः । अर्चि॰भिः । सु॰जाते । अश्व॰सूनृते ॥८॥

व्युच्छा दुहितर्दिवो मा चिरं तनुथा अपः ।
नेत्त्वा स्तेनं यथा रिपुं तपाति सूरो अर्चिषा सुजाते अश्वसूनृते ॥९॥

वि । उच्छ । दुहितः । दिवः । मा । चिरम् । तनुथाः ।
अपः ॥ न । इत् । त्वा । स्तेनम् । यथा । रिपुम् ।
तपाति । सूरः । अर्चिषा । सुऽजाते । अश्वऽसूनृते ॥९॥

**एतावद्वेदुषस्त्वं भूयो वा दातुमर्हसि ।**
**या स्तोतृभ्यो विभावर्युच्छन्ती न प्रमीयसे सुजाते ऽअश्वसूनृते ॥१०॥ ( २२ ) [ ५८७ ]**
एतावत् । वा । इत् । उषः । त्वम् । भूयः । वा । दातुम् ।
अर्हसि ॥ या । स्तोतृऽभ्यः । विभाऽवरि । उच्छन्तीं ।
न । प्रऽमीयसे । सुऽजाते । अश्वऽसूनृते ॥१०॥

## ( ८० )

६ सत्यश्रवा आत्रेयः। उषाः । त्रिष्टुप् ।

**द्युतद्यामानं बृहतीमृतेन ऽऋतावरीमरुणप्सुं विभातीम् ।**
**देवीमुषसं स्वरावहन्तीं प्रति विप्रासो मतिभिर्जरन्ते ॥१॥**
द्युतत्ऽयामानम् । बृहतीम् । ऋतेन । ऋतऽवरीम् । अरुणऽप्सुम् ।
विऽभातीम् ॥ देवीम् । उषसम् । स्वः । आऽवहन्तीम् ।
प्रति । विप्रासः । मतिऽभिः । जरन्ते ॥१॥

**एषा जनं दर्शता बोधयन्ती सुगान्पथः कृण्वती यात्यग्रे ।**
**बृहद्रथा बृहती विश्वमिन्वोषा ज्योतिर्यच्छत्यग्रे ऽअह्नाम् ॥२॥**
एषा । जनम् । दर्शता । बोधयन्ती । सुऽगान् । पथः ।
कृण्वती । याति । अग्रे ॥ बृहत्ऽरथा । बृहती । विश्वम्ऽइन्वा ।
उषाः । ज्योतिः । यच्छति । अग्रे । अह्नाम् ॥२॥

**एषा गोभिररुणेभिर्युजानास्रेधन्ती रयिमप्रायु चक्रे ।**
**पथो रदन्ती सुविताय देवी पुरुष्टुता विश्ववारा वि भाति ॥३॥**

एषा । गोभिः । अरुणेभिः । युजाना । अस्रेधन्ती ।
रयिम् । अप्र०आयु । चक्रे ॥ पथः । रदन्ती ।
सुवितायं । पुरु०स्तुता । विश्व०वारा । वि । भाति ॥३॥

**एषा व्यैनी भवति द्विबर्हा ऽआविष्कृण्वाना तन्वं पुरस्तात् ।**
**ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥४॥**
एषा । वि०एनी । भवति । द्वि०बर्हाः । आविःऽकृण्वाना ।
तन्वम् । पुरस्तात् ॥ ऋतस्यं । पन्थाम् । अनु । एति ।
साधु । प्रजानतीऽइव । न । दिशः । मिनाति ॥४॥

**एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो ऽअस्थात् ।**
**अप द्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिषागात् ॥५॥**
एषा । शुभ्रा । न । तन्वः । विदाना । ऊर्ध्वाऽइव । स्नाती ।
दृशये । नः । अस्थात् ॥ अप । द्वेषः । बाधमाना । तमांसि ।
उषाः । दिवः । दुहिता । ज्योतिषा । आ । अगात् ॥५॥

**एषा प्रतीची दुहिता दिवो नॄन्योषेव भद्रा नि रिणीते ऽअप्सः ।**
**व्यूर्ण्वती दाशुषे वार्याणि पुनर्ज्योतिर्युवतिः पूर्वथाकः ॥६॥ (२३) [५९३]**
एषा । प्रतीची । दुहिता । दिवः । नॄन् । योषाऽइव । भद्रा ।
नि । रिणीते । अप्सः ॥ वि०ऊर्ण्वती । दाशुषे । वार्याणि ।
पुनः । ज्योतिः । युवतिः । पूर्व०था । अकरित्यकः ॥६॥

## ( ८१ )

५ श्यावाश्व आत्रेयः । सविता । जगती ।

**युञ्जते मनं ऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।**
**वि होत्रा दधे वयुनाविदेक ऽइन्मही देवस्य सवितुः परिष्टुतिः ॥१॥**

युञ्जते । मनः । उत । युञ्जते । धियः । विप्राः । विप्रस्य ।
बृहतः । विपःऽचितः ॥ वि । होत्राः । दधे । वयुनऽवित् ।
एकः । इत् । मही । देवस्य । सवितुः । परिऽस्तुतिः ॥१॥

**विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे ।**
**वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति ॥२॥**
विश्वा । रूपाणि । प्रति । मुञ्चते । कविः । प्र । असावीत् ।
भद्रम् । द्विऽपदे । चतुःऽपदे ॥ वि । नाकम् । अख्यत् ।
सविता । वरेण्यः । अनु । प्रऽयानम् । उषसः । वि । राजति ॥२॥

**यस्य प्रयाणमन्वन्य ऽइद्ययुर्देवा देवस्य महिमानमोजसा ।**
**यः पार्थिवानि विममे स ऽएतशो रजांसि देवः सविता महित्वना ॥३॥**
यस्य । प्रऽयानम् । अनु । अन्ये । इत् । ययुः । देवाः ।
देवस्य । महिमानम् । ओजसा ॥ यः । पार्थिवानि । विऽममे ।
सः । एतशः । रजांसि । देवः । सविता । महिऽत्वना ॥३॥

**उत यासि सवितस्त्रीणि रोचनोत सूर्यस्य रश्मिभिः समुच्यसि ।**
**उत रात्रीमुभयतः परीयस ऽउत मित्रो भवसि देव धर्मभिः ॥४॥**
उत । यासि । सवितरिति । त्रीणि । रोचना । उत । सूर्यस्य ।
रश्मिऽभिः । सम् । उच्यसि ॥ उत । रात्रीम् । उभयतः ।
परि । ईयसे । उत । मित्रः । भवसि । देव । धर्मऽभिः ॥४॥

**उतेशिषे प्रसवस्य त्वमेक ऽइदुत पूषा भवसि देव यामभिः ।**
**उतेदं विश्वं भुवनं वि राजसि श्यावाश्वस्ते सवितः स्तोममानशे ॥५॥ ( २४ ) [ ५९८ ]**
उत । ईशिषे । प्रऽसवस्य । त्वम् । एकः । इत् । उत । पूषा ।
भवसि । देव । यामऽभिः ॥ उत । इदम् । विश्वम् । भुवनम् । वि ।
राजसि । श्यावऽअश्वः । ते । सवितरिति । स्तोमम् । आनशे ॥५॥

# ( ८२ )

९ श्यावाश्व आत्रेयः । सविता । गायत्री, १ अनुष्टुप् ।

**तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् ।**

**श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥१॥**

तत् । सवितुः । वृणीमहे । वयम् । देवस्य । भोजनम् ॥

श्रेष्ठम् । सर्व॰धातमम् । तुरम् । भगस्य । धीमहि ॥१॥

**अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियम् ।**

**न मिनन्ति स्वराज्यम् ॥२॥**

अस्य । हि । स्वयशः२तरम् । सवितुः । कत् । चन । प्रियम् ॥

न । मिनन्ति । स्व॰राज्यम् ॥२॥

**स हि रत्नानि दाशुषे सुवाति सविता भगः ।**

**तं भागं चित्रमीमहे ॥३॥**

सः । हि । रत्नानि । दाशुषे । सुवाति । सविता । भगः ॥

तम् । भागम् । चित्रम् । ईमहे ॥३॥

**अद्या नो देव सवितः प्रजावत्सावीः सौभगम् ।**

**परा दुःष्वप्न्यं सुव ॥४॥**

अद्य । नः । देव । सवितरिति । प्रजा॰वत् । सावीः । सौभगम् ॥

परा । दुः२स्वप्न्यम् । सुव ॥४॥

**विश्वानि देव सवितर्दुरितानि परा सुव ।**

**यद्भद्रं तन्न ऽआ सुव ॥५॥ ( २५ )**

विश्वानि । देव । सवितः । दुःऽइतानि । परा । सुव ॥
यत् । भद्रम् । तत् । नः । आ । सुव ॥५॥

**अनागसो ऽअदितये देवस्य सवितुः सवे ।**
**विश्वा वामानि धीमहि ॥६॥**
अनागसः । अदितये । देवस्य । सवितुः । सवे ।
विश्वा । वामानि । धीमहि ॥६॥

**आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे ।**
**सत्यसवं सवितारम् ॥७॥**
आ । विश्व०देवम् । सत्०पतिम् । सु०उक्तैः । अद्य । वृणीमहे ॥
सत्य०सवम् । सवितारम् ॥७॥

**य ऽइमे ऽउभे ऽअहनी पुर ऽएत्यप्रयुच्छन् ।**
**स्वाधीर्देवः सविता ॥८॥**
यः । इमे इति । उभे इति । अहनी इति । पुरः । एति । अप्र०युच्छन् ॥
सु०आधीः । देवः । सविता ॥८॥

**य ऽइमा विश्वा जातान्याश्रावयति श्लोकेन ।**
**प्र च सुवाति सविता ॥९॥ ( २६ )** [ ६०७ ]
यः । इमा । विश्वा । जातानि । आ०श्रावयति । श्लोकेन ॥
प्र । च । सुवाति । सविता ॥९॥

# ( ८३ )

**१० भौमोऽत्रिः । पर्जन्यः । त्रिष्टुप् २-४ जगती, ९ अनुष्टुप् ।**

**अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास ।**
**कनिक्रदद्वृषभो जीरदानू रेतो दधात्योषधीषु गर्भम् ॥१॥**

अच्छं । वद । तवसम् । गीःऽभिः । आभिः । स्तुहि ।
पर्जन्यम् । नमसा । विवास ॥ कनिक्रदत् । वृषभः ।
जीरऽदानुः । रेतः । दधाति । ओषधीषु । गर्भम् ॥१॥

**वि वृक्षान्हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् ।**
**उतानागा ऽईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः ॥२॥**

वि । वृक्षान् । हन्ति । उत । हन्ति । रक्षसः । विश्वम् ।
बिभाय । भुवनम् । महाऽवधात् ॥ उत । अनागाः । ईषते ।
वृष्ण्यऽवतः । यत् । पर्जन्यः । स्तनयन् । हन्ति । दुःऽकृतः ॥२॥

**रथीव कशयाश्वाँ ऽअभिक्षिपन्नाविर्दूतान्कृणुते वर्ष्याँ३ ऽअह ।**
**दूरात्सिंहस्य स्तनथा ऽउदीरते यत्पर्जन्यः कृणुते वर्ष्यं१ नभः ॥३॥**

रथीऽइव । कशया । अश्वान् । अभिऽक्षिपन् । आविः । दूतान् ।
कृणुते । वर्ष्यान् । अह ॥ दूरात् । सिंहस्य । स्तनथाः । उत् ।
ईरते । यत् । पर्जन्यः । कृणुते । वर्ष्यम् । नभः ॥३॥

**प्र वाता वान्ति पतयन्ति विद्युत ऽउदोषधीर्जिहते पिन्वते स्वः ।**
**इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति ॥४॥**

प्र । वाताः । वान्ति । पतयन्ति । विऽद्युतः । उत् । ओषधीः ।
जिहते । पिन्वते । स्व१रिति स्वः ॥ इरा । विश्वस्मै । भुवनाय ।
जायते । यत् । पर्जन्यः । पृथिवीम् । रेतसा । अवति ॥४॥

**यस्य व्रते पृथिवी नन्नमीति यस्य व्रते शफवज्जर्भुरीति ।**
**यस्य व्रत ऽओषधीर्विश्वरूपाः स नः पर्जन्य महि शर्म यच्छ ॥५॥ ( २७ )**

यस्य । व्रते । पृथिवी । नन्नमीति । यस्य । व्रते ।
शफऽवत् । जर्भुरीति ॥ यस्य । व्रते । ओषधीः ।
विश्वऽरूपाः । सः । नः । पर्जन्य । महि । शर्म । यच्छ ॥५॥

दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो ऽअश्वस्य धाराः ।
अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः ॥६॥
दिवः । नः । वृष्टिम् । मरुतः । ररीध्वम् । प्र । पिन्वत ।
वृष्णः । अश्वस्य । धाराः ॥ अर्वाङ् । एतेन । स्तनयित्नुना ।
आ । इहि । अपः । नि०सिञ्चन् । असुरः । पिता । नः ॥६॥

अभि क्रन्द स्तनय गर्भमा धा ऽउदन्वता परि दीया रथेन ।
दृतिं सु कर्ष विषितं न्यञ्चं समा भवन्तूद्वतो निपादाः ॥७॥
अभि । क्रन्द । स्तनय । गर्भम् । आ । धाः । उदन्०वता ।
परि । दीय । रथेन ॥ दृतिम् । सु । कर्ष । वि०सितम् ।
न्यञ्चम् । समाः । भवन्तु । उत्०वतः । नि०पादाः ॥७॥

महान्तं कोशमुदचा नि षिञ्च स्यन्दन्तां कुल्या विषिताः पुरस्तात् ।
घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्यः ॥८॥
महान्तम् । कोशम् । उत् । अच । नि । सिञ्च । स्यन्दन्ताम् ।
कुल्याः । वि०सिताः । पुरस्तात् ॥ घृतेन । द्यावापृथिवी इति ।
वि । उन्धि । सु०प्रपानम् । भवतु । अघ्न्याभ्यः ॥८॥

यत्पर्जन्य कनिक्रदत्स्तनयन्हंसि दुष्कृतः ।
प्रतीदं विश्वं मोदते यत्किं च पृथिव्यामधि ॥९॥
यत् । पर्जन्य । कनिक्रदत् । स्तनयन् । हंसि । दुः२कृतः ॥
प्रति । इदम् । विश्वम् । मोदते । यत् । किम् । च । पृथिव्याम् । अधि ॥९॥

अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा ऽउ ।
अजीजन ऽओषधीर्भोजनाय कमुत प्रजाभ्योऽविदो मनीषाम् ॥१०॥ ( २८ ) [ ६१७ ]

अवर्षीः । वर्षम् । उत् । ऊँ इति । सु । गृभाय । अकः ।
धन्वानि । अति॰एतवै । ऊँ इति ॥ अजीजनः । ओषधीः ।
भोजनाय । कम् । उत । प्र॰जाभ्यः । अविदः । मनीषाम् ॥१०॥

## ( ८४ )

४ भौमोऽत्रिः । पृथिवी । अनुष्टुप् ।

**बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।**
**प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥१॥**
बट् । इत्था । पर्वतानाम् । खिद्रम् । बिभर्षि । पृथिवि ॥
प्र । या । भूमिम् । प्रवत्वति । मह्ना । जिनोषि । महिनि ॥१॥

**स्तोमासस्त्वा विचारिणि प्रति ष्टोभन्त्यक्तुभिः ।**
**प्र या वाजं न हेषन्तं पेरुमस्यस्यर्जुनि ॥२॥**
स्तोमासः । त्वा । वि॰चारिणि । प्रति । स्तोभन्ति । अक्तु॰भिः ।
प्र । या । वाजम् । न । हेषन्तम् । पेरुम् । अस्यसि । अर्जुनि ॥२॥

**दृळ्हा चिद्या वनस्पतीन्क्ष्मया दर्धर्ष्योजसा ।**
**यत्ते ऽअभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टयः ॥३॥ ( २९ )** [ ६२० ]
दृळ्हा । चित् । या । वनस्पतीन् । क्ष्मया । दर्धर्षि । ओजसा ॥
यत् । ते । अभ्रस्य । वि॰द्युतः । दिवः । वर्षन्ति । वृष्टयः ॥३॥

# अथ खिलम्

१ भौमोऽत्रिः । पृथिवी । अनुष्टुप् ।

***वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः ।**
**रोहन्तु सर्वबीजान्यव ब्रह्मद्विषो जहि ॥१॥ [ १० ]**

वर्षन्तु । ते । विभाऽवरि । दिवः । अभ्रस्य । विऽद्युतः ॥
रोहन्तु । सर्वऽबीजानि । अर्व । ब्रह्मऽद्विषः । जहि ॥४॥

## ( ८५ )

८ भौमोऽत्रिः । वरुणः । त्रिष्टुप् ।

**प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय ।**
**वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय ॥१॥**

प्र । सम्ऽराजे । बृहत् । अर्च । गभीरम् । ब्रह्म । प्रियम् ।
वरुणाय । श्रुताय ॥ वि । यः । जघान । शमिताऽइव ।
चर्म । उपऽस्तिरे । पृथिवीम् । सूर्याय ॥१॥

**वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु ।**
**हृत्सु क्रतुं वरुणो अप्स्वग्निं दिवि सूर्यमदधात्सोममद्रौ ॥२॥**

वनेषु । वि । अन्तरिक्षम् । ततान । वाजम् । अर्वत्ऽसु ।
पयः । उस्रियासु ॥ हृत्ऽसु । क्रतुम् । वरुणः । अप्ऽसु ।
अग्निम् । दिवि । सूर्यम् । अदधात् । सोमम् । अद्रौ ॥२॥

**नीचीनबारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।**
**तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥३॥**

नीचीनऽबारम् । वरुणः । कवन्धम् । प्र । ससर्ज ।
रोदसी इति । अन्तरिक्षम् ॥ तेन । विश्वस्य । भुवनस्य ।
राजा । यवम् । न । वृष्टिः । वि । उनत्ति । भूम ॥३॥

**उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित् ।**
**समभ्रेण वसत पर्वतासस्तविषीयन्तः श्रथयन्त वीराः ॥४॥**

उनत्ति । भूमिम् । पृथिवीम् । उत । द्याम् । यदा । दुग्धम् ।
वरुणः । वष्टि । आत् । इत् ॥ सम् । अभ्रेण । वसत ।
पर्वतासः । तविषीऽयन्तः । श्रथयन्त । वीराः ॥४॥

**इमामू ष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचम् ।**
**मानेनेव तस्थिवाँ ऽअन्तरिक्षे वि यो ममे पृथिवीं सूर्येण ॥५॥ ( ३० )**
इमाम् । ऊँ इति । सु । आसुरस्य । श्रुतस्य । महीम् ।
मायाम् । वरुणस्य । प्र । वोचम् ॥ मानेनऽइव । तस्थिऽवान् ।
अन्तरिक्षे । वि । यः । ममे । पृथिवीम् । सूर्येण ॥५॥

**इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष ।**
**एकं यदुद्ग न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम् ॥६॥**
इमाम् । ऊँ इति । नु । कविऽतमस्य । मायाम् । महीम् । देवस्य ।
नकिः । आ । दधर्ष ॥ एकम् । यत् । उद्गा । न । पृणन्ति ।
एनीः । आऽसिञ्चन्तीः । अवनयः । समुद्रम् ॥६॥

**अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद्भ्रातरं वा ।**
**वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रथस्तत् ॥७॥**
अर्यम्यम् । वरुण । मित्र्यम् । वा । सखायम् । वा । सदम् ।
इत् । भ्रातरम् । वा ॥ वेशम् । वा । नित्यम् । वरुण । अरणम् ।
वा । यत् । सीम् । आगः । चकृम । शिश्रथः । तत् ॥७॥

**कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म ।**
**सर्वा ता वि ष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः ॥८॥ ( ३१ ) [ ६२८ ]**

कितवासः । यत् । रिरिपुः । न । दीवि । यत् । वा । घ ।
सत्यम् । उत । यत् । न । विद्म ॥ सर्वा । ता । वि । स्य ।
शिथिराऽईव । देव । अध । ते । स्याम । वरुण । प्रियासः ॥८॥

# ( ८६ )

६ भौमोऽत्रिः । इन्द्राग्नी । अनुष्टुप्, ६ विराट्पूर्वा ।

**इन्द्राग्नी यमवथ उभा वाजेषु मर्त्यम् ।**
**दृळ्हा चित्स प्र भेदति द्युम्ना वाणीरिव त्रितः ॥१॥**
इन्द्राग्नी इति । यम् । अवथः । उभा । वाजेषु । मर्त्यम् ॥
दृळ्हा । चित् । सः । प्र । भेदति । द्युम्ना । वाणीःऽइव । त्रितः ॥१॥

**या पृतनासु दुष्टरा या वाजेषु श्रवाय्या ।**
**या पञ्च चर्षणीरभीन्द्राग्नी ता हवामहे ॥२॥**
या । पृतनासु । दुस्तरा । या । वाजेषु । श्रवाय्या ।
या । पञ्च । चर्षणीः । अभि । इन्द्राग्नी इति । ता । हवामहे ॥२॥

**तयोरिदमवच्छवस्तिग्मा दिद्युन्मघोनोः ।**
**प्रति द्रुणा गभस्त्योर्गवां वृत्रघ्न एषते ॥३॥**
तयोः । इत् । अमऽवत् । शवः । तिग्मा । दिद्युत् । मघोनोः ॥
प्रति । द्रुणा । गभस्त्योः । गवाम् । वृत्रऽघ्ने । आ । ईषते ॥३॥

**ता वामेषे रथानामिन्द्राग्नी हवामहे ।**
**पती तुरस्य राधसो विद्वांसा गिर्वणस्तमा ॥४॥**
ता । वाम् । एषे । रथानाम् । इन्द्राग्नी इति । हवामहे ॥
पती इति । तुरस्य । राधसः । विद्वांसा । गिर्वणःऽतमा ॥४॥

ता वृधन्तावनु द्यून्मर्त्ताय देवावदभा ।
अर्हन्ता चित्पुरो दधेंऽशेव देवावर्वते ॥५॥
ता । वृधन्तौ । अनु । द्यून् । मर्त्ताय । देवौ । अदभा ॥
अर्हन्ता । चित् । पुरः । दधे । अंशाऽइव । देवौ । अर्वते ॥५॥

एवेन्द्राग्निभ्यामहावि हव्यं शूष्यं घृतं न पूतमद्रिभिः ।
ता सूरिषु श्रवो बृहद्रयिं गृणत्सु दिधृतमिषं गृणत्सु दिधृतम् ॥६॥ ( ३२ ) [ ६३४ ]
एव । इन्द्राग्नि०भ्याम् । अहावि । हव्यम् । शूष्यम् । घृतम् ।
न । पूतम् । अद्रि०भिः ॥ ता । सूरिषु । श्रवः । बृहत् ।
रयिम् । गृणत्०सु । दिधृतम् । इषम् । गृणत्०सु । दिधृतम् ॥६॥

## ( ८७ )

९ एवयामरुदात्रेयः । मरुतः । अतिजगती ।

प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा ऽएवयामरुत् ।
प्र शर्द्धाय प्रयज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥१॥
प्र । वः । महे । मतयः । यन्तु । विष्णवे । मरुत्वते ।
गिरि०जाः । एवयामरुत् ॥ प्र । शर्द्धाय । प्र०यज्यवे ।
सु०खादये । तवसे । भन्दत्०इष्टये । धुनि०व्रताय । शवसे ॥१॥

प्र ये जाता महिना ये च नु स्वयं प्र विद्मना ब्रुवत ऽएवयामरुत् ।
क्रत्वा तद्वो मरुतो नाधृषे शवो दाना मह्ना तदेषामधृष्टासो नाद्रयः ॥२॥
प्र । ये । जाताः । महिना । ये । च । नु । स्वयम् । प्र । विद्मना ।
ब्रुवते । एवयामरुत् ॥ क्रत्वा । तत् । वः । मरुतः । न । आ०धृषे ।
शवः । दाना । मह्ना । तत् । एषाम् । अधृष्टासः । न । अद्रयः ॥२॥

प्र ये दिवो बृहतः शृण्विरे गिरा सुशुक्वानः सुभ्व ऽएवयामरुत् ।
न येषामिरी सधस्थ ऽईष्ट ऽआँ ऽअग्नयो न स्वविद्युतः प्र स्पन्द्रासो धुनीनाम् ॥३॥
प्र । ये । दिवः । बृहतः । शृण्विरे । गिरा । सुऽशुक्वानः ।
सुऽभ्वः । एवयामरुत् ॥ न । येषाम् । इरी । सधऽस्थे । ईष्टे ।
आ । अग्नयः । न । स्वऽविद्युतः । प्र । स्पन्द्रासः । धुनीनाम् ॥३॥

स चक्रमे महतो निरुरुक्रमः समानस्मात्सदस ऽएवयामरुत् ।
यदायुक्त त्मना स्वादधिष्णुभिर्विष्पर्धसो विमहसो जिगाति शेवृधो नृभिः ॥४॥
सः । चक्रमे । महतः । निः । उरुऽक्रमः । समानस्मात् ।
सदसः । एवयामरुत् ॥ यदा । अयुक्त । त्मना । स्वात् । अधि ।
स्नुऽभिः । विऽस्पर्धसः । विऽमहसः । जिगाति । शेऽवृधः । नृऽभिः ॥४॥

स्वनो न वोऽमवान्रेजयद्वृषा त्वेषो ययिस्तविष ऽएवयामरुत् ।
येना सहन्त ऽऋञ्जत स्वरोचिषः स्थारश्मानो हिरण्ययाः स्वायुधास ऽइष्मिणः ॥५॥ ( ३३ )
स्वनः । न । वः । अमऽवान् । रेजयत् । वृषा । त्वेषः । ययिः ।
तविषः । एवयामरुत् ॥ येन । सहन्तः । ऋञ्जत । स्वऽरोचिषः ।
स्थाःऽरश्मानः । हिरण्ययाः । सुऽआयुधासः । इष्मिणः ॥५॥

अपारो वो महिमा वृद्धशवसस्त्वेषं शवोऽवत्वेवयामरुत् ।
स्थातारो हि प्रसितौ संदृशि स्थन ते न ऽउरुष्यता निदः शुशुक्वांसो नाग्नयः ॥६॥
अपारः । वः । महिमा । वृद्धऽशवसः । त्वेषम् । शवः ।
अवतु । एवयामरुत् ॥ स्थातारः । हि । प्रऽसितौ । सम्ऽदृशि ।
स्थन । ते । नः । उरुष्यत । निदः । शुशुक्वांसः । न । अग्नयः ॥६॥

ते रुद्रासः सुमखा ऽअग्नयो यथा तुविद्युम्ना ऽअवन्त्वेवयामरुत् ।
दीर्घं पृथु पप्रथे सद्म पार्थिवं येषामज्मेष्वा महः शर्द्धास्यद्भुतैनसाम् ॥७॥

ते । रुद्रासः । सु॰मखाः । अग्नयः । यथा । तुवि॰द्युम्नाः ।
अवन्तु । एवयामरुत् ॥ दीर्घम् । पृथु । पप्रथे । सद्म । पार्थिवम् ।
येषाम् । अज्मेषु । आ । महः । शर्द्धांसि । अद्भुत॰एनसाम् ॥७॥

**अद्वेषो नो मरुतो गातुमेतन श्रोता हवं जरितुरेवयामरुत् ।**
**विष्णोर्महः समन्यवो युयोतन स्मद्रथ्यो३ न दंसनाप द्वेषांसि सनुतः ॥८॥**
अद्वेषः । नः । मरुतः । गातुम् । आ । इतन । श्रोत । हवम् ।
जरितुः । एवयामरुत् ॥ विष्णोः । महः । स॰मन्यवः । युयोतन ।
स्मत् । रथ्यः । न । दंसना । अप । द्वेषांसि । सनुतरिति ॥८॥

**गन्ता नो यज्ञं यज्ञियाः सुशमि श्रोता हवमरक्ष ऽएवयामरुत् ।**
**ज्येष्ठासो न पर्वतासो व्योमनि यूयं तस्य प्रचेतसः स्यात दुर्धर्त्तवो निदः ॥९॥ ( ३४ ) [ ६४३ ]**
गन्त । नः । यज्ञम् । यज्ञियाः । सु॰शमि । श्रोत । हवम् ।
अरक्षः । एवयामरुत् ॥ ज्येष्ठासः । न । पर्वतासः । वि॰ओमनि ।
यूयम् । तस्य । प्र॰चेतसः । स्यात । दुः॰धर्त्तवः । निदः ॥९॥

॥ इति पञ्चमं मण्डलम् ॥

# ॥ अथ षष्ठं मण्डलम् ॥

( १ ) [ अथ प्रथमोऽनुवाकः ॥१॥ सू. १-१५

१३ बार्हस्पत्यो भरद्वाजः । अग्निः । त्रिष्टुप् ।

त्वं ह्यग्ने प्रथमो मनोतास्या धियो ऽअभवो दस्म होता ।
त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै ॥१॥
त्वम् । हि । अग्ने । प्रथमः । मनोता । अस्याः । धियः ।
अभवः । दस्म । होता ॥ त्वम् । सीम् । वृषन् । अकृणोः ।
दुस्तरीतु । सहः । विश्वस्मै । सहसे । सहध्यै ॥१॥

अधा होता न्यसीदो यजीयानिळस्पद ऽइषयन्नीड्यः सन् ।
तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो ऽअनु ग्मन् ॥२॥
अध । हाता । नि । असीदः । यजीयान् । इळः । पदे ।
इषयन् । ईड्यः । सन् ॥ तम् । त्वा । नरः । प्रथमम् ।
देव०यन्तः । महः । राये । चितयन्तः । अनु । ग्मन् ॥२॥

वृतेव यन्तं बहुभिर्वसव्यैइस्त्वे रयिं जागृवांसो ऽअनु ग्मन् ।
रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा दीदिवांसम् ॥३॥
वृताऽईव । यन्तम् । बहु०भिः । वसव्यैः । त्वे इति । रयिम् ।
जागृ०वांसः । अनु । ग्मन् ॥ रुशन्तम् । अग्निम् । दर्शतम् ।
बृहन्तम् । वपा०वन्तम् । विश्वहा । दीदि०वांसम् ॥३॥

पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव ऽआपन्नमृक्तम् ।
नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ ॥४॥

पदम् । देवस्य । नमसा । व्यन्तः । श्रवस्यवः । श्रवः ।
आपन् । अमृक्तम् ॥ नामानि । चित् । दधिरे ।
यज्ञियानि । भद्रायाम् । ते । रणयन्त । सम्ऽदृष्टौ ॥४॥

**त्वां वर्द्धन्ति क्षितयः पृथिव्यां त्वां राय ऽउभयासो जनानाम् ।**
**त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुषाणाम् ॥५॥ ( ३५ )**
त्वाम् । वर्द्धन्ति । क्षितयः । पृथिव्याम् । त्वाम् । रायः ।
उभयासः । जनानाम् ॥ त्वम् । त्राता । तरणे । चेत्यः ।
भूः । पिता । माता । सदम् । इत् । मानुषाणाम् ॥५॥

**सपर्येण्यः स प्रियो विक्ष्वग्निर्होता मन्द्रो नि षसादा यजीयान् ।**
**तं त्वा वयं दम ऽआ दीदिवांसमुप ज्ञुबाधो नमसा सदेम ॥६॥**
सपर्येण्यः । सः । प्रियः । विक्षु । अग्निः । होता । मन्द्रः ।
नि । ससाद । यजीयान् ॥ तम् । त्वा । वयम् । दमे ।
आ । दीदिऽवांसम् । उप । ज्ञुऽबाधः । नमसा । सदेम ॥६॥

**तं त्वा वयं सुध्योइ नव्यमग्ने सुम्नायव ऽईमहे देवयन्तः ।**
**त्वं विशो ऽअनयो दीद्यानो दिवो ऽअग्ने बृहता रोचनेन ॥७॥**
तम् । त्वा । वयम् । सुऽध्यः । नव्यम् । अग्ने ।
सुम्नऽयवः । ईमहे । देवऽयन्तः ॥ त्वम् । विशः ।
अनयः । दीद्यानः । दिवः । अग्ने । बृहता । रोचनेन ॥७॥

**विशां कविं विश्पतिं शश्वतीनां नितोशनं वृषभं चर्षणीनाम् ।**
**प्रेतीषणिमिषयन्तं पावकं राजन्तमग्निं यजतं रयीणाम् ॥८॥**
विशाम् । कविम् । विश्पतिम् । शश्वतीनाम् । निऽतोशनम् ।
वृषभम् । चर्षणीनाम् ॥ प्रेतिऽइषणिम् । इषयन्तम् ।
पावकम् । राजन्तम् । अग्निम् । यजतम् । रयीणाम् ॥८॥

**सो ऽअग्न ऽईजे शशमे च मर्त्तो यस्त ऽआनट् समिधा हव्यदातिम् ।**
**य ऽआहुतिं परि वेदा नमोभिर्विश्वेत्स वामा दधते त्वोतः ॥९॥**

सः । अग्ने । ईजे । शशमे । च । मर्त्तः । यः । ते । आनट् ।
सम्०इधा । हव्य०दातिम् ॥ यः । आ०हुतिम् । परि । वेद ।
नमःऽभिः । विश्वा । इत् । सः । वामा । दधते । त्वा०ऊतः ॥९॥

**अस्मा ऽउ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः ।**
**वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायां सुमतौ यतेम ॥१०॥**

अस्मै । ॐ इति । ते । महि । महे । विधेम । नमःऽभिः । अग्ने ।
सम्०इधा । उत । हव्यैः ॥ वेदी । सूनो इति । सहसः । गीःऽभिः ।
उक्थैः । आ । ते । भद्रायाम् । सु०मतौ । यतेम ॥१०॥

**आ यस्ततन्थ रोदसी वि भासा श्रवोभिश्च श्रवस्य१स्तरुत्रः ।**
**बृहद्भिर्वाजैः स्थविरेभिरस्मे रेवद्भिरग्ने वितरं वि भाहि ॥११॥**

आ । यः । ततन्थ । रोदसी इति । वि । भासा । श्रवःऽभिः ।
च । श्रवस्यः । तरुत्रः ॥ बृहत्०भिः । वाजैः । स्थविरेभिः ।
अस्मे इति । रेवत्०भिः । अग्ने । वि०तरम् । वि । भाहि ॥११॥

**नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।**
**पूर्वीरिषो बृहतीरारेअघा ऽअस्मे भद्रा सौश्रवसानि सन्तु ॥१२॥**

नृ०वत् । वसो इति । सदम् । इत् । धेहि । अस्मे इति ।
भूरि । तोकाय । तनयाय । पश्वः ॥ पूर्वीः । इषः । बृहतीः ।
आरे०अघाः । अस्मे इति । भद्रा । सौश्रवसानि । सन्तु ॥१२॥

पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन्वसुता ते ऽअश्याम् ।
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वे ॥१३॥ ( ३६ ) [ ६५६ ]
पुरूणि । अग्ने । पुरुधा । त्वा०या । वसूनि । राजन् । वसुता ।
ते । अश्याम् ॥ पुरूणि । हि । त्वे इति । पुरु०वार । सन्ति ।
अग्ने । वसु । विधते । राजनि । त्वे इति ॥१३॥

॥ इति चतुर्थाष्टके चतुर्थोऽध्यायः ॥ ४ ॥

# चतुर्थाध्यायस्य मन्त्रवर्गानुक्रमणी

ऋतस्य गोपावधि ॥१॥
वरुणं वो रिशादस ॥२॥
यश्चिकेत स सुक्रतु ॥३॥
आ चिकितान ॥४॥
बळित्था देव ॥ ५॥
प्र वो मित्राय गायत ॥६॥
त्री रोचना वरुण ॥७॥
पुरुरुणा चिद्ध्यस्त्य॥८॥
आ नो गन्तं ॥९॥
आ मित्रे वरुणे ॥१०॥
यदद्य स्थः परावति ॥११॥
युवोरत्रिश्चिकेतति ॥१२॥
कूष्ठो देवावश्विना ॥१३॥
अस्ति हि वामिह ॥१४॥
प्रति प्रियतमं रथं ॥१५॥
आ वां नरा मनोयुजो ॥१६॥
आ भात्यग्निरुषसा ॥१७॥
प्रातर्यावाणा प्रथमा ॥१८॥
अश्विनावेह गच्छतं ॥१९॥
वि जिहीष्व वनस्पते ॥२०॥
महे नो अद्य बोधयो ॥२१॥
ऐषु धा वीरवद् ॥२२॥
द्युतद्यामानं बृहती ॥२३॥
युञ्जते मन उत ॥२४॥
तत्सवितुर्वृणीमहे ॥२५॥
अनागसो अदितये ॥२६॥
अच्छा वद तवसं ॥२७॥
दिवो नो वृष्टिं ॥२८॥
बळित्था पर्वतानां ॥२९॥
प्र सम्राजे बृहदर्चा ॥३०॥
इमामू नु कवि ॥३१॥
इन्द्राग्नी यमवथ ॥३२॥
प्र वो महे मतयो ॥३३॥
अपारो वो महिमा ॥३४॥
त्वं ह्यग्ने प्रथमो ॥३५॥
सपर्येण्यः स प्रियो ॥३६॥

**॥ इति शाङ्खायनसंहितायां चतुर्थाष्टके चतुर्थोऽध्यायः ॥**
**( चतुर्थाध्याये वर्गाः ३६, सूक्तानि २६, ऋचः १७७ खिलम् १ )**

# ॥ चतुर्थाष्टके पञ्चमोऽध्यायः॥

**अथ पञ्चमोऽध्यायः॥५॥ वर्गाः १-३० ]** **[ षष्ठमण्डले सूक्तानि २-१६ ]**

## ( २ )

११ बार्हस्पत्यो भरद्वाजः । अग्निः । अनुष्टुप्, ११ शक्वरी ।

**त्वं हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे ।**
**त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥१॥**
त्वम् । हि । क्षैत०वत् । यशः । अग्ने । मित्रः । न । पत्यसे ॥
त्वम् । वि०चर्षणे । श्रवः । वसो इति । पुष्टिम् । न । पुष्यसि ॥१॥

**त्वां हि ष्मा चर्षणयो यज्ञेभिर्गीर्भिरीळते ।**
**त्वां वाजी यात्यवृको रजस्तूर्विश्वचर्षणिः ॥२॥**
त्वाम् । हि । स्म । चर्षणयः । यज्ञेभिः । गीःऽभिः । ईळते ॥
त्वाम् । वाजी । याति । अवृकः । रजःऽतूः । विश्व०चर्षणिः ॥२॥

**सजोषस्त्वा दिवो नरो यज्ञस्य केतुमिन्धते ।**
**यद्ध स्य मानुषो जनः सुम्नायुर्जुह्वे ऽअध्वरे ॥३॥**
स०जोषः । त्वा । दिवः । नरः । यज्ञस्य । केतुम् । इन्धते ॥
यत् । ह । स्य । मानुषः । जनः । सुम्न०युः । जुह्वे । अध्वरे ॥३॥

**ऋधद्यस्ते सुदानवे धिया मर्त्तः शशमते ।**
**ऊती ष बृहतो दिवो द्विषो ऽअंहो न तरति ॥४॥**
ऋधत् । यः । ते । सु०दानवे । धिया । मर्त्तः । शशमते ॥
ऊती । सः । बृहतः । दिवः । द्विषः । अंहः । न । तरति ॥४॥

समिधा यस्त ऽआहुतिं निशितिं मर्त्यो नशत् ।
वयावन्तं स पुष्यति क्षयमग्ने शतायुषम् ॥५॥ (१)
सम्ऽइधा । यः । ते । आऽहुतिम् । निऽशितिम् । मर्त्यः । नशत् ॥
वयाऽवन्तम् । सः । पुष्यति । क्षयम् । अग्ने । शतऽआयुषम् ॥५॥

त्वेषस्ते धूम ऽऋण्वति दिवि षञ्छुक्र ऽआततः ।
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥६॥
त्वेषः । ते । धूमः । ऋण्वति । दिवि । सन् । शुक्रः । आऽततः ॥
सूरः । न । हि । द्युता । त्वम् । कृपा । पावक । रोचसे ॥६॥

अधा हि विक्ष्वीड्योऽसि प्रियो नो ऽअतिथिः ।
रण्वः पुरीव जूर्यः सूनुर्न त्रययाय्यः ॥७॥
अध । हि । विक्षु । ईड्यः । असि । प्रियः । नः । अतिथिः ॥
रण्वः । पुरिऽइव । जूर्यः । सूनुः । न । त्रययाय्यः ॥७॥

क्रत्वा हि द्रोणे ऽअज्यसेऽग्ने वाजी न कृत्व्यः ।
परिज्मेव स्वधा गयोऽत्यो न ह्वार्यः शिशुः ॥८॥
क्रत्वा । हि । द्रोणे । अज्यसे । अग्ने । वाजी । न । कृत्व्यः ॥
परिज्माऽइव । स्वधा । गयः । अत्यः । न । ह्वार्यः । शिशुः ॥८॥

त्वं त्या चिदच्युताग्ने पशुर्न यवसे ।
धामा ह यत्ते ऽअजर वना वृश्चन्ति शिक्वसः ॥९॥
त्वम् । त्या । चित् । अच्युता । अग्ने । पशुः । न । यवसे ॥
धाम । ह । यत् । ते । अजर । वना । वृश्चन्ति । शिक्वसः ॥९॥

**वेषि ह्यध्वरीयतामग्ने होता दमे विशाम् ।**
**समृधो विश्पते कृणु जुषस्व हव्यमङ्गिरः ॥१०॥**
वेषि । हि । अध्वरि॰यताम् । अग्ने । होता । दमे । विशाम् ॥
सम्॰ऋधः । विश्पते । कृणु । जुषस्व । हव्यम् । अङ्गिरः ॥१०॥

**अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।**
**वीहि स्वस्तिं सुक्षितिं दिवो नॄन्द्विषोऽअंहांसि दुरिता तरेम ता तरेम तवावसा तरेम ॥११॥(२)[६६७]**
अच्छ । नः । मित्र॰महः । देव । देवान् । अग्ने । वोचः । सु॰मतिम् ।
रोदस्योः ॥ वीहि । स्वस्तिम् । सु॰क्षितिम् । दिवः । नॄन् । द्विषः ।
अंहांसि । दुः॰इता । तरेम । ता । तरेम । तव । अवसा । तरेम ॥११॥

# ( ३ )

**८ बार्हस्पत्यो भरद्वाजः । अग्निः । त्रिष्टुप् ।**

**अग्ने स क्षेषदृतपा ऽऋतेजा ऽउरु ज्योतिर्नशते देवयुष्टे ।**
**यं त्वं मित्रेण वरुणः सजोषा देव पासि त्यजसा मर्त्तमंहः ॥१॥**
अग्ने । सः । क्षेषत् । ऋत॰पाः । ऋते॰जाः । उरु । ज्योतिः ।
नशते । देव॰युः । ते ॥ यम् । त्वम् । मित्रेण । वरुणः ।
स॰जोषाः । देव । पासि । त्यजसा । मर्त्तम् । अंहः ॥१॥

**ईजे यज्ञेभिः शशमे शमीभिर्ऋधद्वारायाग्नये ददाश ।**
**एवा चन तं यशसामजुष्टिर्नांहो मर्त्तं नशते न प्रदृप्तिः ॥२॥**
ईजे । यज्ञेभिः । शशमे । शमीभिः । ऋधत्॰वाराय ।
अग्नये । ददाश ॥ एव । चन । तम् । यशसाम् ।
अजुष्टिः । न । अंहः । मर्त्तम् । नशते । न । प्र॰दृप्तिः ॥२॥

**सूरो न यस्य दृशतिररेपा भीमा यदेति शुचतस्त ऽआ धीः ।**
**हेषस्वतः शुरुधो नायमक्तोः कुत्रा चिद्रण्वो वसतिर्वनेजाः ॥३॥**

सूरः । न । यस्य । दृशतिः । अरेपाः । भीमा । यत् । एति ।
शुचतः । ते । आ । धीः ॥ हेषस्वतः । शुरुधः । न । अयम् ।
अक्तोः । कुत्र । चित् । रण्वः । वसतिः । वने०जाः ॥३॥

**तिग्मं चिदेम महि वर्पो ऽअस्य भसदश्वो न यमसान ऽआसा ।**
**विजेहमानः परशुर्न जिह्वां द्रविर्न द्रावयति दारु धक्षत् ॥४॥**

तिग्मम् । चित् । एम । महि । वर्पः । अस्य । भसत् ।
अश्वः । न । यमसान । आसा ॥ वि०जेहमानः । परशुः ।
न । जिह्वाम् । द्रविः । न । द्रवयति । दारु । धक्षत् ॥४॥

**स ऽइदस्तेव प्रति धादसिष्यञ्छिशीत तेजोऽयसो न धाराम् ।**
**चित्रध्रजतिररतिर्यो ऽअक्तोर्वेर्न द्रुषद्वा रघुपत्मजंहाः ॥५॥ ( ३ )**

सः । इत् । अस्ताऽइव । प्रति । धात् । असिष्यन् । शिशीत ।
तेजः । अयसः । न । धाराम् ॥ चित्र०ध्रजतिः । अरतिः ।
यः । अक्तोः । वेः । न । द्रु०सद्वा । रघुपत्म०जंहाः ॥५॥

**स ऽईं रेभो न प्रति वस्त ऽउस्राः शोचिषा रारपीति मित्रमहाः ।**
**नक्तं य ऽईमरुषो यो दिवा नॄनमर्त्यो ऽअरुषो यो दिवा नॄन् ॥६॥**

सः । ईम् । रेभः । न । प्रति । वस्ते । उस्राः । शोचिषा ।
ररपीति । मित्र०महाः ॥ नक्तम् । यः । ईम् । अरुषः ।
यः । दिवा । नॄन् । अमर्त्यः । अरुषः । यः । दिवा । नॄन् ॥६॥

**दिवो न यस्य विधतो नवीनोद्वृषा रुक्ष ऽओषधीषु नूनोत् ।**
**घृणा न यो ध्रजसा पत्मना यन्ना रोदसी वसुना दं सुपत्नी ॥७॥**

दिवः । न । यस्य॑ । विधतः । नवी॑नोत् । वृषा॑ । रुक्षः ।
ओष॑धीषु । नूनोत् ॥ घृणा॑ । न । यः । ध्रज॑सा । पत्म॑ना । यन् ।
आ । रोद॑सी इति॑ । वसु॑ना । दम् । सुपत्नी इति॑ सु०पत्नी॑ ॥७॥

**धायो॑भिर्वा यो युज्येभिरकैर्विद्युन्न द॑विद्योत्स्वेभिः शुष्मैः ।**
**शर्द्धो॑ वा यो मरुतां॑ ततक्ष॑ ऽऋभुर्न त्वेषो र॑भसानो ऽअ॑द्यौत् ॥८॥ (४) [ ६७५ ]**
धाय॑:ऽभिः । वा । यः । युज्येभिः । अर्कैः । वि०द्युत् । न ।
दविद्योत् । स्वेभिः । शुष्मैः ॥ शर्द्धः । वा । यः । मरुताम् ।
ततक्ष॑ । ऋभुः । न । त्वेषः । रभसानः । अद्यौत् ॥८॥

## ( ४ )

८ बार्हस्पत्यो भरद्वाजः । अग्निः । त्रिष्टुप् ।

**यथा॑ होतर्मनु॑षो देवता॑ता यज्ञेभिः सूनो सहसो यजा॑सि ।**
**एवा नो॑ ऽअद्य स॑मना स॑मानानुशन्नग्न ऽउशतो य॑क्षि देवान् ॥१॥**
यथा॑ । होतः । मनु॑षः । देव०ता॑ता । यज्ञेभिः । सूनो इति॑ ।
सहसः । यजा॑सि ॥ एव । नः । अद्य । समना । समानान् ।
उशन् । अग्ने । उशतः । यक्षि । देवान् ॥१॥

**स नो॑ विभावा॑ चक्षणिर्न वस्तो॑रग्निर्वन्दारु वेद्यश्चनो॑ धात् ।**
**विश्वायुर्यो ऽअमृतो मर्त्ये॑षूषर्भुद्भूदति॑थिर्जातवे॑दाः ॥२॥**
सः । नः । विभा०वा॑ । चक्षणिः । न । वस्तो॑ः । अग्निः ।
वन्दारु । वेद्यः । चनः । धात् । विश्व०आ॑युः । यः । अमृत॑ः ।
मर्त्ये॑षु । उषःऽभुत् । भूत् । अति॑थिः । जात०वे॑दाः ॥२॥

**द्यावो न यस्य॑ पनयन्त्यभ्वं भासां॑सि वस्ते सूर्यो॑ न शुक्रः ।**
**वि य ऽइनोत्यजरः पावकोऽश्नस्य चिच्छिश्नथत्पूर्व्याणि ॥३॥**

द्यावः । न । यस्य । पनयन्ति । अभ्वम् । भासांसि ।
वस्ते । सूर्यः । न । शुक्रः ॥ वि । यः । इनोति । अजरः ।
पावकः । अश्नस्य । चित् । शिश्नथत् । पूर्व्याणि ॥३॥

**वद्मा हि सूनो ऽअस्यद्मसद्वा चक्रे ऽअग्निर्जनुषाज्मान्नम् ।**
**स त्वं न ऽऊर्जसन ऽऊर्जं धा राजेव जेरवृके क्षेष्यन्तः ॥४॥**
वद्मा । हि । सूनो इति । असि । अद्म०सद्वा । चक्रे । अग्निः ।
जनुषा । अज्म । अन्नम् ॥ सः । त्वम् । नः । ऊर्ज०सने ।
ऊर्जम् । धाः । राजाऽइव । जेः । अवृके । क्षेषि । अन्तरिति ॥४॥

**नितिक्ति यो वारणमन्नमत्ति वायुर्न राष्ट्र्यत्येत्यक्तून् ।**
**तुर्याम यस्त ऽआदिशामरातीरत्यो न ह्रुतः पततः परिह्रुत् ॥५॥ (५)**
नि०तिक्ति । यः । वारणम् । अन्नम् । अत्ति । वायुः ।
न । राष्ट्री । अति । एति । अक्तून् ॥ तुर्याम । यः । ते ।
आ०दिशाम् । अरातीः । अत्यः । न । ह्रुतः । पततः । परि०ह्रुत् ॥५॥

**आ सूर्यो न भानुमद्भिरर्कैरग्ने ततन्थ रोदसी वि भासा ।**
**चित्रो नयत्परि तमांस्यक्तः शोचिषा पत्मन्नौशिजो न दीयन् ॥६॥**
आ । सूर्यः । न । भानुमत्०भिः । अर्कैः । अग्ने । ततन्थ ।
रोदसी इति । वि । भासा ॥ चित्रः । नयत् । परि । तमांसि ।
अक्तः । शोचिषा । पत्मन् । औशिजः । न । दीयन् ॥६॥

**त्वां हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने ।**
**इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः ॥७॥**
त्वाम् । हि । मन्द्र०तमम् । अर्क०शोकैः । ववृमहे ।
महि । नः । श्रोषि । अग्ने ॥ इन्द्रम् । न । त्वा ।
शवसा । देवता । वायुम् । पृणन्ति । राधसा । नृ०तमाः ॥७॥

**नू नो ऽअग्नेऽवृकेभिः स्वस्ति वेषि रायः पथिभिः पर्ष्यंहः ।**

**ता सूरिभ्यो गृणते रासि सुम्नं मदेम शतहिमाः सुवीराः ॥८॥ ( ६ ) [ ६८३ ]**

नु । नः । अग्ने । अवृकेभिः । स्वस्ति । वेषि । रायः ।
पथिऽभिः । पर्षि । अंहः ॥ ता । सूरिऽभ्यः । गृणते ।
रासि । सुम्नम् । मदेम । शतऽहिमाः । सुऽवीराः ॥८॥

# ( ५ )

७ बार्हस्पत्यो भरद्वाजः । अग्निः । त्रिष्टुप् ।

**हुवे वः सूनुं सहसो युवानमद्रोघवाचं मतिभिर्यविष्ठम् ।**

**य ऽइन्वति द्रविणानि प्रचेता विश्ववाराणि पुरुवारो ऽअध्रुक् ॥१॥**

हुवे । वः । सूनुम् । सहसः । युवानम् । अद्रोघऽवाचम् ।
मतिऽभिः । यविष्ठम् ॥ यः । इन्वति । द्रविणानि ।
प्रऽचेताः । विश्वऽवाराणि । पुरुऽवारः । अध्रुक् ॥१॥

**त्वे वसूनि पुर्वणीक होतर्दोषा वस्तोरेरिरे यज्ञियासः ।**

**क्षामेव विश्वा भुवनानि यस्मिन्त्सं सौभगानि दधिरे पावके ॥२॥**

त्वे इति । वसूनि । पुरुऽअनीक । होतः । दोषा । वस्तोः ।
आ । ईरिरे । यज्ञियासः ॥ क्षामऽइव । विश्वा । भुवनानि ।
यस्मिन् । सम् । सौभगानि । दधिरे । पावके ॥२॥

**त्वं विक्षु प्रदिवः सीद ऽआसु क्रत्वा रथीरभवो वार्याणाम् ।**

**अत ऽइनोषि विधते चिकित्वो व्यानुषग्जातवेदो वसूनि ॥३॥**

त्वम् । विक्षु । प्रऽदिवः । सीद । आसु । क्रत्वा ।
रथीः । अभवः । वार्याणाम् ॥ अतः । इनोषि । विधते ।
चिकित्वः । वि । आनुषक् । जातऽवेदः । वसूनि ॥३॥

**यो नः सनुत्यो ऽअभिदासदग्ने यो ऽअन्तरो मित्रमहो वनुष्यात् ।**
**तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वान् ॥४॥**
यः । नः । सनुत्यः । अभि॰दासत् । अग्ने । यः । अन्तरः ।
मित्र॰महः । वनुष्यात् ॥ तम् । अजरेभिः । वृष॰भिः ।
तव । स्वैः । तप । तपिष्ठ । तपसा । तपस्वान् ॥४॥

**यस्ते यज्ञेन समिधा य ऽउक्थैरर्केभिः सूनो सहसो ददाशत् ।**
**स मर्त्येष्वमृत प्रचेता राया द्युम्नेन श्रवसा वि भाति ॥५॥**
यः । ते । यज्ञेन । सम्॰इधा । यः । उक्थैः । अर्केभिः ।
सूनो इति । सहसः । ददाशत् ॥ सः । मर्त्येषु । अमृत ।
प्र॰चेता । राया । द्युम्नेन । श्रवसा । वि । भाति ॥५॥

**स तत्कृधीषितस्तूयमग्ने स्पृधो बाधस्व सहसा सहस्वान् ।**
**यच्छस्यसे द्युभिरक्तो वचोभिस्तज्जुषस्व जरितुर्घोषि मन्म ॥६॥**
सः । तत् । कृधि । इषितः । तूयम् । अग्ने । स्पृधः ।
बाधस्व । सहसा । सहस्वान् ॥ यत् । शस्यसे । द्यु॰भिः ।
अक्तः । वचः॰भिः । तत् । जुषस्व । जरितुः । घोषि । मन्म ॥६॥

**अश्याम तं काममग्ने तवोती ऽअश्याम रयिं रयिवः सुवीरम् ।**
**अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते ॥७॥ (७) [ ६९० ]**
अश्याम । तम् । कामम् । अग्ने । तव । ऊती । अश्याम ।
रयिम् । रयि॰वः । सु॰वीरम् ॥ अश्याम । वाजम् । अभि ।
वाजयन्तः । अश्याम । द्युम्नम् । अजर । अजरम् । ते ॥७॥

# ( ६ )

७ बार्हस्पत्यो भरद्वाजः । अग्निः । त्रिष्टुप् ।

**प्र नव्यसा सहसः सूनुमच्छा यज्ञेन गातुमव ऽइच्छमानः ।**
**वृश्चद्वनं कृष्णयामं रुशन्तं वीती होतारं दिव्यं जिगाति ॥१॥**

प्र । नव्यसा । सहसः । सूनुम् । अच्छ । यज्ञेन । गातुम् ।
अवः । इच्छमानः ॥ वृश्चत्०वनम् । कृष्ण०यामम् ।
रुशन्तम् । वीती । होतारम् । दिव्यम् । जिगाति ॥१॥

**स श्वितानस्तन्यतू रोचनस्था ऽअजरेभिर्नानदद्भिर्यविष्ठः ।**
**यः पावकः पुरुतमः पुरूणि पृथून्यग्निरनुयाति भर्वन् ॥२॥**

सः । श्वितानः । तन्यतुः । रोचन०स्थाः । अजरेभिः ।
नानदत्०भिः । यविष्ठः ॥ यः । पावकः । पुरु०तमः ।
पुरूणि । पृथूनि । अग्निः । अनु०याति । भर्वन् ॥२॥

**वि ते विष्वग्वातजूतासो ऽअग्ने भामासः शुचे शुचयश्चरन्ति ।**
**तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः ॥३॥**

वि । ते । विष्वक् । वात०जूतासः । अग्ने । भामासः ।
शुचे । शुचयः । चरन्ति ॥ तुवि०म्रक्षासः । दिव्याः ।
नव०ग्वाः । वना । वनन्ति । धृषता । रुजन्तः ॥३॥

**ये ते शुक्रासः शुचयः शुचिष्मः क्षां वपन्ति विषितासो ऽअश्वाः ।**
**अध भ्रमस्त ऽउर्विया वि भाति यातयमानो ऽअधि सानु पृश्नेः ॥४॥**

ये । ते । शुक्रासः । शुचयः । शुचिष्मः । क्षाम् । वपन्ति ।
वि०सितासः । अश्वाः ॥ अध । भ्रमः । ते । उर्विया ।
वि । भाति । यातयमानः । अधि । सानु । पृश्नेः ॥४॥

**अध जिह्वा पापतीति प्र वृष्णो गोषुयुधो नाशनिः सृजाना ।**
**शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्तुर्भीमो दयते वनानि ॥५॥**
अध । जिह्वा । पापतीति । प्र । वृष्णः । गोषु०युधः ।
न । अशनिः । सृजाना ॥ शूरस्यऽइव । प्र०सितिः ।
क्षातिः । अग्नेः । दुःऽवर्तुः । भीमः । दयते । वनानि ॥५॥

**आ भानुना पार्थिवानि ज्रयांसि महस्तोदस्य धृषता ततन्थ ।**
**स बाधस्वाप भया सहोभिः स्पृधो वनुष्यन्वनुषो नि जूर्व ॥६॥**
आ । भानुना । पार्थिवानि । ज्रयांसि । महः । तोदस्य ।
धृषता । ततन्थ ॥ सः । बाधस्व । अप । भया ।
सहःऽभिः । स्पृधः । वनुष्यन् । वनुषः । नि । जूर्व ॥६॥

**स चित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम् ।**
**चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्व ॥७॥ (८) [६९७]**
सः । चित्र । चित्रम् । चितयन्तम् । अस्मे इति । चित्र०क्षत्र ।
चित्र०तमम् । वयःऽधाम् ॥ चन्द्रम् । रयिम् । पुरु०वीरम् ।
बृहन्तम् । चन्द्र । चन्द्राभिः । गृणते । युवस्व ॥७॥

# (७)

७ बार्हस्पत्यो भरद्वाजः । वैश्वानरोऽग्निः । त्रिष्टुप्, ६-७ जगती ।

**मूर्द्धानं दिवो ऽअरतिं पृथिव्या वैश्वानरमृत ऽआ जातमग्निम् ।**
**कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥१॥**
मूर्द्धानम् । दिवः । अरतिम् । पृथिव्याः । वैश्वानरम् । ऋते ।
आ । जातम् । अग्निम् ॥ कविम् । सम्०राजम् । अतिथिम् ।
जनानाम् । आसन् । आ । पात्रम् । जनयन्त । देवाः ॥१॥

**नाभिं यज्ञानां सदनं रयीणां महामाहावमभि सं नवन्त ।**
**वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः ॥२॥**

नाभिम् । यज्ञानाम् । सदनम् । रयीणाम् । महाम् ।
आ०हावम् । अभि । सम् । नवन्त ॥ वैश्वानरम् ।
रथ्यम् । अध्वराणाम् । यज्ञस्य । केतुम् । जनयन्त । देवाः ॥२॥

**त्वद्विप्रो जायते वाज्यग्ने त्वद्वीरासो ऽअभिमातिषाहः ।**
**वैश्वानर त्वमस्मासु धेहि वसूनि राजन्त्स्पृहयाय्याणि ॥३॥**

त्वत् । विप्रः । जायते । वाजी । अग्ने । त्वत् ।
वीरासः । अभिमाति०सहः ॥ वैश्वानर । त्वम् ।
अस्मासु । धेहि । वसूनि । राजन् । स्पृहयाय्याणि ॥३॥

**त्वां विश्वे ऽअमृत जायमानं शिशुं न देवा ऽअभि सं नवन्ते ।**
**तव क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदेः ॥४॥**

त्वाम् । विश्वे । अमृत । जायमानम् । शिशुम् । न । देवाः ।
अभि । सम् । नवन्ते ॥ तव । क्रतु०भिः । अमृत०त्वम् ।
आयन् । वैश्वानर । यत् । पित्रोः । अदीदेः ॥४॥

**वैश्वानर तव तानि व्रतानि महान्यग्ने नकिरा दधर्ष ।**
**यज्जायमानः पित्रोरुपस्थेऽविन्दः केतुं वयुनेष्वह्नाम् ॥५॥**

वैश्वानर । तव । तानि । व्रतानि । महानि । अग्ने ।
नकिः । आ । दधर्ष ॥ यत् । जायमानः । पित्रोः ।
उप०स्थे । अविन्दः । केतुम् । वयुनेषु । अह्नाम् ॥५॥

**वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो ऽअमृतस्य केतुना ।**
**तस्येदु विश्वा भुवनाधि मूर्द्धनि वयाऽइव रुरुहुः सप्त विस्रुहः ॥६॥**

वैश्वानरस्य । वि०मितानि । चक्षसा । सानूनि । दिवः ।
अमृतस्य । केतुना ॥ तस्य । इत् । ॐ इति । विश्वा । भुवना ।
अधि । मूर्द्धनि । वयाःऽइव । रुरुहुः । सप्त । वि०स्रुहः ॥६॥

**वि यो रजांस्यमिमीत सुक्रतुर्वैश्वानरो वि दिवो रोचना कविः ।**
**परि यो विश्वा भुवनानि पप्रथेऽदब्धो गोपा ऽअमृतस्य रक्षिता ॥७॥ ( ९ ) [ ७०४ ]**
वि । यः । रजांसि । अमिमीत । सु०क्रतुः । वैश्वानरः ।
वि । दिवः । रोचना । कविः ॥ परि । यः । विश्वा ।
भुवनानि । पप्रथे । अदब्धः । गोपाः । अमृतस्य । रक्षिता ॥७॥

# ( ८ )

७ बार्हस्पत्यो भरद्वाजः । वैश्वानरोऽग्निः । जगती, ७ त्रिष्टुप् ।

**पृक्षस्य वृष्णो ऽअरुषस्य नू सहः प्र नु वोचं विदथा जातवेदसः ।**
**वैश्वानराय मतिर्नव्यसी शुचिः सोमइव पवते चारुरग्नये ॥१॥**
पृक्षस्य । वृष्णः । अरुषस्य । नु । सहः । प्र । नु । वोचम् ।
विदथा । जात०वेदसः ॥ वैश्वानराय । मतिः । नव्यसी ।
शुचिः । सोमःऽइव । पवते । चारुः । अग्नये ॥१॥

**स जायमानः परमे व्योमनि व्रतान्यग्निर्व्रतपा ऽअरक्षत ।**
**व्यन्तरिक्षममिमीत सुक्रतुर्वैश्वानरो महिना नाकमस्पृशत् ॥२॥**
सः । जायमानः । परमे । वि०ओमनि । व्रतानि । अग्निः ।
व्रत०पाः । अरक्षत ॥ वि । अन्तरिक्षम् । अमिमीत ।
सु०क्रतुः । वैश्वानरः । महिना । नाकम् । अस्पृशत् ॥२॥

**व्यस्तभ्नाद्रोदसी मित्रो ऽअद्भुतोऽन्तर्वावदकृणोज्ज्योतिषा तमः ।**
**वि चर्मणीव धिषणे ऽअवर्त्तयद्वैश्वानरो विश्वमधत्त वृष्ण्यम् ॥३॥**

वि । अस्तभ्नात् । रोदसी इति । मित्रः । अद्भुतः । अन्तःऽवावत् ।
अकृणोत् । ज्योतिषा । तमः ॥ वि । चर्मणी इवेति चर्मणीऽइव ।
धिषणे इति । अवर्त्तयत् । वैश्वानरः । विश्वम् । अधत्त । वृष्ण्यम् ॥३॥

**अपामुपस्थे महिषा ऽअगृभ्णत विशो राजानमुप तस्थुर्ऋग्मियम् ।**
**आ दूतो ऽअग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः ॥४॥**
अपाम् । उप०स्थे । महिषाः । अगृभ्णत । विशः । राजानम् ।
उप । तस्थुः । ऋग्मियम् ॥ आ । दूतः । अग्निम् । अभरत् ।
विवस्वतः । वैश्वानरम् । मातरिश्वा । परा०वतः ॥४॥

**युगेयुगे विदथ्यं गृणद्भ्योऽग्ने रयिं यशसं धेहि नव्यसीम् ।**
**पव्येव राजन्नघशंसमजर नीचा नि वृश्च वनिनं न तेजसा ॥५॥**
युगे०युगे । विदथ्यम् । गृणत्०भ्यः । अग्ने । रयिम् । यशसम् ।
धेहि । नव्यसीम् ॥ पव्याऽइव । राजन् । अघ०शंसम् ।
अजर । नीचा । नि । वृश्च । वनिनम् । न । तेजसा ॥५॥

**अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरं सुवीर्यम् ।**
**वयं जयेम शतिनं सहस्रिणं वैश्वानर वाजमग्ने तवोतिभिः ॥६॥**
अस्माकम् । अग्ने । मघवत्०सु । धारय । अनामि । क्षत्रम् ।
अजरम् । सु०वीर्यम् ॥ वयम् । जयेम । शतिनम् ।
सहस्रिणम् । वैश्वानर । वाजम् । अग्ने । तव । ऊति०भिः ॥६॥

**अदब्धेभिस्तव गोपाभिरिष्टेऽस्माकं पाहि त्रिषधस्थ सूरीन् ।**
**रक्षा च नो ददुषां शर्द्धो ऽअग्ने वैश्वानर प्र च तारीः स्तवानः ॥७॥ (१०) [ ७११ ]**
अदब्धेभिः । तव । गोपाभिः । इष्टे । अस्माकम् । पाहि ।
त्रि०सदस्थ । सूरीन् ॥ रक्ष । च । नः । ददुषाम् । शर्द्धः ।
अग्ने । वैश्वानर । प्र । च । तारीः । स्तवानः ॥७॥

# ( ९ )

७ बार्हस्पत्यो भरद्वाजः । वैश्वानरोऽग्निः । त्रिष्टुप्, ( ७ प्रस्तारपङ्क्तिर्वा ) ।

**अहश्च कृष्णमहरर्जुनं च वि वर्त्तेते रजसी वेद्याभिः ।**
**वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥१॥**

अहरिति । च । कृष्णम् । अहः । अर्जुनम् । च । वि । वर्त्तेते इति ।
रजसी इति । वेद्याभिः ॥ वैश्वानरः । जायमानः । न ।
राजा । अव । अतिरत् । ज्योतिषा । अग्निः । तमांसि ॥१॥

**नाहं तन्तुं न वि जानाम्योतुं न यं वयन्ति समरेऽतमानाः ।**
**कस्य स्वित्पुत्र ऽइह वक्त्वानि परो वदात्यवरेण पित्रा ॥२॥**

न । अहम् । तन्तुम् । न । वि । जानामि । ओतुम् । न ।
यम् । वयन्ति । सम्०अरे । अतमानाः ॥ कस्य । स्वित् । पुत्रः ।
इह । वक्त्वानि । परः । वदाति । अवरेण । पित्रा ॥२॥

**स ऽइत्तन्तुं स वि जानात्योतुं स वक्त्वान्यृतुथा वदाति ।**
**य ऽईं चिकेतदमृतस्य गोपा ऽअवश्चरन्परो ऽअन्येन पश्यन् ॥३॥**

सः । इत् । तन्तुम् । सः । वि । जानाति । ओतुम् । सः ।
वक्त्वानि । ऋतु०था । वदाति ॥ यः । ईम् । चिकेतत् ।
अमृतस्य । गोपाः । अवः । चरन् । परः । अन्येन । पश्यन् ॥३॥

**अयं होता प्रथमः पश्यतेममिदं ज्योतिरमृतं मर्त्त्येषु ।**
**अयं स जज्ञे ध्रुव ऽआ निषत्तोऽमर्त्त्यस्तन्वा३ वर्द्धमानः ॥४॥**

अयम् । होता । प्रथमः । पश्यत । इमम् । इदम् ।
ज्योतिः । अमृतम् । मर्त्त्येषु ॥ अयम् । सः । जज्ञे ।
ध्रुवः । आ । नि०सत्तः । अमर्त्त्यः । तन्वा । वर्द्धमानः ॥४॥

**ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः ।**
**विश्वे देवाः समनसः सकेता ऽएकं क्रतुमभि वि यन्ति साधु ॥५॥**
ध्रुवम् । ज्योतिः । नि०हितम् । दृशये । कम् । मनः । जविष्ठम् ।
पतयत्०सु । अन्तरिति ॥ विश्वे । देवाः । स०मनसः । स०केताः ।
एकम् । क्रतुम् । अभि । वि । यन्ति । साधु ॥५॥

**वि मे कर्णा पतयतो वि चक्षुर्वीदं ज्योतिर्हृदय ऽआहितं यत् ।**
**वि मे मनश्चरति दूरआधीः किं स्विद्वक्ष्यामि किमु नू मनिष्ये ॥६॥**
वि । मे । कर्णा । पतयतः । वि । चक्षुः । वि । इदम् । ज्योतिः ।
हृदये । आ०हितम् । यत् ॥ वि । मे । मनः । चरति । दूरे०आधीः ।
किम् । स्वित् । वक्ष्यामि । किम् । ऊँ इति । नु । मनिष्ये ॥६॥

**विश्वे देवा ऽअनमस्यन्भियानास्त्वामग्ने तमसि तस्थिवांसम् ।**
**वैश्वानरोऽवतूतये नोऽमर्त्योऽवतूतये नः ॥७॥ ( ११ )** **[ ७१८ ]**
विश्वे । देवाः । अनमस्यन् । भियानाः । त्वाम् ।
अग्ने । तमसि । तस्थि०वांसम् ॥ वैश्वानरः । अवतु ।
ऊतये । नः । अमर्त्यः । अवतु । ऊतये । नः ॥७॥

## ( १० )

**७ बार्हस्पत्यो भरद्वाजः । अग्निः । त्रिष्टुप्, ७ द्विपदा विराट् ।**

**पुरो वो मन्द्रं दिव्यं सुवृक्तिं प्रयति यज्ञे ऽअग्निमध्वरे दधिध्वम् ।**
**पुर ऽउक्थेभिः स हि नो विभावा स्वध्वरा करति जातवेदाः ॥१॥**
पुरः । वः । मन्द्रम् । दिव्यम् । सु०वृक्तिम् । प्र०यति । यज्ञे ।
अग्निम् । अध्वरे । दधिध्वम् ॥ पुरः । उक्थेभिः । सः । हि ।
नः । विभा०वा । सु०अध्वरा । करति । जात०वेदाः ॥१॥

**तमु द्युमः पुर्वणीक होतरग्ने ऽअग्निभिर्मनुष ऽइधानः ।**
**स्तोमं यमस्मै ममतेव शूषं घृतं न शुचि मतयः पवन्ते ॥२॥**
तम् । ऊँ इति । द्यु॰मः । पुरु॰अनीक । होतः । अग्ने ।
अग्नि॰भिः । मनुषः । इधानः ॥ स्तोमम् । यम् । अस्मै ।
ममताऽइव । शूषम् । घृतम् । न । शुचि । मतयः । पवन्ते ॥२॥

**पीपाय स श्रवसा मर्त्त्येषु यो ऽअग्नये ददाश विप्र ऽउक्थैः ।**
**चित्राभिस्तमूतिभिश्चित्रशोचिर्व्रजस्य साता गोमतो दधाति ॥३॥**
पीपाय । सः । श्रवसा । मर्त्त्येषु । यः । अग्नये ।
ददाश । विप्रः । उक्थैः ॥ चित्राभिः । तम् । ऊति॰भिः ।
चित्र॰शोचिः । व्रजस्य । साता । गो॰मतः । दधाति ॥३॥

**आ यः पप्रौ जायमान ऽउर्वी दूरेदृशा भासा कृष्णाध्वा ।**
**अध बहु चित्तम ऽऊर्म्यायास्तिरः शोचिषा ददृशे पावकः ॥४॥**
आ । यः । पप्रौ । जायमानः । उर्वी इति । दूरे॰दृशा ।
भासा । कृष्ण॰अध्वा ॥ अध । बहु । चित् । तमः ।
ऊर्म्यायाः । तिरः । शोचिषा । ददृशे । पावकः ॥४॥

**नू नश्चित्रं पुरुवाजाभिरूती ऽअग्ने रयिं मघवद्भ्यश्च धेहि ।**
**ये राधसा श्रवसा चात्यन्यान्त्सुवीर्येभिश्चाभि सन्ति जनान् ॥५॥**
नु । नः । चित्रम् । पुरु॰वाजाभिः । ऊती । अग्ने । रयिम् ।
मघवत्॰भ्यः । च । धेहि ॥ ये । राधसा । श्रवसा । च ।
अति । अन्यान् । सु॰वीर्येभिः । च । अभि । सन्ति । जनान् ॥५॥

**इमं यज्ञं चनो धा ऽअग्न ऽउशन्यं त ऽआसानो जुहुते हविष्मान् ।**
**भरद्वाजेषु दधिषे सुवृक्तिमवीर्वाजस्य गध्यस्य सातौ ॥६॥**

इमम् । यज्ञम् । चनः । धाः । अग्ने । उशन् । यम् । ते ।
आसानः । जुहुते । हविष्मान् ॥ भरत्०वाजेषु । दधिषे ।
सु०वृक्तिम् । अवीः । वाजस्य । गध्यस्य । सातौ ॥६॥

**वि द्वेषांसीनुहि वर्द्धयेळां मदेम शतहिमाः सुवीराः ॥७॥ (१२) [७२५]**
वि । द्वेषांसि । इनुहि । वर्द्धय । इळाम् । मदेम । शत०हिमाः । सु०वीराः ॥७॥

# (११)

**६ बार्हस्पत्यो भरद्वाजः । अग्निः । त्रिष्टुप् ।**

**यजस्व होतरिषितो यजीयानग्ने बाधो मरुतां न प्रयुक्ति ॥**
**आ नो मित्रावरुणा नासत्या द्यावा होत्राय पृथिवी ववृत्याः ॥१॥**
यजस्व । होतः । इषितः । यजीयान् । अग्ने । बाधः ।
मरुताम् । न । प्र०युक्ति ॥ आ । नः । मित्रावरुणा ।
नासत्या । द्यावा । होत्राय । पृथिवी इति । ववृत्याः ॥१॥

**त्वं होता मन्द्रतमो नो ऽअध्रुगन्तर्देवो विदथा मर्त्येषु ।**
**पावकया जुह्वा३ वह्निरासाग्ने यजस्व तन्वं१ तव स्वाम् ॥२॥**
त्वम् । होता । मन्द्र०तमः । नः । अध्रुक् । अन्तः ।
देवः । विदथा । मर्त्येषु ॥ पावकया । जुह्वा । वह्निः ।
आसा । अग्ने । यजस्व । तन्वम् । तव । स्वाम् ॥२॥

**धन्या चिद्धि त्वे धिषणा वष्टि प्र देवाञ्जन्म गृणते यजध्यै ।**
**वेपिष्ठो ऽअङ्गिरसां यद्ध विप्रो मधुच्छन्दो भनति रेभ ऽइष्टौ ॥३॥**
धन्या । चित् । हि । त्वे इति । धिषणा । वष्टि । प्र ।
देवान् । जन्म । गृणते । यजध्यै ॥ वेपिष्ठः । अङ्गिरसाम् ।
यत् । ह । विप्रः । मधु । छन्दः । भनति । रेभः । इष्टौ ॥३॥

अदिद्युतत्स्वपाको विभावाग्ने यजस्व रोदसी ऽउरूची ।
आयुं न यं नमसा रातहव्या ऽअञ्जन्ति सुप्रयसं पञ्च जनाः ॥४॥
अदिद्युतत् । सु । अपाकः । वि॰भावा । अग्ने । यजस्व ।
रोदसी इति । उरूची इति ॥ आयुम् । न । यम् । नमसा ।
रात॰हव्याः । अञ्जन्ति । सु॰प्रयसम् । पञ्च । जनाः ॥४॥

वृञ्जे ह यन्नमसा बर्हिरग्नावयामि स्रुग्घृतवती सुवृक्तिः ।
अम्यक्षि सद्म सदने पृथिव्या ऽअश्रायि यज्ञः सूर्ये न चक्षुः ॥५॥
वृञ्जे । ह । यत् । नमसा । बर्हिः । अग्नौ । अयामि ।
स्रुक् । घृत॰वती । सु॰वृक्तिः ॥ अम्यक्षि । सद्म । सदने ।
पृथिव्याः । अश्रायि । यज्ञः । सूर्ये । न । चक्षुः ॥५॥

दशस्या नः पुर्वणीक होतर्देवेभिरग्ने ऽअग्निभिरिधानः ।
रायः सूनो सहसो वावसाना ऽअति स्रसेम वृजनं नांहः ॥६॥ ( १३ ) [ ७३१ ]
दृशस्य । नः । पुरु॰अनीक । होतः । देवेभिः । अग्ने ।
अग्नि॰भिः । इधानः ॥ रायः । सूनो इति । सहसः ।
ववसानाः । अति । स्रसेम । वृजनम् । न । अंहः ॥६॥

# ( १२ )

६ बार्हस्पत्यो भरद्वाजः । अग्निः । त्रिष्टुप् । ६ पुरस्ताज्ज्योतिर्वा ।

मध्ये होता दुरोणे बर्हिषो राळग्निस्तोदस्य रोदसी यजध्यै ।
अयं स सूनुः सहस ऽऋतावा दूरात्सूर्यो न शोचिषा ततान ॥१॥
मध्ये । होता । दुरोणे । बर्हिषः । राट् । अग्निः । तोदस्य ।
रोदसी इति । यजध्यै ॥ अयम् । सः । सूनुः । सहसः ।
ऋत॰वा । दूरात् । सूर्यः । न । शोचिषा । ततान ॥१॥

**आ यस्मिन्त्वे स्वपाके यजत्र यक्षद्राजन्त्सर्वतातेव नु द्यौः ।**
**त्रिषधस्थस्ततरुषो न जंहो हव्या मघानि मानुषा यजध्यै ॥२॥**
आ । यस्मिन् । त्वे इति । सु । अपाके । यजत्र । यक्षत् ।
राजन् । सर्वताताऽइव । नु । द्यौः ॥ त्रि०सधस्थः । ततरुषः ।
न । जंहः । हव्या । मघानि । मानुषा । यजध्यै ॥२॥

**तेजिष्ठा यस्यारतिर्वनेराट् तोदो ऽअध्वन्न वृधसानो ऽअद्यौत् ।**
**अद्रोघो न द्रविता चेतति त्मन्नमर्त्त्योऽवर्त्र ऽओषधीषु ॥३॥**
तेजिष्ठा । यस्य । अरतिः । वने०राट् । तोदः । अध्वन् ।
न । वृधसानः । अद्यौत् ॥ अद्रोघः । न । द्रविता ।
चेतति । त्मन् । अमर्त्त्यः । अवर्त्रः । ओषधीषु ॥३॥

**सास्माकेभिरेतरी न शूषैरग्निः ष्टवे दम ऽआ जातवेदाः ।**
**द्र्वन्नो वन्वन्क्रत्वा नार्वोस्रः पितेव जारयायि यज्ञैः ॥४॥**
सः । अस्माकेभिः । एतरि । न । शूषैः । अग्निः । स्तवे ।
दमे । आ । जात०वेदाः ॥ द्रु०अन्नः । वन्वन् । क्रत्वा ।
न । अर्वा । उस्रः । पिताऽइव । जारयायि । यज्ञैः ॥४॥

**अध स्मास्य पनयन्ति भासो वृथा यत्तक्षदनुयाति पृथ्वीम् ।**
**सद्यो यः स्यन्द्रो विषितो धवीयानृणो न तायुरति धन्वा राट् ॥५॥**
अध । स्म । अस्य । पनयन्ति । भासः । वृथा । यत् । तक्षत् ।
अनु०याति । पृथ्वीम् ॥ सद्यः । यः । स्पन्द्रः । वि०सितः ।
धवीयान् । ऋणः । न । तायुः । अति । धन्व । राट् ॥५॥

**स त्वं नो ऽअर्वन्निदाया विश्वेभिरग्ने ऽअग्निभिरिधानः ।**
**वेषि रायो वि यासि दुच्छुना मदेम शतहिमाः सुवीराः ॥६॥ (१४) [७३७]**

सः । त्वम् । नः । अर्वन् । निदायाः । विश्वेभिः ।
अग्ने । अग्नि०भिः । इधानः ॥ वेषि । रायः ।
यासि । दुच्छुना । मदेम । शत०हिमाः । सु०वीराः ॥६॥

# ( १३ )

६ बार्हस्पत्यो भरद्वाजः । अग्निः । त्रिष्टुप् ।

**त्वद्विश्वा सुभग सौभगान्यग्ने वि यन्ति वनिनो न वयाः ।**
**श्रुष्टी रयिर्वाजो वृत्रतूर्ये दिवो वृष्टिरीड्यो रीतिरपाम् ॥१॥**
त्वत् । विश्वा । सु०भग । सौभगानि । अग्ने । वि ।
यन्ति । वनिनः । न । वयाः ॥ श्रुष्टी । रयिः । वाजः ।
वृत्र०तूर्ये । दिवः । वृष्टिः । ईड्यः । रीतिः । अपाम् ॥१॥

**त्वं भगो न ऽआ हि रत्नमिषे परिज्मेव क्षयसि दस्मवर्चाः ।**
**अग्ने मित्रो न बृहत ऽऋतस्यासि क्षत्ता वामस्य देव भूरेः ॥२॥**
त्वम् । भगः । नः । आ । हि । रत्नम् । इषे । परिज्माऽइव ।
क्षयसि । दस्म०वर्चाः ॥ अग्ने । मित्रः । न । बृहतः ।
ऋतस्य । असि । क्षत्ता । वामस्य । देव । भूरेः ॥२॥

**स सत्पतिः शवसा हन्ति वृत्रमग्ने विप्रो वि पणेर्भर्ति वाजम् ।**
**यं त्वं प्रचेत ऽऋतजात राया सजोषा नप्त्रापां हिनोषि ॥३॥**
सः । सत्०पतिः । शवसा । हन्ति । वृत्रम् । अग्ने । विप्रः ।
वि । पणेः । भर्ति । वाजम् ॥ यम् । त्वम् । प्र०चेतः ।
ऋत०जात । राया । स०जोषाः । नप्त्रा । अपाम् । हिनोषि ॥३॥

**यस्ते सूनो सहसो गीर्भिरुक्थैर्यज्ञैर्मर्तो निशितिं वेद्यानट् ।**
**विश्वं स देव प्रति वारमग्ने धत्ते धान्यं१ पत्यते वसव्यैः ॥४॥**

यः । ते । सूनो इति । सहसः । गीःऽभिः । उक्थैः । यज्ञैः ।
मर्तः । निऽशितम् । वेद्या । आनट् ॥ विश्वम् । सः । देव ।
प्रति । वारम् । अग्ने । धत्ते । धान्यम् । पत्यते । वसव्यैः ॥४॥

**ता नृभ्य ऽआ सौश्रवसा सुवीराग्ने सूनो सहसः पुष्यसे धाः ।**
**कृणोषि यच्छवसा भूरि पश्वो वयो वृकायारये जसुरये ॥५॥**
ता । नृऽभ्यः । आ । सौश्रवसा । सुऽवीरा । अग्ने । सूनो इति ।
सहसः । पुष्यसे । धाः ॥ कृणोषि । यत् । शवसा ।
भूरि । पश्वः । वयः । वृकाय । अरये । जसुरये ॥५॥

**वद्मा सूनो सहसो नो विहाया ऽअग्ने तोकं तनयं वाजि नो दाः ।**
**विश्वाभिर्गीर्भिरभि पूर्तिमश्यां मदेम शतहिमाः सुवीराः ॥६॥ (१५) [ ७४३ ]**
वद्मा । सूनो इति । सहसः । नः । विऽहायाः । अग्ने । तोकम् ।
तनयम् । वाजि । नः । दाः ॥ विश्वाभिः । गीःऽभिः । अभि ।
पूर्तिम् । अश्याम् । मदेम । शतऽहिमाः । सुऽवीराः ॥६॥

# ( १४ )

**६ बार्हस्पत्यो भरद्वाजः । अग्निः । अनुष्टुप् , ६ शक्वरी ।**

**अग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः ।**
**भसन्नु ष प्र पूर्व्य ऽइषं वुरीतावसे ॥१॥**
अग्ना । यः । मर्त्यः । दुवः । धियम् । जुजोष । धीतिऽभिः ॥
भसत् । नु । सः । प्र । पूर्व्यः । इषम् । वुरीत । अवसे ॥१॥

**अग्निरिद्धि प्रचेता ऽअग्निर्वेधस्तम ऽऋषिः ।**
**अग्निं होतारमीळते यज्ञेषु मनुषो विशः ॥२॥**
अग्निः । इत् । हि । प्रऽचेताः । अग्निः । वेधःऽतमः । ऋषिः ॥
अग्निम् । होतारम् । ईळते । यज्ञेषु । मनुषः । विशः ॥२॥

नाना ह्य१ग्नेऽवसे स्पर्द्धन्ते रायो ऽअर्यः ।
तूर्वन्तो दस्युमायवो व्रतैः सीक्षन्तो ऽअव्रतम् ॥३॥
नाना । हि । अग्ने । अवसे । स्पर्द्धन्ते । रायः । अर्यः ॥
तूर्वन्तः । दस्युम् । आयवः । व्रतैः । सीक्षन्तः । अव्रतम् ॥३॥

अग्निरप्सामृतीषहं वीरं ददाति सत्पतिम् ।
यस्य त्रसन्ति शवसः संचक्षि शत्रवो भिया ॥४॥
अग्निः । अप्साम् । ऋति०सहम् । वीरम् । ददाति । सत्०पतिम् ॥
यस्य । त्रसन्ति । शवसः । सम्०चक्षि । शत्रवः । भिया ॥४॥

अग्निर्हि विद्मना निदो देवो मर्त्तमुरुष्यति ।
सहावा यस्यावृतो रयिर्वाजेष्ववृतः ॥५॥
अग्निः । हि । विद्मना । निदः । देवः । मर्त्तम् । उरुष्यति ॥
सह०वा । यस्य । अवृतः । रयिः । वाजेषु । अवृतः ॥५॥

अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।
वीहि स्वस्तिं सुक्षितिं दिवो नॄन्द्विषोऽअंहांसि दुरिता तरेम ता तरेम तवावसा तरेम ।६॥(१६)[७९]
अच्छ । नः । मित्र०महः । देव । देवान् । अग्ने । वोचः । सु०मतिम् ।
रोदस्योः ॥ वीहि । स्वस्तिम् । सु०क्षितिम् । दिवः । नॄन् । द्विषः ।
अंहांसि । दुः२इता । तरेम । ता । तरेम । तव । अवसा । तरेम ॥६॥

## ( १५ )

१९ बार्हस्पत्यो भरद्वाजो, वीतहव्यो वा । अग्निः । जगती, ३, १५ शक्वरी, ६ अतिशक्वरी, १०-१४, १६ त्रिष्टुप्, १७ अनुष्टुप्, १८ बृहती ।

इममू षु वो ऽअतिथिमुषर्बुधं विश्वासां विशां पतिमृञ्जसे गिरा ।
वेतीद्दिवो जनुषा कच्चिदा शुचिर्ज्योक्चिदत्ति गर्भो यदच्युतम् ॥१॥

इमम् । ऊँ इति । सु । वः । अतिथिम् । उषःऽबुधम् । विश्वासाम् ।
विशाम् । पतिम् । ऋञ्जसे । गिरा ॥ वेति । इत् । दिवः । जनुषा । कत् ।
चित् । आ । शुचिः । ज्योक् । चित् । अत्ति । गर्भः । यत् । अच्युतम् ॥१॥

**मित्रं न यं सुधितं भृगवो दधुर्वनस्पतावीड्यमूर्ध्वशोचिषम् ।**
**स त्वं सुप्रीतो वीतहव्ये ऽअद्भुत प्रशस्तिभिर्महयसे दिवेदिवे ॥२॥**
मित्रम् । न । यम् । सु०धितम् । भृगवः । दधुः । वनस्पतौ ।
ईड्यम् । ऊर्ध्व०शोचिषम् ॥ सः । त्वम् । सु०प्रीतः ।
वीत०हव्ये । अद्भुत । प्रशस्ति०भिः । महयसे । दिवे०दिवे ॥२॥

**स त्वं दक्षस्यावृको वृधो भूरर्यः परस्यान्तरस्य तरुषः ।**
**रायः सूनो सहसो मर्त्येष्वा छर्दिर्यच्छ वीतहव्याय सप्रथो भरद्वाजाय सप्रथः ॥३॥**
सः । त्वम् । दक्षस्य । अवृकः । वृधः । भूः । अर्यः । परस्य ।
अन्तरस्य । तरुषः ॥ रायः । सूनो इति । सहसः । मर्त्येषु । आ ।
छर्दिः । यच्छ । वीत०हव्याय । स०प्रथः । भरत्०वाजाय । स०प्रथः ॥३॥

**द्युतानं वो ऽअतिथिं स्वर्णरमग्निं होतारं मनुषः स्वध्वरम् ।**
**विप्रं न द्युक्षवचसं सुवृक्तिभिर्हव्यवाहमरतिं देवमृञ्जसे ॥४॥**
द्युतानम् । वः । अतिथिम् । स्वःऽनरम् । अग्निम् । होतारम् ।
मनुषः । सु०अध्वरम् ॥ विप्रम् । न । द्युक्ष०वचसम् ।
सुवृक्ति०भिः । हव्य०वाहम् । अरतिम् । देवम् । ऋञ्जसे ॥४॥

**पावकया यश्चितयन्त्या कृपा क्षामन्रुरुच ऽउषसो न भानुना ।**
**तूर्वन्न यामन्नेतशस्य नू रण ऽआ यो घृणे न ततृषाणो ऽअजरः ॥५॥ ( १७ )**
पावकया । यः । चितयन्त्या । कृपा । क्षामन् । रुरुचे ।
उषसः । न । भानुना ॥ तूर्वन् । न । यामन् । एतशस्य ।
नु । रणे । यः । घृणे । न । ततृषाणः । अजरः ॥५॥

अग्निमग्निं वः समिधा दुवस्यत प्रियंप्रियं वो ऽअतिथिं गृणीषणि ।
उप वो गीर्भिरमृतं विवासत देवो देवेषु वनते हि वार्यं देवो देवेषु वनते हि नो दुवः ॥६॥
अग्निम्०अग्निम् । वः । सम्०इधा । दुवस्यत । प्रियम्०प्रियम् । वः ।
अतिथिम् । गृणीषणि ॥ उप । वः । गीःऽभिः । अमृतम् । विवासत । देवः ।
देवेषु । वनते । हि । वार्यम् । देवः । देवेषु । वनते । हि । नः । दुवः ॥६॥

समिद्धमग्निं समिधा गिरा गृणे शुचिं पावकं पुरो ऽअध्वरे ध्रुवम् ।
विप्रं होतारं पुरुवारमद्रुहं कविं सुम्नैरीमहे जातवेदसम् ॥७॥
सम्०इद्धम् । अग्निम् । सम्०इधा । गिरा । गृणे । शुचिम् ।
पावकम् । पुरः । अध्वरे । ध्रुवम् ॥ विप्रम् । होतारम् ।
पुरु०वारम् । अद्रुहम् । कविम् । सुम्नैः । ईमहे । जात०वेदसम् ॥७॥

त्वां दूतमग्ने ऽअमृतं युगेयुगे हव्यवाहं दधिरे पायुमीड्यम् ।
देवासश्च मर्त्तासश्च जागृविं विभुं विश्पतिं नमसा नि षेदिरे ॥८॥
त्वाम् । दूतम् । अग्ने । अमृतम् । युगे०युगे । हव्य०वाहम् ।
दधिरे । पायुम् । ईड्यम् ॥ देवासः । च । मर्त्तासः । च ।
जागृविम् । वि०भुम् । विश्पतिम् । नमसा । नि । सेदिरे ॥८॥

विभूषन्नग्न ऽउभयाँ ऽअनु व्रता दूतो देवानां रजसी समीयसे ।
यत्ते धीतिं सुमतिमावृणीमहेऽध स्मा नस्त्रिवरूथः शिवो भव ॥९॥
वि०भूषन् । अग्ने । उभयान् । अनु । व्रता । दूतः । देवानाम् ।
रजसी इति । सम् । ईयसे ॥ यत् । ते । धीतिम् । सु०मतिम् ।
आ०वृणीमहे । अध । स्म । नः । त्रि०वरूथः । शिवः । भव ॥९॥

तं सुप्रतीकं सुदृशं स्वञ्चमविद्वांसो विदुष्टरं सपेम ।
स यक्षद्विश्वा वयुनानि विद्वान्प्र हव्यमग्निरमृतेषु वोचत् ॥१०॥ (१८)

तम् । सु०प्रतीकम् । सु०दृशम् । सु०अञ्चम् । अविद्वांसः ।
विदुःऽतरम् । सपेम ॥ सः । यक्षत् । विश्वा । वयुनानि ।
विद्वान् । प्र । हव्यम् । अग्निः । अमृतेषु । वोचत् ॥१०॥

**तमग्ने पास्युत तं पिपर्षि यस्त ऽआनट् कवये शूर धीतिम् ।**
**यज्ञस्य वा निशितिं वोदितिं वा तमित्पृणक्षि शवसोत राया ॥११॥**
तम् । अग्ने । पासि । उत । तम् । पिपर्षि । यः । ते । आनट् ।
कवये । शूर । धीतिम् ॥ यज्ञस्य । वा । नि०शितिम् । वा ।
उत्०इतिम् । वा । तम् । इत् । पृणक्षि । शवसा । उत । राया ॥११॥

**त्वमग्ने वनुष्यतो नि पाहि त्वमु नः सहसावन्नवद्यात् ।**
**सं त्वा ध्वस्मन्वदभ्येतु पाथः सं रयिः स्पृहयाय्यः सहस्री ॥१२॥**
त्वम् । अग्ने । वनुष्यतः । नि । पाहि । त्वम् । ऊँ इति ।
नः । सहसा०वन् । अवद्यात् ॥ सम् । त्वा । ध्वस्मन्०वत् ।
अभि । एतु । पाथः । सम् । रयिः । स्पृहयाय्यः । सहस्री ॥१२॥

**अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः ।**
**देवानामुत यो मर्त्यानां यजिष्ठः स प्र यजतामृतावा ॥१३॥**
अग्निः । होता । गृह०पतिः । सः । राजा । विश्वा । वेद ।
जनिम । जात०वेदाः ॥ देवानाम् । उत । यः । मर्त्यानाम् ।
यजिष्ठः । सः । प्र । यजताम् । ऋत०वा ॥१३॥

**अग्ने यदद्य विशो ऽअध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा ।**
**ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते ऽअद्य ॥१४॥**
अग्ने । यत् । अद्य । विशः । अध्वरस्य । होतरिति । पावक०शोचे ।
वेः । त्वम् । हि । यज्वा ॥ ऋता । यजासि । महिना । वि ।
यत् । भूः । हव्या । वह । यविष्ठ । या । ते । अद्य ॥१४॥

# षष्ठाध्यायस्य मन्त्रवर्गानुक्रमणी



॥ इति शाङ्खायनसंहितायां चतुर्थाष्टके षष्ठोऽध्यायः ॥

(षष्ठाध्याये वर्गाः २५, सूक्तानि १२, ऋचः १३२)

# ॥ चतुर्थाष्टके सप्तमोऽध्यायः॥

**अथ सप्तमोऽध्यायः॥७॥ वर्गाः १-३५ ]   [ षष्ठमण्डले सूक्तानि २९-४७ ]**

## ( २९ )

६ बार्हस्पत्यो भरद्वाजः । इन्द्रः । त्रिष्टुप् ।

**इन्द्रं॑ वो॒ नरः॑ स॒ख्याय॑ सेपु॒र्महो यन्तः॑ सुम॒तये॑ चका॒नाः ।**
**म॒हो हि दा॒ता वज्र॑हस्तो॒ ऽअस्ति॑ म॒हामु॑ र॒ण्वमव॑से यजध्वम् ॥१॥**

इन्द्र॑म् । व॒ः । नरः॑ । स॒ख्याय॑ । से॒पु॒ः । म॒हः । यन्तः॑ ।
सु॒ऽम॒तये॑ । च॒का॒नाः ॥ म॒हः । हि । दा॒ता । वज्र॑ऽहस्तः ।
अस्ति॑ । म॒हाम् । ऊँ॒ इति॑ । र॒ण्वम् । अव॑से । य॒ज॒ध्व॒म् ॥१॥

**आ यस्मि॒न्हस्ते॒ नर्या॑ मिमि॒क्षुरा रथे॑ हि॒रण्यये॑ रथे॒ष्ठाः ।**
**आ र॒श्मयो॒ गभ॑स्त्योः स्थू॒रयो॒राध्व॒न्नश्वा॑सो॒ वृष॑णो युजा॒नाः ॥२॥**

आ । यस्मि॑न् । हस्ते॑ । नर्याः॑ । मि॒मि॒क्षुः । आ । रथे॑ ।
हि॒र॒ण्यये॑ । र॒थे॒ऽस्थाः ॥ आ । र॒श्मयः॑ । गभ॑स्त्योः ।
स्थू॒रयोः॑ । आ । अध्व॑न् । अश्वा॑सः । वृष॑णः । यु॒जा॒नाः ॥२॥

**श्रि॒ये ते॒ पादा॒ दुव॒ ऽआ मि॑मिक्षुर्धृ॒ष्णुर्व॒ज्री शव॑सा॒ दक्षि॑णावान् ।**
**वसा॑नो॒ ऽअत्कं॑ सुर॒भिं दृ॒शे कं स्व१॒॑र्ण नृ॑तविषि॒रो ब॑भूथ ॥३॥**

श्रि॒ये । ते॒ । पादा॑ । दुवः॑ । आ । मि॒मि॒क्षु॒ः । धृ॒ष्णुः । व॒ज्री ।
शव॑सा । दक्षि॑ण॒ऽवान् ॥ वसा॑नः । अत्क॑म् । सु॒र॒भिम् ।
दृ॒शे । कम् । स्वः॑ । न । नृ॒तो॒ इति॑ । इ॒षि॒रः । ब॒भू॒थ ॥३॥

**स सोम॒ ऽआमि॑श्लतमः सु॒तो भू॒द्यस्मि॑न्प॒क्तिः प॒च्यते॒ सन्ति॑ धा॒नाः ।**
**इन्द्रं॒ नरः॑ स्तु॒वन्तो॑ ब्रह्मका॒रा ऽउ॒क्था शंस॑न्तो दे॒ववा॑ततमाः ॥४॥**

सः । सोमः । आमिश्ल०तमः । सुतः । भूत् । यस्मिन् ।
पक्तिः । पच्यते । सन्ति । धानाः ॥ इन्द्रम् । नरः । स्तुवन्तः ।
ब्रह्म०काराः । उक्था । शंसन्तः । देववात०तमाः ॥४॥

**न ते ऽअन्तः शवसो धाय्यस्य वि तु बाबधे रोदसी महित्वा ।**
**आ ता सूरिः पृणति तूतुजानो यूथेवाप्सु समीजमान ऽऊती ॥५॥**
न । ते । अन्तः । शवसः । धायि । अस्य । वि । तु ।
बाबधे । रोदसी इति । महि०त्वा ॥ आ । ता । सूरिः । पृणति ।
तूतुजानः । यूथाऽइव । अप्०सु । सम्०ईजमानः । ऊती ॥५॥

**एवेदिन्द्रः सुहव ऽऋष्वो ऽअस्तूती ऽअनूती हिरिशिप्रः सत्वा ।**
**एवा हि जातो ऽअसमात्योजाः पुरू च वृत्रा हनति नि दस्यून् ॥६॥ (१) [ ९५४ ]**
एव । इत् । इन्द्रः । सु०हवः । ऋष्वः । अस्तु । ऊती । अनूती ।
हिरि०शिप्रः । सत्वा ॥ एव । हि । जातः । असमाति०ओजाः ।
पुरु । च । वृत्रा । हनति । नि । दस्यून् ॥६॥

## ( ३० )

५ बार्हस्पत्यो भरद्वाजः । इन्द्रः । त्रिष्टुप् ।

**भूय ऽइद्वावृधे वीर्याय ँ ऽएको ऽअजुर्यो दयते वसूनि ।**
**प्र रिरिचे दिव ऽइन्द्रः पृथिव्या ऽअर्द्धमिदस्य प्रति रोदसी ऽउभे ॥१॥**
भूयः । इत् । ववृधे । वीर्याय । एकः । अजुर्यः । दयते ।
वसूनि ॥ प्र । रिरिचे । दिवः । इन्द्रः । पृथिव्याः । अर्द्धम् ।
इत् । अस्य । प्रति । रोदसी इति । उभे इति ॥१॥

**अधा मन्ये बृहदसुर्यमस्य यानि दाधार नकिरा मिनाति ।**
**दिवेदिवे सूर्यो दर्शतो भूद्वि सद्मान्युर्विया सुक्रतुर्धात् ॥२॥**

अधं । मन्ये । बृहत् । असुर्यम् । अस्य । यानि । दाधारं ।
नकिः । आ । मिनाति ॥ दिवे॰दिवे । सूर्यः । दर्शतः ।
भूत् । वि । सद्मानि । उर्विया । सु॰क्रतुः । धात् ॥२॥

अद्या चिन्नू चित्तदपो नदीनां यदाभ्यो ऽअरदो गातुमिन्द्र ।
नि पर्वता ऽअद्मसदो न सेदुस्त्वया दृळ्हानि सुक्रतो रजांसि ॥३॥
अद्य । चित् । नु । चित् । तत् । अपः । नदीनाम् । यत् । आभ्यः ।
अरदः । गातुम् । इन्द्र ॥ नि । पर्वताः । अद्म॰सदः । न ।
सेदुः । त्वया । दृळ्हानि । सुक्रतो इति सु॰क्रतो । रजांसि ॥३॥

सत्यमित्तन्न त्वावाँ ऽअन्यो ऽअस्तीन्द्र देवो न मर्त्यो ज्यायान् ।
अहन्नहिं परिशयानमर्णोऽवासृजो ऽअपो ऽअच्छा समुद्रम् ॥४॥
सत्यम् । इत् । तत् । न । त्वा॰वान् । अन्यः । अस्ति । इन्द्र ।
देवः । न । मर्त्यः । ज्यायान् ॥ अहन् । अहिम् । परि॰शयानम् ।
अर्णः । अव । असृजः । अपः । अच्छ । समुद्रम् ॥४॥

त्वमपो वि दुरो विषूचीरिन्द्र दृळ्हमरुजः पर्वतस्य ।
राजाभवो जगतश्चर्षणीनां साकं सूर्यं जनयन्द्यामुषासम् ॥५॥ (२) [९५९]
त्वम् । अपः । वि । दुरः । विषूचीः । इन्द्र । दृळ्हम् ।
अरुजः । पर्वतस्य ॥ राजा । अभवः । जगतः ।
चर्षणीनाम् । साकम् । सूर्यम् । जनयन् । द्याम् । उषसम् ॥५॥

## ( ३१ )

५ सुहोत्रे भारद्वाजः । इन्द्रः । त्रिष्टुप्, ४ शक्वरी ।

अभूरेको रयिपते रयीणामा हस्तयोरधिथा ऽइन्द्र कृष्टीः ।
वि तोके ऽअप्सु तनये च सूरेऽवोचन्त चर्षणयो विवाचः ॥१॥

अभूः । एकः । रयि॰पते । रयीणाम् । आ । हस्तयोः ।
अधिथाः । इन्द्र । कृष्टीः ॥ वि । तोके । अप्॰सु । तनये ।
च । सूरे । अवोचन्त । चर्षणयः । वि॰वाचः ॥१॥

**त्वद्भियेन्द्र पार्थिवानि विश्वाच्युता चिच्च्यावयन्ते रजांसि ।**
**द्यावाक्षामा पर्वतासो वनानि विश्वं दृळ्हं भयते ऽअज्मन्ना ते ॥२॥**
त्वत् । भिया । इन्द्र । पार्थिवानि । विश्वा । अच्युता ।
चित् । च्यवयन्ते । रजांसि ॥ द्यावाक्षामा । पर्वतासः ।
वनानि । विश्वम् । दृळ्हम् । भयते । अज्मन् । आ । ते ॥२॥

**त्वं कुत्सेनाभि शुष्णमिन्द्राशुषं युध्य कुयवं गविष्टौ ।**
**दश प्रपित्वे ऽअध सूर्यस्य मुषायश्चक्रमविवे रपांसि ॥३॥**
त्वम् । कुत्सेन । अभि । शुष्णम् । इन्द्र । अशुषम् ।
युध्य । कुयवम् । गविष्टौ ॥ दश । प्र॰पित्वे । अध ।
सूर्यस्य । मुषायः । चक्रम् । अविवेः । रपांसि ॥३॥

**त्वं शतान्यव शम्बरस्य पुरो जघन्थाप्रतीनि दस्योः ।**
**अशिक्षो यत्र शच्या शचीवो दिवोदासाय सुन्वते सुतक्रे भरद्वाजाय गृणते वसूनि ॥४॥**
त्वम् । शतानि । अव । शम्बरस्य । पुरः । जघन्थ । अप्रतीनि ।
दस्योः ॥ अशिक्षः । यत्र । शच्या । शची॰वः । दिवः२दासाय ।
सुन्वते । सुत॰क्रे । भरत्॰वाजाय । गृणते । वसूनि ॥४॥

**स सत्यसत्वन्महते रणाय रथमा तिष्ठ तुविनृम्ण भीमम् ।**
**याहि प्रपथिन्नवसोप मद्रिक्प्र च श्रुत श्रावय चर्षणिभ्यः ॥५॥ ( ३ ) [ ९६४ ]**
सः । सत्य॰सत्वन् । महते । रणाय । रथम् । आ । तिष्ठ ।
तुवि॰नृम्ण । भीमम् ॥ याहि । प्र॰पथिन् । अवसा । उप ।
मद्रिक् । प्र । च । श्रुत । श्रवय । चर्षणि॰भ्यः ॥५॥

# ( ३२ )

५ सुहोत्रो भारद्वाजः । इन्द्रः । त्रिष्टुप् ।

**अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।**
**विरप्शिने वज्रिणे शंतमानि वचांस्यासा स्थविराय तक्षम् ॥१॥**

अपूर्व्या । पुरु०तमानि । अस्मै । महे । वीराय ।
तवसे । तुराय ॥ वि०रप्शिने । वज्रिणे । शम्०तमानि ।
वचांसि । आसा । स्थविराय । तक्षम् ॥१॥

**स मातरा सूर्येणा कवीनामवासयद्रुजदद्रिं गृणानः ।**
**स्वाधीभिर्ऋक्वभिर्वावशान उदुस्रियाणामसृजन्निदानम् ॥२॥**

सः । मातरा । सूर्येण । कवीनाम् । अवासयत् । रुजत् ।
अद्रिम् । गृणानः ॥ सु०आधीभिः । ऋक्व०भिः ।
वावशानः । उत् । उस्रियाणाम् । असृजत् । नि०दानम् ॥२॥

**स वह्निभिर्ऋक्वभिर्गोषु शश्वन्मितज्ञुभिः पुरुकृत्वा जिगाय ।**
**पुरः पुरोहा सखिभिः सखीयन्दृळ्हा रुरोज कविभिः कविः सन् ॥३॥**

सः । वह्नि०भिः । ऋक्व०भिः । गोषु । शश्वत् । मितज्ञु०भिः ।
पुरु०कृत्वा । जिगाय ॥ पुरः । पुरः२हा । सखि०भिः ।
सखि०यन् । दृळ्हा । रुरोज । कवि०भिः । कविः । सन् ॥३॥

**स नीव्याभिर्जरितारमच्छा महो वाजेभिर्महद्भिश्च शुष्मैः ।**
**पुरुवीराभिर्वृषभ क्षितीनामा गिर्वणः सुविताय प्र याहि ॥४॥**

सः । नीव्याभिः । जरितारम् । अच्छ । महः । वाजेभिः ।
महत्०भिः । च । शुष्मैः ॥ पुरु०वीराभिः । वृषभ ।
क्षितीनाम् । आ । गिर्वणः । सुविताय । प्र । याहि ॥४॥

**स सर्गेण शवसा तक्तो ऽअत्यैरप ऽइन्द्रो दक्षिणतस्तुराषाट् ।**
**इत्था सृजाना ऽअनपावृदर्थं दिवेदिवे विविषुरप्रमृष्यम् ॥५॥ (४) [ १६९ ]**

सः । सर्गेण । शवसा । तक्तः । अत्यैः । अपः । इन्द्रः ।
दक्षिणतः । तुराषाट् ॥ इत्था । सृजानाः । अनप०वृत् ।
अर्थम् । दिवे०दिवे । विविषुः । अप्र०मृष्यम् ॥५॥

# ( ३३ )

५ शुनहोत्रो भारद्वाजः । इन्द्रः । त्रिष्टुप् ।

**य ऽओजिष्ठ ऽइन्द्र तं सु नो दा मदो वृषन्त्स्वभिष्टिर्दास्वान् ।**
**सौवश्व्यं यो वनवत्स्वश्वो वृत्रा समत्सु सासहदमित्रान् ॥१॥**

यः । ओजिष्ठः । इन्द्र । तम् । सु । नः । दाः । मदः ।
वृषन् । सु०अभिष्टिः । दास्वान् ॥ सौवश्व्यम् । यः ।
वन०वत् । सु०अश्वः । वृत्रा । समत्०सु । ससहत् । अमित्रान् ॥१॥

**त्वां हीन्द्रावसे विवाचो हवन्ते चर्षणयः शूरसातौ ।**
**त्वं विप्रेभिर्वि पणीँरशायस्त्वोत ऽइत्सनिता वाजमर्वा ॥२॥**

त्वाम् । हि । इन्द्र । अवसे । वि०वाचः । हवन्ते । चर्षणयः ।
शूर०सातौ ॥ त्वम् । विप्रेभिः । वि । पणीन् । अशायः ।
त्वा०ऊतः । इत् । सनिता । वाजम् । अर्वा ॥२॥

**त्वं ताँ ऽइन्द्रोभयाँ ऽअमित्रान्दासा वृत्राण्यार्या च शूर ।**
**वधीर्वनेव सुधितेभिरत्कैरा पृत्सु दर्षि नृणां नृतम ॥३॥**

त्वम् । तान् । इन्द्र । उभयान् । अमित्रान् । दासा । वृत्राणि ।
आर्या । च । शूर ॥ वधीः । वनाऽइव । सु०धितेभिः ।
अत्कैः । आ । पृत्०सु । दर्षि । नृणाम् । नृ०तम ॥३॥

**स त्वं न ऽइन्द्राकवाभिरूती सखा विश्वायुरविता वृधे भूः ।**
**स्वर्षाता यद्ध्वयामसि त्वा युध्यन्तो नेमधिता पृत्सु शूर ॥४॥**

सः । त्वम् । नः । इन्द्र । अकवाभिः । ऊती । सखा ।
विश्व०आयुः । अविता । वृधे । भूः ॥ स्वः॰२साता । यत् ।
ह्वयामसि । त्वा । युध्यन्तः । नेम०धिता । पृत्०सु । शूर ॥४॥

**नूनं न ऽइन्द्रापराय च स्या भवा मृळीक ऽउत नो ऽअभिष्टौ ।**
**इत्था गृणन्तो महिनस्य शर्मन्दिवि ष्याम पार्ये गोषतमाः ॥५॥ (५) [ १७४ ]**

नूनम् । नः । इन्द्र । अपराय । च । स्याः । भव ।
मृळीकः । उत । नः । अभिष्टौ ॥ इत्था । गृणन्तः ।
महिनस्य । शर्मन् । दिवि । स्याम । पार्ये । गोस०तमाः ॥५॥

# ( ३४ )

५ शुनहोत्रो भारद्वाजः । इन्द्रः । त्रिष्टुप् ।

**सं च त्वे जग्मुर्गिर ऽइन्द्र पूर्वीर्वि च त्वद्यन्ति विभ्वो मनीषाः ।**
**पुरा नूनं च स्तुतय ऽऋषीणां पस्पृध्र ऽइन्द्रे ऽअध्युक्थार्का ॥१॥**

सम् । च । त्वे इति । जग्मुः । गिरः । इन्द्र । पूर्वीः । वि । च ।
त्वत् । यन्ति । वि०भ्वः । मनीषाः ॥ पुरा । नूनम् । च । स्तुतयः ।
ऋषीणाम् । पस्पृध्रे । इन्द्रे । अधि । उक्थ०अर्का ॥१॥

**पुरुहूतो यः पुरुगूर्त्त ऽऋभ्वाँ ऽएकः पुरुप्रशस्तो ऽअस्ति यज्ञैः ।**
**रथो न महे शवसे युजानोऽस्माभिरिन्द्रो ऽअनुमाद्यो भूत् ॥२॥**

पुरु०हूतः । यः । पुरु०गूर्त्तः । ऋभ्वा । एकः ।
पुरु०प्रशस्तः । अस्ति । यज्ञैः ॥ रथः । न । महे ।
शवसे । युजानः । अस्माभिः । इन्द्रः । अनु०माद्यः । भूत् ॥२॥

न यं हिंसन्ति धीतयो न वाणीरिन्द्रं नक्षन्तीदभि वर्द्धयन्तीः ।
यदि स्तोतारः शतं यत्सहस्रं गृणन्ति गिर्वणसं शं तदस्मै ॥३॥
न । यम् । हिंसन्ति । धीतयः । न । वाणीः । इन्द्रम् । नक्षन्ति ।
इत् । अभि । वर्द्धयन्तीः ॥ यदि । स्तोतारः । शतम् । यत् ।
सहस्रम् । गृणन्ति । गिर्वणसम् । शम् । तत् । अस्मै ॥३॥

अस्मा ऽएतद्दिव्यर्चेव मासा मिमिक्ष ऽइन्द्रे न्ययामि सोमः ।
जनं न धन्वन्नभि सं यदापः सत्रा वावृधुर्हवनानि यज्ञैः ॥४॥
अस्मै । एतत् । दिवि । अर्चाऽइव । मासा । मिमिक्षः ।
इन्द्रे । नि । अयामि । सोमः ॥ जनम् । न । धन्वन् । अभि ।
सम् । यत् । आपः । सत्राः । ववृधुः । हवनानि । यज्ञैः ॥४॥

अस्मा ऽएतन्मह्याङ्गूषमस्मा ऽइन्द्राय स्तोत्रं मतिभिरवाचि ।
असद्यथा महति वृत्रतूर्य ऽइन्द्रो विश्वायुरविता वृधश्च ॥५॥ (९७९)
अस्मै । एतत् । महि । आङ्गूषम् । अस्मै । इन्द्राय । स्तोत्रम् ।
मति०भिः । अवाचि ॥ असत् । यथा । महति । वृत्र०तूर्ये ।
इन्द्रः । विश्व०आयुः । अविता । वृधः । च ॥५॥

## ( ३५ )

५ नरो भारद्वाजः । इन्द्रः । त्रिष्टुप् ।

कदा भुवन्रथक्षयाणि ब्रह्म कदा स्तोत्रे सहस्रपोष्यं दाः ।
कदा स्तोमं वासयोऽस्य राया कदा धियः करसि वाजरत्नाः ॥१॥
कदा । भुवन् । रथ०क्षयाणि । ब्रह्म । कदा । स्तोत्रे ।
सहस्र०पोष्यम् । दाः ॥ कदा । स्तोमम् । वासयः ।
अस्य । राया । कदा । धियः । करसि । वाज०रत्नाः ॥१॥

कर्हि स्वित्तदिन्द्र यन्नृभिर्नॄन्वीरैर्वीरान्नीळयासे जयाजीन् ।
त्रिधातु गा ऽअधि जयासि गोष्विन्द्र द्युम्नं स्वर्वद्धेह्यस्मे ॥२॥
कर्हि । स्वित् । तत् । इन्द्र । यत् । नृ०भिः । नॄन् । वीरैः । वीरान् ।
नीळयासे । जय । आजीन् ॥ त्रि०धातु । गाः । अधि । जयासि ।
गोषु । इन्द्र । द्युम्नम् । स्वः२वत् । धेहि । अस्मे इति ॥२॥

कर्हि स्वित्तदिन्द्र यज्जरित्रे विश्वप्सु ब्रह्म कृणवः शविष्ठ ।
कदा धियो न नियुतो युवासे कदा गोमघा हवनानि गच्छाः ॥३॥
कर्हि । स्वित् । तत् । इन्द्र । यत् । जरित्रे । विश्व०प्सु ।
ब्रह्म । कृणवः । शविष्ठ ॥ कदा । धियः । न । नि०युतः ।
युवासे । कदा । गो०मघा । हवनानि । गच्छाः ॥३॥

स गोमघा जरित्रे ऽअश्वश्चन्द्रा वाजश्रवसो ऽअधि धेहि पृक्षः ।
पीपिहीषः सुदुघामिन्द्र धेनुं भरद्वाजेषु सुरुचो रुरुच्याः ॥४॥
सः । गो०मघाः । जरित्रे । अश्व०चन्द्राः । वाज०श्रवसः ।
अधि । धेहि । पृक्षः ॥ पीपिहि । इषः । सु०दुघाम् ।
इन्द्र । धेनुम् । भरत्०वाजेषु । सु०रुचः । रुरुच्याः ॥४॥

तमा नूनं वृजनमन्यथा चिच्छूरो यच्छक्र वि दुरो गृणीषे ।
मा निररं शुक्रदुघस्य धेनोराङ्गिरसान्ब्रह्मणा विप्र जिन्व ॥५॥ (७) [ ९८४ ]
तम् । आ । नूनम् । वृजनम् । अन्यथा । चित् । शूरः । यत् ।
शक्र । वि । दुरः । गृणीषे ॥ मा । निः । अरम् । शुक्र०दुघस्य ।
धेनोः । आङ्गिरसान् । ब्रह्मणा । विप्र । जिन्व ॥५॥

# ( ३६ )

५ नरो भारद्वाजः । इन्द्रः । त्रिष्टुप् ।

सत्रा मदासस्तव विश्वजन्याः सत्रा रायोऽध ये पार्थिवासः ।
सत्रा वाजानामभवो विभक्ता यद्देवेषु धारयथा ऽअसुर्यम् ॥१॥
सत्रा । मदासः । तव । विश्व०जन्याः । सत्रा । रायः ।
अध । ये । पार्थिवासः ॥ सत्रा । वाजानाम् । अभवः ।
वि०भक्ता । यत् । देवेषु । धारयथाः । असुर्यम् ॥१॥

अनु प्र येजे जन ऽओजो ऽअस्य सत्रा दधिरे ऽअनु वीर्याय ।
स्यूमगृभे दुधयेऽर्वते च क्रतुं वृञ्जन्त्यपि वृत्रहत्ये ॥२॥
अनु । प्र । येजे । जनः । ओजः । अस्य । सत्रा ।
दधिरे । अनु । वीर्याय ॥ स्यूम०गृभे । दुधये । अर्वते ।
च । क्रतुम् । वृञ्जन्ति । अपि । वृत्र०हत्ये ॥२॥

तं सध्रीचीरूतयो वृष्ण्यानि पौंस्यानि नियुतः सश्चुरिन्द्रम् ।
समुद्रं न सिन्धव ऽउक्थशुष्मा ऽउरुव्यचसं गिर ऽआ विशन्ति ॥३॥
तम् । सध्रीचीः । ऊतयः । वृष्ण्यानि । पौंस्यानि ।
नि०युतः । सश्चुः । इन्द्रम् ॥ समुद्रम् । न । सिन्धवः ।
उक्थ०शुष्माः । उरु०व्यचसम् । गिरः । आ । विशन्ति ॥३॥

स रायस्खामुप सृजा गृणानः पुरुश्चन्द्रस्य त्वमिन्द्र वस्वः ।
पतिर्बभूथासमो जनानामेको विश्वस्य भुवनस्य राजा ॥४॥
सः । रायः । खाम् । उप । सृज । गृणानः । पुरु०चन्द्रस्य ।
त्वम् । इन्द्र । वस्वः ॥ पतिः । बभूथ । असमः ।
जनानाम् । एकः । विश्वस्य । भुवनस्य । राजा ॥४॥

**स तु श्रुधि श्रुत्या यो दुवोयुर्द्यौर्न भूमाभि रायो ऽअर्यः ।**
**असो यथा नः शवसा चकानो युगेयुगे वयसा चेकितानः ॥५॥ (८)[१८९]**

सः । तु । श्रुधि । श्रुत्या । यः । दुवःऽयुः । द्यौः । न ।
भूम । अभि । रायः । अर्यः ॥ असः । यथा । नः ।
शवसा । चकानः । युगेऽयुगे । वयसा । चेकितानः ॥५॥

## ( ३७ )

५ बार्हस्पत्यो भरद्वाजः । इन्द्रः । त्रिष्टुप् ।

**अर्वाग्रथं विश्ववारं त ऽउग्रेन्द्र युक्तासो हरयो वहन्तु ।**
**कीरिश्चिद्धि त्वा हवते स्वर्वानृधीमहि सधमादस्ते ऽअद्य ॥१॥**

अर्वाक् । रथम् । विश्वऽवारम् । ते । उग्र । इन्द्र ।
युक्तासः । हरयः । वहन्तु ॥ कीरिः । चित् । हि । त्वा ।
हवते । स्वःऽवान् । ऋधीमहि । सधऽमादः । ते । अद्य ॥१॥

**प्रो द्रोणे हरयः कर्माग्मन्पुनानास ऽऋज्यन्तो ऽअभूवन् ।**
**इन्द्रो नो ऽअस्य पूर्व्यः पपीयाद्द्युक्षो मदस्य सोम्यस्य राजा ॥२॥**

प्रो इति । द्रोणे । हरयः । कर्म । अग्मन् । पुनानासः ।
ऋज्यन्तः । अभूवन् ॥ इन्द्रः । नः । अस्य । पूर्व्यः ।
पपीयात् । द्युक्षः । मदस्य । सोम्यस्य । राजा ॥२॥

**आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो ऽअश्वाः ।**
**अभि श्रव ऽऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत् ॥३॥**

आऽसस्राणासः । शवसानम् । अच्छ । इन्द्रम् । सुऽचक्रे ।
रथ्यासः । अश्वाः ॥ अभि । श्रवः । ऋज्यन्तः । वहेयुः ।
नु । चित् । नु । वायोः । अमृतम् । वि । दस्येत् ॥३॥

**वरिष्ठो ऽअस्य दक्षिणामियर्त्तीन्द्रो मघोनां तुविकूर्मितमः ।**
**यया वज्रिवः परियास्यंहो मघा च धृष्णो दयसे वि सूरीन् ॥४॥**
वरिष्ठः । अस्य । दक्षिणाम् । इयर्त्ति । इन्द्रः । मघोनाम् ।
तुविकूर्मि०तमः ॥ यया । वज्रि०वः । परि०यासि । अंहः ।
मघा । च । धृष्णो इति । दयसे । वि । सूरीन् ॥४॥

**इन्द्रो वाजस्य स्थविरस्य दातेन्द्रो गीर्भिर्वर्द्धतां वृद्धमहाः ।**
**इन्द्रो वृत्रं हनिष्ठो ऽअस्तु सत्वा ता सूरिः पृणति तूतुजानः ॥५॥ (९) [९९४]**
इन्द्रः । वाजस्य । स्थविरस्य । दाता । इन्द्रः । गीःऽभिः ।
वर्द्धताम् । वृद्ध०महाः ॥ इन्द्रः । वृत्रम् । हनिष्ठः ।
अस्तु । सत्वा । आ । ता । सूरिः । पृणति । तूतुजानः ॥५॥

## ( ३८ )

५ बार्हस्पत्यो भरद्वाजः । इन्द्रः । त्रिष्टुप् ।

**अपादित ऽउदु नश्चित्रतमो महीं भर्षद्द्युमतीमिन्द्रहूतिम् ।**
**पन्यसीं धीतिं दैव्यस्य यामञ्जनस्य रातिं वनते सुदानुः ॥१॥**
अपात् । इतः । उत् । ऊँ इति । नः । चित्र०तमः । महीम् ।
भर्षत् । द्यु०मतीम् । इन्द्र०हूतिम् ॥ पन्यसीम् । धीतिम् ।
दैव्यस्य । यामन् । जनस्य । रातिम् । वनते । सु०दानुः ॥१॥

**दूराच्चिदा वसतो ऽअस्य कर्णा घोषादिन्द्रस्य तन्यति ब्रुवाणः ।**
**एयमेनं देवहूतिर्ववृत्यान्मद्र्यँगिन्द्रमियमृच्यमाना ॥२॥**
दूरात् । चित् । आ । वसतः । अस्य । कर्णा । घोषात् ।
इन्द्रस्य । तन्यति । ब्रुवाणः ॥ आ । इयम् । एनम् ।
देव०हूतिः । ववृत्यात् । मध्रक् । इन्द्रम् । इयम् । ऋच्यमाना ॥२॥

तं वो धिया परमया पुराजामजरमिन्द्रमभ्यनूष्यर्कैः ।
ब्रह्मा च गिरो दधिरे समस्मिन्महाँश्च स्तोमो ऽअधि वर्द्धदिन्द्रे ॥३॥
तम् । वः । धिया । परमया । पुरा०जाम् । अजरम् । इन्द्रम् ।
अभि । अनूषि । अर्कैः ॥ ब्रह्म । च । गिरः । दधिरे । सम् ।
अस्मिन् । महान् । च । स्तोमः । अधि । वर्द्धत् । इन्द्रे ॥३॥

वर्द्धाद्यं यज्ञ ऽउत सोम ऽइन्द्रं वर्द्धाद्ब्रह्म गिर ऽउक्था च मन्म ।
वर्द्धाहैनमुषसो यामन्नक्तोर्वर्द्धान्मासाः शरदो द्याव ऽइन्द्रम् ॥४॥
वर्द्धात् । यम् । यज्ञः । उत । सोमः । इन्द्रम् । वर्द्धात् । ब्रह्म ।
गिरः । उक्था । च । मन्म ॥ वर्द्ध । अह । एनम् । उषसः ।
यामन् । अक्तोः । वर्द्धान् । मासाः । शरदः । द्यावः । इन्द्रम् ॥४॥

एवा जज्ञानं सहसे ऽअसामि वावृधानं राधसे च श्रुताय ।
महामुग्रमवसे विप्र नूनमा विवासेम वृत्रतूर्येषु ॥५॥ (१०) [ ९९९ ]
एव । जज्ञानम् । सहसे । असामि । ववृधानम् ।
राधसे । च । श्रुताय ॥ महाम् । उग्रम् । अवसे ।
विप्र । नूनम् । आ । विवासेम । वृत्र०तूर्येषु ॥५॥

## ( ३९ )

५ बार्हस्पत्यो भरद्वाजः । इन्द्रः । त्रिष्टुप् ।

मन्द्रस्य कवेर्दिव्यस्य वह्नेर्विप्रमन्मनो वचनस्य मध्वः ।
अपा नस्तस्य सचनस्य देवेषो युवस्व गृणते गोअग्राः ॥१॥
मन्द्रस्य । कवेः । दिव्यस्य । वह्नेः । विप्र०मन्मनः ।
वचनस्य । मध्वः ॥ अपाः । नः । तस्य । सचनस्य ।
देव । इषः । युवस्व । गृणते । गो०अग्राः ॥१॥

अयमुशानः पर्यद्रिमुस्रा ऽऋतधीतिभिर्ऋतयुग्युजानः ।
रुजदरुग्णं वि वलस्य सानुं पणीँर्वचोभिरभि योधदिन्द्रः ॥२॥
अयम् । उशानः । परि । अद्रिम् । उस्राः । ऋतधीतिऽभिः ।
ऋतऽयुक् । युजानः ॥ रुजत् । अरुग्णम् । वि । वलस्य ।
सानुम् । पणीन् । वचःऽभिः । अभि । योधत् । इन्द्रः ॥२॥

अयं द्योतयदद्युतो व्यक्तून्दोषा वस्तोः शरद ऽइन्दुरिन्द्र ।
इमं केतुमदधुर्नू चिदह्नां शुचिजन्मन ऽउषसश्चकार ॥३॥
अयम् । द्योतयत् । अद्युतः । वि । अक्तून् । दोषा ।
वस्तोः । शरदः । इन्दुः । इन्द्र ॥ इमम् । केतुम् । अदधुः ।
नु । चित् । अह्नाम् । शुचिऽजन्मनः । उषसः । चकार ॥३॥

अयं रोचयदरुचो रुचानोऽयं वासयद्व्यृतेन पूर्वीः ।
अयमीयत ऽऋतयुग्भिरश्वैः स्वर्विदा नाभिना चर्षणिप्राः ॥४॥
अयम् । रोचयत् । अरुचः । रुचानः । अयम् । वासयत् ।
वि । ऋतेन । पूर्वीः ॥ अयम् । ईयते । ऋतयुक्ऽभिः ।
अश्वैः । स्वःऽविदा । नाभिना । चर्षणिऽप्राः ॥४॥

नू गृणानो गृणते प्रत्न राजन्निषः पिन्व वसुदेयाय पूर्वीः ।
अप ऽओषधीरविषा वनानि गा ऽअर्वतो नॄनृचसे रिरीहि ॥५॥ ( ११ )[ १००४ ]
नु । गृणानः । गृणते । प्रत्न । राजन् । इषः । पिन्व ।
वसुऽदेयाय । पूर्वीः ॥ अपः । ओषधीः । अविषा ।
वनानि । गाः । अर्वतः । नॄन् । ऋचसे । रिरीहि ॥५॥

# ( ४० )

५ बार्हस्पत्यो भरद्वाजः । इन्द्रः । त्रिष्टुप् ।

इन्द्र पिब तुभ्यं सुतो मदायाव स्य हरी वि मुचा सखाया ।
उत प्र गाय गण ऽआ निषद्याथा यज्ञाय गृणते वयो धाः ॥१॥
इन्द्र । पिब । तुभ्यम् । सुतः । मदाय । अव । स्य ।
हरी इति । वि । मुच । सखाया ॥ उत । प्र । गाय ।
गणे । आ । नि०सद्य । अथ । यज्ञाय । गृणते । वयः । धाः ॥१॥

अस्य पिब यस्य जज्ञान ऽइन्द्र मदाय क्रत्वे ऽअपिबो विरप्शिन् ।
तमु ते गावो नर ऽआपो ऽअद्रिरिन्दुं समह्यन्पीतये समस्मै ॥२॥
अस्य । पिब । यस्य । जज्ञानः । इन्द्र । मदाय । क्रत्वे । अपिबः ।
वि०रप्शिन् ॥ तम् । ऊँ इति । ते । गावः । नरः । आपः ।
अद्रिः । इन्दुम् । सम् । अह्यन् । पीतये । सम् । अस्मै ॥२॥

समिद्धे ऽअग्नौ सुत ऽइन्द्र सोम ऽआ त्वा वहन्तु हरयो वहिष्ठाः ।
त्वायता मनसा जोहवीमीन्द्रा याहि सुविताय महे नः ॥३॥
सम्०इद्धे । अग्नौ । सुते । इन्द्र । सोमे । आ । त्वा ।
वहन्तु । हरयः । वहिष्ठाः ॥ त्वा०यता । मनसा ।
जोहवीमि । इन्द्र । आ । याहि । सुविताय । महे । नः ॥३॥

आ याहि शश्वदुशता ययाथेन्द्र महा मनसा सोमपेयम् ।
उप ब्रह्माणि शृणव ऽइमा नोऽथा ते यज्ञस्तन्वे३ वयो धात् ॥४॥
आ । याहि । शश्वत् । उशता । ययाथ । इन्द्र । महा ।
मनसा । सोम०पेयम् ॥ उप । ब्रह्माणि । शृणवः । इमा ।
नः । अथ । ते । यज्ञः । तन्वे । वयः । धात् ॥४॥

**यदिन्द्र दिवि पार्ये यदृधग्यद्वा स्वे सदने यत्र वासि ।**
**अतो नो यज्ञमवसे नियुत्वान्त्सजोषाः पाहि गिर्वणो मरुद्भिः ॥५॥ (१२) [१००९]**

यत् । इन्द्र । दिवि । पार्ये । यत् । ऋधक् । यत् । वा ।
स्वे । सदने । यत्र । वा । असि ॥ अतः । नः । यज्ञम् ।
अवसे । नियुत्वान् । स०जोषाः । पाहि । गिर्वणः । मरुत्०भिः ॥५॥

## ( ४१ )

**५ बार्हस्पत्यो भरद्वाजः । इन्द्रः । त्रिष्टुप् ।**

**अहेळमान ऽउप याहि यज्ञं तुभ्यं पवन्त ऽइन्दवः सुतासः ।**
**गावो न वज्रिन्त्स्वमोको ऽअच्छेन्द्रा गहि प्रथमो यज्ञियानाम् ॥१॥**

अहेळमानः । उप । याहि । यज्ञम् । तुभ्यम् । पवन्ते ।
इन्दवः । सुतासः ॥ गावः । न । वज्रिन् । स्वम् । ओकः ।
अच्छ । इन्द्र । आ । गहि । प्रथमः । यज्ञियानाम् ॥१॥

**या ते काकुत्सुकृता या वरिष्ठा यया शश्वत्पिबसि मध्व ऽऊर्मिम् ।**
**तया पाहि प्र ते ऽअध्वर्युरस्थात्सं ते वज्रो वर्त्ततामिन्द्र गव्युः ॥२॥**

या । ते । काकुत् । सु०कृता । या । वरिष्ठा । यया । शश्वत् ।
पिबसि । मध्वः । ऊर्मिम् ॥ तया । पाहि । प्र । ते । अध्वर्युः ।
अस्थात् । सम् । ते । वज्रः । वर्त्तताम् । इन्द्र । गव्युः ॥२॥

**एष द्रप्सो वृषभो विश्वरूप ऽइन्द्राय वृष्णे समकारि सोमः ।**
**एतं पिब हरिवः स्थातरुग्र यस्येशिषे प्रदिवि यस्ते ऽअन्नम् ॥३॥**

एषः । द्रप्सः । वृषभः । विश्व०रूपः । इन्द्राय । वृष्णे ।
सम् । अकारि । सोमः ॥ एतम् । पिब । हरि०वः । स्थातः ।
उग्र । यस्य । ईशिषे । प्र०दिवि । यः । ते । अन्नम् ॥३॥

**सुतः सोमो ऽअसुतादिन्द्र वस्यानयं श्रेयाञ्चिकितुषे रणाय ।**
**एतं तितिर्व ऽउप याहि यज्ञं तेन विश्वास्तविषीरा पृणस्व ॥४॥**
सुतः । सोमः । असुतात् । इन्द्र । वस्यान् । अयम् ।
श्रेयान् । चिकितुषे । रणाय ॥ एतम् । तितिर्वः । उप ।
याहि । यज्ञम् । तेन । विश्वाः । तविषीः । आ । पृणस्व ॥४॥

**ह्वयामसि त्वेन्द्र याह्यर्वाङरं ते सोमस्तन्वे भवाति ।**
**शतक्रतो मादयस्वा सुतेषु प्रास्माँ ऽअव पृतनासु प्र विक्षु ॥५॥ ( १३ )[ १०१४ ]**
ह्वयामसि । त्वा । आ । इन्द्र । याहि । अर्वाङ् । अरम् । ते ।
सोमः । तन्वे । भवाति ॥ शतक्रतो इति शत०क्रतो । मादयस्व ।
सुतेषु । प्र । अस्मान् । अव । पृतनासु । प्र । विक्षु ॥५॥

# ( ४२ )

**४ बार्हस्पत्यो भरद्वाजः । इन्द्रः । अनुष्टुप्, ४ बृहती ।**

**प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।**
**अरंगमाय जग्मयेऽपश्चाद्दघ्वने नरे ॥१॥**
प्रति । अस्मै । पिपीषते । विश्वानि । विदुषे । भर ॥
अरम्०गमाय । जग्मये । अपश्चात्०दघ्वने । नरे ॥१॥

**एमेनं प्रत्येतन सोमेभिः सोमपातमम् ।**
**अमत्रेभिर्ऋजीषिणमिन्द्रं सुतेभिरिन्दुभिः ॥२॥**
आ । ईम् । एनम् । प्रति०एतन । सोमेभिः । सोम०पातमम् ॥
अमत्रेभिः । ऋजीषिणम् । इन्द्रम् । सुतेभिः । इन्दु०भिः ॥२॥

**यदी सुतेभिरिन्दुभिः सोमेभिः प्रतिभूषथ ।**
**वेदा विश्वस्य मेधिरो धृषत्तंतमिदेषते ॥३॥**

यदि । सुतेभिः । इन्दुऽभिः । सोमेभिः । प्रतिऽभूषथ ॥
वेद । विश्वस्य । मेधिरः । धृषत् । तम्ऽतम् । इत् । आ । ईषते ॥३॥

**अस्माअस्मा ऽइदन्धसोऽध्वर्यो प्र भरा सुतम् ।**
**कुवित्समस्य जेन्यस्य शर्द्धतोऽभिशस्तेरवस्परत् ॥४॥ (१४)** [ १०१८ ]
अस्मैऽअस्मै । इत् । अन्धसः । अध्वर्यो इति । प्र । भर । सुतम् ॥
कुवित् । समस्य । जेन्यस्य । शर्द्धतः । अभिऽशस्तेः । अवऽस्परत् ॥४॥

# ( ४३ )

**४ बार्हस्पत्यो भरद्वाजः । इन्द्रः । उष्णिक् ।**

**यस्य त्यच्छम्बरं मदे दिवोदासाय रन्धयः ।**
**अयं स सोम ऽइन्द्र ते सुतः पिब ॥१॥**
यस्य । त्यत् । शम्बरम् । मदे । दिवःऽदासाय । रन्धयः ॥
अयम् । सः । सोमः । इन्द्र । ते । सुतः । पिब ॥१॥

**यस्य तीव्रसुतं मदं मध्यमन्तं च रक्षसे ।**
**अयं स सोम ऽइन्द्र ते सुतः पिब ॥२॥**
यस्य । तीव्रऽसुतम् । मदम् । मध्यम् । अन्तम् । च । रक्षसे ॥
अयम् । सः । सोमः । इन्द्र । ते । सुतः । पिब ॥२॥

**यस्य गा ऽअन्तरश्मनो मदे दृळ्हा ऽअवासृजः ।**
**अयं स सोम ऽइन्द्र ते सुतः पिब ॥३॥**
यस्य । गाः । अन्तः । अश्मनः । मदे । दृळ्हाः । अवऽअसृजः ॥
अयम् । सः । सोमः । इन्द्र । ते । सुतः । पिब ॥३॥

यस्य॑ मन्दा॒नो ऽअन्ध॑सो॒ माघो॑नं दधि॒षे शव॑ः ।
अ॒यं स सोम॑ ऽइन्द्र ते सु॒तः पिब॑ ॥४॥ (१५) [१०२२]
यस्य॑ । म॒न्दा॒नः । अन्ध॑सः । माघो॑नम् । द॒धि॒षे । शव॑ः ॥
अ॒यम् । सः । सोम॑ः । इ॒न्द्र॒ । ते॒ । सु॒तः । पिब॑ ॥४॥

# (४४) [ अथ चतुर्थोऽनुवाकः ॥४॥ ४४-४९

२६ शंयुर्बार्हस्पत्यः । इन्द्रः । त्रिष्टुप्, १-६ अनुष्टुप्, ८ विराट् ।

यो र॑यिवो र॒यिंत॑मो॒ यो द्युम्नैर्द्युम्नव॑त्तमः ।
सोम॑ः सु॒तः स ऽइ॑न्द्र॒ तेऽस्ति॑ स्वधाप॒ते मद॑ः ॥१॥
यः । र॒यि॒ऽव॒ः । र॒यिम्ऽत॑मः । यः । द्युम्नैः । द्युम्नवत्ऽतमः ॥
सोम॑ः । सु॒तः । सः । इ॒न्द्र॒ । ते॒ । अस्ति॑ । स्व॒धा॒ऽप॒ते॒ । मद॑ः ॥१॥

यः श॒ग्मस्तु॑विशग्म ते रा॒यो दा॒मा म॑ती॒नाम् ।
सोम॑ः सु॒तः स ऽइ॑न्द्र॒ तेऽस्ति॑ स्वधाप॒ते मद॑ः ॥२॥
यः । श॒ग्मः । तु॒वि॒ऽश॒ग्म॒ । ते॒ । रा॒यः । दा॒मा । म॒ती॒नाम् ॥
सोम॑ः । सु॒तः । सः । इ॒न्द्र॒ । ते॒ । अस्ति॑ । स्व॒धा॒ऽप॒ते॒ । मद॑ः ॥२॥

येन॑ वृ॒द्धो न शव॑सा तु॒रो न स्वाभि॑रू॒तिभि॑ः ।
सोम॑ः सु॒तः स ऽइ॑न्द्र॒ तेऽस्ति॑ स्वधाप॒ते मद॑ः ॥३॥
येन॑ । वृ॒द्धः । न । शव॑सा । तु॒रः । न । स्वाभि॑ः । ऊ॒तिऽभि॑ः ॥
सोम॑ः । सु॒तः । सः । इ॒न्द्र॒ । ते॒ । अस्ति॑ । स्व॒धा॒ऽप॒ते॒ । मद॑ः ॥३॥

त्यमु॑ वो॒ ऽअप्र॑हणं गृणी॒षे शव॑स॒स्पति॑म् ।
इन्द्रं॑ विश्वा॒साह॒ं नरं॒ मंहि॑ष्ठं वि॒श्वच॑र्षणिम् ॥४॥
त्यम् । ऊ॒ँ इति॑ । व॒ः । अप्र॑ऽहनम् । गृ॒णी॒षे । शव॑सः । पति॑म् ॥
इन्द्र॑म् । वि॒श्व॒ऽसह॑म् । नर॑म् । मंहि॑ष्ठम् । वि॒श्व॒ऽच॑र्षणिम् ॥४॥

**यं वर्द्धयन्तीद्गिरः पतिं तुरस्य राधसः ।**
**तमिन्न्वस्य रोदसी देवी शुष्मं सपर्यतः ॥५॥ (१६)**
यम् । वर्द्धयन्ति । इत् । गिरः । पतिम् । तुरस्य । राधसः ॥
तम् । इत् । नु । अस्य । रोदसी इति । देवी इति । शुष्मम् । सपर्यतः ॥५॥

**तद्व ऽउक्थस्य बर्हणेन्द्रायोपस्तृणीषणि ।**
**विपो न यस्योतयो वि यद्रोहन्ति सक्षितः ॥६॥**
तत् । वः । उक्थस्य । बर्हणा । इन्द्राय । उप०स्तृणीषणि ॥
विपः । न । यस्य । ऊतयः । वि । यत् । रोहन्ति । स०क्षितः ॥६॥

**अविदद्दक्षं मित्रो नवीयान्पपानो देवेभ्यो वस्यो ऽअचैत् ।**
**ससवान्स्तौलाभिर्धौतरीभिरुरुष्या पायुरभवत्सखिभ्यः ॥७॥**
अविदत् । दक्षम् । मित्रः । नवीयान् । पपानः ।
देवेभ्यः । वस्यः । अचैत् ॥ सस०वान् । स्तौलाभिः ।
धौतरीभिः । उरुष्या । पायुः । अभवत् । सखि०भ्यः ॥७॥

**ऋतस्य पथि वेधा ऽअपायि श्रिये मनांसि देवासो ऽअक्रन् ।**
**दधानो नाम महो वचोभिर्वपुर्दृशये वेन्यो व्यावः ॥८॥**
ऋतस्य । पथि । वेधाः । अपायि । श्रिये । मनांसि ।
देवासः । अक्रन् ॥ दधानः । नाम । महः । वचः२भिः ।
वपुः । दृशये । वेन्यः । वि । आवरित्यावः ॥८॥

**द्युमत्तमं दक्षं धेह्यस्मे सेधा जनानां पूर्वीररातीः ।**
**वर्षीयो वयः कृणुहि शचीभिर्धनस्य सातावस्माँ ऽअविड्ढि ॥९॥**
द्युमत्०तमम् । दक्षम् । धेहि । अस्मे इति । सेध ।
जनानाम् । पूर्वीः । अरातीः ॥ वर्षीयः । वयः ।
कृणुहि । शचीभिः । धनस्य । सातौ । अस्मान् । अविड्ढि ॥९॥

इन्द्र तुभ्यमिन्मघवन्नभूम वयं दात्रे हरिवो मा वि वेनः ।
नकिरापिर्ददृशे मर्त्यत्रा किमङ्ग रध्रचोदनं त्वाहुः ॥१०॥ (१७)
इन्द्र । तुभ्यम् । इत् । मघ०वन् । अभूम । वयम् । दात्रे ।
हरि०वः । मा । वि । वेनः ॥ नकिः । आपिः । ददृशे ।
मर्त्य०त्रा । किम् । अङ्ग । रध्र०चोदनम् । त्वा । आहुः ॥१०॥

मा जस्वने वृषभ नो ररीथा मा ते रेवतः सख्ये रिषाम ।
पूर्वीष्ट ऽइन्द्र निष्षिधो जनेषु जह्यसुष्वीन्प्र वृहापृणतः ॥११॥
मा । जस्वने । वृषभ । नः । ररीथाः । मा । ते । रेवतः ।
सख्ये । रिषाम ॥ पूर्वीः । ते । इन्द्र । निःऽसिधः ।
जनेषु । जहि । असुस्वीन् । प्र । वृह । अपृणतः ॥११॥

उदभ्राणीव स्तनयन्नियर्त्तीन्द्रो राधांस्यश्व्यानि गव्या ।
त्वमसि प्रदिवः कारुधाया मा त्वादामान ऽआ दभन्मघोनः ॥१२॥
उत् । अभ्राणिऽइव । स्तनयन् । इयर्त्ति । इन्द्रः । राधांसि ।
अश्व्यानि । गव्या ॥ त्वम् । आसि । प्र०दिवः । कारु०धायाः ।
मा । त्वा । अदामानः । आ । दभन् । मघोनः ॥१२॥

अध्वर्यो वीर प्र महे सुतानामिन्द्राय भर स ह्यस्य राजा ।
यः पूर्व्याभिरुत नूतनाभिर्गीर्भिर्वावृधे गृणतामृषीणाम् ॥१३॥
अध्वर्यो इति । वीर । प्र । महे । सुतानाम् । इन्द्राय । भर ।
सः । हि । अस्य । राजा ॥ यः । पूर्व्याभिः । उत ।
नूतनाभिः । गीःऽभिः । ववृधे । गृणताम् । ऋषीणाम् ॥१३॥

अस्य मदे पुरु वर्पांसि विद्वानिन्द्रो वृत्राण्यप्रती जघान ।
तमु प्र होषि मधुमन्तमस्मै सोमं वीराय शिप्रिणे पिबध्यै ॥१४॥

अस्य । मदे । पुरु । वर्पांसि । विद्वान् । इन्द्रः । वृत्राणि ।
अप्रति । जघान ॥ तम् । ऊँ इति । प्र । होषि । मधुऽमन्तम् ।
अस्मै । सोमम् । वीराय । शिप्रिणे । पिबध्यै ॥१४॥

**पाता सुतमिन्द्रो ऽअस्तु सोमं हन्ता वृत्रं वज्रेण मन्दसानः ।**
**गन्ता यज्ञं परावतश्चिदच्छा वसुर्धीनामविता कारुधायाः ॥१५॥ ( १८ )**
पाता । सुतम् । इन्द्रः । अस्तु । सोमम् । हन्ता । वृत्रम् ।
वज्रेण । मन्दसानः ॥ गन्ता । यज्ञम् । पराऽवतः । चित् ।
अच्छ । वसुः । धीनाम् । अविता । कारुऽधायाः ॥१५॥

**इदं त्यत्पात्रमिन्द्रपानमिन्द्रस्य प्रियममृतमपायि ।**
**मत्सद्यथा सौमनसाय देवं व्य१स्मद्द्वेषो युयवद्व्यंहः ॥१६॥**
इदम् । त्यत् । पात्रम् । इन्द्रऽपानम् । इन्द्रस्य । प्रियम् ।
अमृतम् । अपायि ॥ मत्सत् । यथा । सौमनसाय । देवम् ।
वि । अस्मत् । द्वेषः । युयवत् । वि । अंहः ॥१६॥

**एना मन्दानो जहि शूर शत्रूञ्जामिमजामिं मघवन्नमित्रान् ।**
**अभिषेणाँ ऽअभ्याऽदेदिशानान्पराच ऽइन्द्र प्र मृणा जही च ॥१७॥**
एना । मन्दानः । जहि । शूर । शत्रून् । जामिम् । अजामिम् ।
मघऽवन् । अमित्रान् ॥ अभिऽसेनान् । अभि । आऽदेदिशानान् ।
पराचः । इन्द्र । प्र । मृण । जहि । च ॥१७॥

**आसु ष्मा णो मघवन्निन्द्र पृत्स्व१स्मभ्यं महि वरिवः सुगं कः ।**
**अपां तोकस्य तनयस्य जेष ऽइन्द्र सूरीन्कृणुहि स्मा नो ऽअर्द्धम् ॥१८॥**
आसु । स्म । नः । मघऽवन् । इन्द्र । पृत्ऽसु । अस्मभ्यम् । महि ।
वरिवः । सुऽगम् । करिति कः ॥ अपाम् । तोकस्य । तनयस्य ।
जेषे । इन्द्र । सूरीन् । कृणुहि । स्म । नः । अर्द्धम् ॥१८॥

आ त्वा हर॑यो॒ वृष॑णो युजा॒ना वृष॑रथासो॒ वृष॑रश्मयो॒ऽत्याः ।
अ॒स्म॒त्राञ्चो॒ वृष॑णो वज्र॒वाहो॒ वृष्णे॒ मदा॑य सुयुजो॑ वहन्तु ॥१९॥
आ । त्वा॒ । हर॑यः । वृष॑णः । यु॒जा॒नाः । वृष॑ऽरथासः ।
वृष॑ऽरश्मयः । अत्याः ॥ अ॒स्म॒त्राञ्चः॑ । वृष॑णः ।
व॒ज्र॒ऽवाह॑ः । वृष्णे॑ । मदा॑य । सु॒ऽयुज॑ः । व॒ह॒न्तु॒ ॥१९॥

आ ते॑ वृष॒न्वृष॑णो॒ द्रोण॑मस्थुर्घृत॒प्रुषो॒ नोर्म॑यो॒ मद॑न्तः ।
इन्द्र॒ प्र तुभ्यं॒ वृष॑भिः सुताना॒ं वृष्णे॑ भरन्ति वृष॒भाय॒ सोम॑म् ॥२०॥ ( १९ )
आ । ते॒ । वृ॒ष॒न् । वृष॑णः । द्रोण॑म् । अ॒स्थु॒ः । घृ॒त॒ऽप्रुष॑ः ।
न । ऊ॒र्मय॑ः । मद॑न्तः ॥ इन्द्र॑ । प्र । तुभ्य॑म् । वृष॑ऽभिः ।
सु॒ताना॑म् । वृष्णे॑ । भ॒र॒न्ति॒ । वृ॒ष॒भाय॑ । सोम॑म् ॥२०॥

वृषा॑सि दि॒वो वृ॑ष॒भः पृ॑थि॒व्या वृषा॒ सिन्धू॑नां वृष॒भः स्तिया॑नाम् ।
वृष्णे॑ त॒ ऽइन्दु॑र्वृषभ पीपाय स्वा॒दू रसो॑ मधु॒पेयो॒ वरा॑य ॥२१॥
वृषा॑ । अ॒सि॒ । दि॒वः । वृ॒ष॒भः । पृ॒थि॒व्याः । वृषा॑ । सिन्धू॑नाम् ।
वृ॒ष॒भः । स्तिया॑नाम् ॥ वृष्णे॑ । ते॒ । इन्दु॑ः । वृ॒ष॒भ॒ ।
पी॒पा॒य॒ । स्वा॒दुः । रस॑ः । म॒धु॒ऽपेय॑ः । वरा॑य ॥२१॥

अ॒यं दे॒वः सह॑सा॒ जाय॑मान॒ ऽइन्द्रे॑ण यु॒जा प॒णिम॑स्तभायत् ।
अ॒यं स्वस्य॑ पि॒तुरायु॑धा॒नीन्दु॑रमुष्णा॒दशि॑वस्य मा॒याः ॥२२॥
अ॒यम् । दे॒वः । सह॑सा । जाय॑मानः । इन्द्रे॑ण । यु॒जा ।
प॒णिम् । अ॒स्त॒भा॒य॒त् ॥ अ॒यम् । स्वस्य॑ । पि॒तुः ।
आयु॑धानि । इन्दु॑ः । अ॒मु॒ष्णा॒त् । अशि॑वस्य । मा॒याः ॥२२॥

अ॒यम॑कृणोदु॒षस॑ः सु॒पत्नी॑र॒यं सूर्ये॑ ऽअदधा॒ज्ज्योति॑र॒न्तः ।
अ॒यं त्रि॒धातु॑ दि॒वि रो॑च॒नेषु॑ त्रि॒तेषु॑ विन्ददमृ॒त॒ निगू॑ळ्हम् ॥२३॥

अयम् । अकृणोत् । उषसः । सु॒ऽपत्नीः । अयम् । सूर्ये । 
अदधात् । ज्योतिः । अन्तरिति ॥ अयम् । त्रिऽधातु । 
दिवि । रोचनेषु । त्रितेषु । विन्दत् । अमृतम् । निऽगूळ्हम् ॥२३॥

अयं द्यावापृथिवी वि ष्कभायदयं रथमयुनक्सप्तरश्मिम् ।
अयं गोषु शच्या पक्वमन्तः सोमो दाधार दशयन्त्रमुत्सम् ॥२४॥
अयम् । द्यावापृथिवी इति । वि । स्कभायत् । अयम् । 
रथम् । अयुनक् । सप्तऽरश्मिम् ॥ अयम् । गोषु । शच्या । 
पक्वम् । अन्तरिति । सोमः । दाधार । दशऽयन्त्रम् । उत्सम् ॥२४॥

*चक्षुश्च श्रोत्रं च मनश्च वाक्च प्राणापानौ देह इदं शरीरम् ।
द्वौ प्रत्यञ्चावनुलोमौ विसर्गावेतं तं मन्ये दशयन्त्रमुत्सम् ॥२५॥
चक्षुः । च । श्रोत्रम् । च । मनः । च । वाक् । च । प्राणापानौ । 
देहः । इदम् । शरीरम् ॥ द्वौ प्रत्यञ्चौ । अनुऽलोमौ । 
विऽसर्गौ । एतम् । तम् । मन्ये । दशऽयन्त्रम् । उत्सम् ॥

*उरश्च पृष्ठश्च करौ च बाहू जंघे चोरु उदरं शिरश्च ।
रोमाणि मांसं रुधिरास्थिमज्जमेतच्छरीरं जलबुद्बुदोपमम् ॥२६॥ (२०) [ १०४८ ]
उरः । च । पृष्ठः । च । करौ । च । बाहू इति । जङ्घे इति । 
च । उरु इति । उत्ऽअरम् । शिरः । च ॥ रोमाणि । मांसम् । 
रुधिरास्थिमज्जम् । एतत् । शरीरम् । जलबुद्बुदऽउपमम् ॥

## ( ४५ )

३३शंयुर्बार्हस्पत्यः । इन्द्रः, ३१-३३बृवुस्तक्षा । गायत्री, २९ अतिनिचृत्, 
३१ पादनिचृत्, ३३ अनुष्टुप् ।

य ऽआनयत्परावतः सुनीती तुर्वशं यदुम् ।
इन्द्रः स नो युवा सखा ॥१॥

यः । आ । अनयत् । परा०वतः । सु०नीती । तुर्वशम् । यदुम् ॥
इन्द्रः । सः । नः । युवा । सखा ॥१॥

अविप्रे चिद्वयो दधदनाशुना चिदर्वता ।
इन्द्रो जेता हितं धनम् ॥२॥
अविप्रे । चित् । वयः । दधत् । अनाशुना । चित् । अर्वता ॥
इन्द्रः । जेता । हितम् । धनम् ॥२॥

महीरस्य प्रणीतयः पूर्वीरुत प्रशस्तयः ।
नास्य क्षीयन्त ऽऊतयः ॥३॥
महीः । अस्य । प्र०नीतयः । पूर्वीः । उत । प्र०शस्तयः ॥
न । अस्य । क्षीयन्ते । ऊतयः ॥३॥

सखायो ब्रह्मवाहसेऽर्चत प्र च गायत ।
स हि नः प्रमतिर्मही ॥४॥
सखायः । ब्रह्म०वाहसे । अर्चत । प्र । च । गायत ॥
सः । हि । नः । प्र०मतिः । मही ॥४॥

त्वमेकस्य वृत्रहन्नविता द्वयोरसि ।
उतेदृशे यथा वयम् ॥५॥ ( २१ )
त्वम् । एकस्य । वृत्र०हन् । अविता । द्वयोः । असि ॥
उत । ईदृशे । यथा । वयम् ॥५॥

नयसीद्वति द्विषः कृणोष्युक्थशंसिनः ।
नृभिः सुवीर ऽउच्यसे ॥६॥

नर्यसि । इत् । ऊँ इति । अति । द्विषः । कृणोषि । उक्थ०शंसिनः ॥
नृ०भिः । सु०वीरः । उच्यसे ॥६॥

**ब्रह्माणं ब्रह्मवाहसं गीर्भिः सखायमृग्मियम् ।**
**गां न दोहसे हुवे ॥७॥**
ब्रह्माणम् । ब्रह्म०वाहसम् । गीःऽभिः । सखायम् । ऋग्मियम् ॥
गाम् । न । दोहसे । हुवे ॥७॥

**यस्य विश्वानि हस्तयोरूचुर्वसूनि नि द्विता ।**
**वीरस्य पृतनाषहः ॥८॥**
यस्य । विश्वानि । हस्तयोः । ऊचुः । वसूनि । नि । द्विता ॥
वीरस्य । पृतना०सहः ॥८॥

**वि दृळ्हानि चिदद्रिवो जनानां शचीपते ।**
**वृह माया ऽअनानत ॥९॥**
वि । दृळ्हानि । चित् । अद्रि०वः । जनानाम् । शची०पते ॥
वृह । मायाः । अनानत ॥९॥

**तमु त्वा सत्य सोमपा ऽइन्द्र वाजानां पते ।**
**अहूमहि श्रवस्यवः ॥१०॥ ( २२ )**
तम् । ऊँ इति । त्वा । सत्य । सोम०पाः । इन्द्र । वाजानाम् । पते ॥
अहूमहि । श्रवस्यवः ॥१०॥

**तमु त्वा यः पुरासिथ यो वा नूनं हिते धने ।**
**हव्यः स श्रुधी हवम् ॥११॥**

तम् । ऊँ इति । त्वा । यः । पुरा । आसिथ । यः । वा । नूनम् । हिते । धनै ॥
हव्यः । सः । श्रुधि । हवम् ॥११॥

धीभिरर्वद्भिरर्वतो वाजाँ ऽइन्द्र श्रवाय्यान् ।
त्वया जेष्म हितं धनम् ॥१२॥
धीभिः । अर्वत्ऽभिः । अर्वतः । वाजान् । इन्द्र । श्रवाय्यान् ॥
त्वया । जेष्म । हितम् । धनम् ॥१२॥

अभूरु वीर गिर्वणो महाँ ऽइन्द्र धनै हिते ।
भरै वितन्तसाय्यः ॥१३॥
अभूः । ऊँ इति । वीर । गिर्वणः । महान् । इन्द्र । धनै । हिते ॥
भरै । वितन्तसाय्यः ॥१३॥

या त ऽऊतिरमित्रहन्मक्षूजवस्तमासति ।
तया नो हिनुही रथम् ॥१४॥
या । ते । ऊतिः । अमित्रऽहन् । मक्षुजवःऽतमा । असति ॥
तया । नः । हिनुहि । रथम् ॥१४॥

स रथैन रथीतमोऽस्माकैनाभियुग्वना ।
जेषि जिष्णो हितं धनम् ॥१५॥ ( २३ )
सः । रथैन । रथिऽतमः । अस्माकैन । अभिऽयुग्वना ॥
जेषि । जिष्णो इति । हितम् । धनम् ॥१५॥

य ऽएक ऽइत्तमु ष्टुहि कृष्टीनां विचर्षणिः ।
पतिर्जज्ञे वृषक्रतुः ॥१६॥

यः । एकः । इत् । तम् । ऊँ इति । स्तुहि । कृष्टीनाम् । वि०चर्षणिः ॥
पतिः । जज्ञे । वृष०क्रतुः ॥१६॥

**यो गृणतामिदासिथापिरूती शिवः सखा ।**
**स त्वं न ऽइन्द्र मृळय ॥१७॥**
यः । गृणताम् । इत् । आसिथ । आपिः । ऊती । शिवः । सखा ॥
सः । त्वम् । नः । इन्द्र । मृळय ॥१७॥

**धिष्व वज्रं गभस्त्यो रक्षोहत्याय वज्रिवः ।**
**सासहीष्ठा ऽअभि स्पृधः ॥१८॥**
धिष्व । वज्रम् । गभस्त्योः । रक्षः२हत्याय । वज्रि०वः ॥
ससहीष्ठाः । अभि । स्पृधः ॥१८॥

**प्रत्नं रयीणां युजं सखायं कीरिचोदनम् ।**
**ब्रह्मवाहस्तमं हुवे ॥१९॥**
प्रत्नम् । रयीणाम् । युजम् । सखायम् । कीरि०चोदनम् ॥
ब्रह्मवाहः२तमम् । हुवे ॥१९॥

**स हि विश्वानि पार्थिवाँ ऽएको वसूनि पत्यते ।**
**गिर्वणस्तमो ऽअध्रिगुः ॥२०॥ ( २४ )**
सः । हि । विश्वानि । पार्थिवा । एकः । वसूनि । पत्यते ॥
गिर्वणः२तमः । अध्रि०गुः ॥२०॥

**स नो नियुद्भिरा पृण कामं वाजेभिरश्विभिः ।**
**गोमद्भिर्गोपते धृषत् ॥२१॥**

सः । नः । नियुत्ऽभिः । आ । पृण । कामम् । वाजेभिः । अश्विऽभिः ॥
गोमत्ऽभिः । गोऽपते । धृषत् ॥२१॥

तद्वो गाय सुते सचा पुरुहूताय सत्वने ।
शं यद्गवे न शाकिने ॥२२॥
तत् । वः । गाय । सुते । सचा । पुरुऽहूताय । सत्वने ॥
शम् । यत् । गवे । न । शाकिने ॥२२॥

न घा वसुर्नि यमते दानं वाजस्य गोमतः ।
यत्सीमुप श्रवद्गिरः ॥२३॥
न । घ । वसुः । नि । यमते । दानम् । वाजस्य । गोऽमतः ॥
यत् । सीम् । उप । श्रवत् । गिरः ॥२३॥

कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहा गमत् ।
शचीभिरप नो वरत् ॥२४॥
कुवित्ऽसस्य । प्र । हि । व्रजम् । गोऽमन्तम् । दस्युऽहा । गमत् ॥
शचीभिः । अप । नः । वरत् ॥२४॥

इमा उ त्वा शतक्रतोऽभि प्र णोनुवुर्गिरः ।
इन्द्र वत्सं न मातरः ॥२५॥ ( २५ )
इमाः । ऊँ इति । त्वा । शतक्रतो इति शतऽक्रतो । अभि । प्र । नोनुवुः । गिरः ॥
इन्द्र । वत्सम् । न । मातरः ॥२५॥

दूणाशं सख्यं तव गौरसि वीर गव्यते ।
अश्वो अश्वायते भव ॥२६॥

दुः२नशर्म् । सख्यम् । तव । गौः । असि । वीर । गव्यते ॥
अश्वः । अश्व॰यते । भव ॥२६॥

**स मन्दस्वा ह्यन्धसो राधसे तन्वा महे ।**
**न स्तोतारं निदे करः ॥२७॥**
सः । मन्दस्व । हि । अन्धसः । राधसे । तन्वा । महे ॥
न । स्तोतारम् । निदे । करः ॥२७॥

**इमा ऽउ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः ।**
**वत्सं गावो न धेनवः ॥२८॥**
इमाः । ॐ इति । त्वा । सुते॰सुते । नक्षन्ते । गिर्वणः । गिरः ॥
वत्सम् । गावः । न । धेनवः ॥२८॥

**पुरूतमं पुरूणां स्तोतृणां विवाचि ।**
**वाजेभिर्वाजयताम् ॥२९॥**
पुरु॰तमम् । पुरूणाम् । स्तोतृणाम् । वि॰वाचि ॥
वाजेभिः । वाज॰यताम् ॥२९॥

**अस्माकमिन्द्र भूतु ते स्तोमो वाहिष्ठो ऽअन्तमः ।**
**अस्मान्राये महे हिनु ॥३०॥**
अस्माकम् । इन्द्र । भूतु । ते । स्तोमः । वाहिष्ठः । अन्तमः ॥
अस्मान् । राये । महे । हिनु ॥३०॥

**अधि बृबुः पणीनां वर्षिष्ठे मूर्द्धन्नस्थात् ।**
**उरुः कक्षो न गाङ्ग्यः ॥३१॥**
अधि । बृबुः । पणीनाम् । वर्षिष्ठे । मूर्द्धन् । अस्थात् ॥
उरुः । कक्षः । न । गाङ्ग्यः ॥३१॥

**यस्य वायोरिव द्रवद्भद्रा रातिः सहस्रिणी ।**
**सद्यो दानाय मंहते ॥३२॥**
यस्य । वायोःऽइव । द्रवत् । भद्रा । रातिः । सहस्रिणी ॥
सद्यः । दानाय । मंहते ॥३२॥

**तत्सु नो विश्वे ऽअर्य ऽआ सदा गृणन्ति कारवः ।**
**बृबुं सहस्रदातमं सूरिं सहस्रसातमम् ॥३३॥ ( २६ )** [ १०८१ ]
तत् । सु । नः । विश्वे । अर्यः । आ । सदा । गृणन्ति । कारवः ॥
बृबुम् । सहस्र०दातमम् । सूरिम् । सहस्र०सातमम् ॥३३॥

## ( ४६ )

**१४ शंयुर्बार्हस्पत्यः । इन्द्रः । प्रगाथः ( = विषमा बृहती, समा सतोबृहती ) ।**

**त्वामिद्धि हवामहे साता वाजस्य कारवः ।**
**त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥१॥**
त्वाम् । इत् । हि । हवामहे । साता । वाजस्य । कारवः ॥
त्वाम् । वृत्रेषु । इन्द्र । सत्०पतिम् । नरः । त्वाम् । काष्ठासु । अर्वतः ॥१॥

**स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो ऽअद्रिवः ।**
**गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥२॥**
सः । त्वम् । नः । चित्र । वज्र०हस्त । धृष्णु०या । महः ।
स्तवानः । अद्रि०वः ॥ गाम् । अश्वम् । रथ्यम् । इन्द्र ।
सम् । किर । सत्रा । वाजम् । न । जिग्युषे ॥२॥

**यः सत्राहा विचर्षणिरिन्द्रं तं हूमहे वयम् ।**
**सहस्रमुष्क तुविनृम्ण सत्पते भवा समत्सु नो वृधे ॥३॥**

यः । सत्रा॰हा । वि॰चर्षणिः । इन्द्रम् । तम् । हूमहे । वयम् ॥
सहस्र॰मुष्क । तुवि॰नृम्ण । सत्॰पते । भव । समत्॰सु । नः । वृधे ॥३॥

**बाधसे जनान्वृषभेव मन्युना घृषौ मीळ्ह ऽऋचीषम ।**
**अस्माकं बोध्यविता महाधने तनूष्वप्सु सूर्ये ॥४॥**
बाधसे । जनान् । वृषभाऽइव । मन्युना । घृषौ । मीळ्हे । ऋचीषम ॥
अस्माकम् । बोधि । अविता । महा॰धने । तनूषु । अप्॰सु । सूर्ये ॥४॥

**इन्द्र ज्येष्ठं न ऽआ भरँ ऽओजिष्ठं पपुरि श्रवः ।**
**येनेमे चित्र वज्रहस्त रोदसी ऽओभे सुशिप्र प्राः ॥५॥ (२७)**
इन्द्र । ज्येष्ठम् । नः । आ । भर । ओजिष्ठम् । पपुरि । श्रवः ॥
येन । इमे इति । चित्र । वज्र॰हस्त । रोदसी इति । आ । उभे इति । सुशिप्र । प्राः ॥५॥

**त्वामुग्रमवसे चर्षणीसहं राजन्देवेषु हूमहे ।**
**विश्वा सु नो विथुरा पिब्दना वसोऽमित्रान्त्सुषहान्कृधि ॥६॥**
त्वाम् । उग्रम् । अवसे । चर्षणि॰सहम् । राजन् । देवेषु । हूमहे ॥
विश्वा । सु । नः । विथुरा । पिब्दना । वसो इति । अमित्रान् । सु॰सहान् । कृधि ॥६॥

**यदिन्द्र नाहुषीष्वाँ ऽओजो नृम्णं च कृष्टिषु ।**
**यद्वा पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ॥७॥**
यत् । इन्द्र । नाहुषीषु । आ । ओजः । नृम्णम् ।
च । कृष्टिषु ॥ यत् । वा । पञ्च । क्षितीनाम् ।
द्युम्नम् । आ । भर । सत्रा । विश्वानि । पौंस्या ॥७॥

**यद्वा तृक्षौ मघवन्द्रुह्यावा जने यत्पूरौ कच्च वृष्ण्यम् ।**
**अस्मभ्यं तद्रिरीहि सं नृषाह्येऽमित्रान्पृत्सु तुर्वणे ॥८॥**

यत् । वा । तुर्क्षौ । मघ॰वन् । द्रुह्यौ । आ । जनै । यत् ।
पूरौ । कत् । च । वृष्ण्यम् ॥ अस्मभ्यम् । तत् । रिरीहि ।
सम् । नृ॰सह्यै । अमित्रान् । पृत्॰सु । तुर्वणे ॥८॥

**इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत् ।**
**छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥९॥**
इन्द्र । त्रि॰धातु । शरणम् । त्रि॰वरूथम् । स्वस्ति॰मत् ॥
छर्दिः । यच्छ । मघवत्॰भ्यः । च । मह्यम् ।
च । यवय । दिद्युम् । एभ्यः ॥९॥

**ये गव्यता मनसा शत्रुमादभुरभिप्रघ्नन्ति धृष्णुया ।**
**अध स्मा नो मघवन्निन्द्र गिर्वणस्तनूपा ऽअन्तमो भव ॥१०॥ ( २८ )**
ये । गव्यता । मनसा । शत्रुम् । आ॰दभुः । अभि॰प्रघ्नन्ति ।
धृष्णु॰या ॥ अध । स्म । नः । मघ॰वन् । इन्द्र ।
गिर्वणः । तनू॰पाः । अन्तमः । भव ॥१०॥

**अध स्मा नो वृधे भवेन्द्र नायमवा युधि ।**
**यदन्तरिक्षे पतयन्ति पर्णिनो दिद्यवस्तिग्ममूर्द्धानः ॥११॥**
अध । स्म । नः । वृधे । भव । इन्द्र । न । अयम् । अव । युधि ॥
यत् । अन्तरिक्षे । पतयन्ति । पर्णिनः । दिद्यवः । तिग्म॰मूर्द्धानः ॥११॥

**यत्र शूरासस्तन्वो वितन्वते प्रिया शर्म पितॄणाम् ।**
**अध स्मा यच्छ तन्वेइ तने च छर्दिरचित्तं यावय द्वेषः ॥१२॥**
यत्र । शूरासः । तन्वः । वि॰तन्वते । प्रिया ।
शर्म । पितॄणाम् ॥ अध । स्म । यच्छ । तन्वे ।
तने । च । छर्दिः । अचित्तम् । यवय । द्वेषः ॥१२॥

यदिन्द्र सर्गे ऽअर्वतश्चोदयासे महाधने ।
असमने ऽअध्वनि वृजिने पथि श्येनाँइव श्रवस्यतः ॥१३॥
यत् । इन्द्र । सर्गे । अर्वतः । चोदयासे । महा०धने ॥
असमने । अध्वनि । वृजिने । पथि । श्येनान्ऽइव । श्रवस्यतः ॥१३॥

सिन्धूँरिव प्रवण ऽआशुया यतो यदि क्लोशमनु ष्वणि ।
आ ये वयो न वर्वृतत्यामिषि गृभीता बाह्वोर्गवि ॥१४॥ (२९) [१०९५]
सिन्धून्ऽइव । प्रवणे । आशु०या । यतः । यदि ।
क्लोशम् । अनु । स्वनि ॥ आ । ये । वयः । न ।
वर्वृतति । आमिषि । गृभीताः । बाह्वोः । गवि ॥१४॥

## ( ४७ )

३१ गर्गो भारद्वाजः । इन्द्रः, १-५ सोमः, २० देव-भूमि-बृहस्पतीन्द्राः, २२-२५ सार्ञ्जयः प्रस्तोकः (दानस्तुतिः) २६-२८ रथः, २९-३० दुंदुभिः, ३१ दुंदुभीन्द्रौ । त्रिष्टुप्, १९ बृहती, २३ अनुष्टुप्, २४ गायत्री, २५ द्विपदात्रिष्टुप्, २७ जगती ।

स्वादुष्किलायं मधुमाँ ऽउतायं तीव्रः किलायं रसवाँ ऽउतायम् ।
उतो न्वस्य पपिवांसमिन्द्रं न कश्चन सहत ऽआहवेषु ॥१॥
स्वादुः । किल । अयम् । मधु०मान् । उत । अयम् । तीव्रः । किल ।
अयम् ॥ रस०वान् । उत । अयम् । उतो इति । नु । अस्य ।
पपि०वांसम् । इन्द्रम् । न । कः । चन । सहते । आ०हवेषु ॥१॥

अयं स्वादुरिह मदिष्ठ ऽआस यस्येन्द्रो वृत्रहत्ये ममाद ।
पुरूणि यश्च्यौत्ना शम्बरस्य वि नवतिं नव च देह्यो३ हन् ॥२॥
अयम् । स्वादुः । इह । मदिष्ठः । आस । यस्य ।
इन्द्रः । वृत्र०हत्ये । ममाद ॥ पुरूणि । यः । च्यौत्ना ।
शम्बरस्य । वि । नवतिम् । नव । च । देह्यः । हन् ॥२॥

**अयं मे पीत उदियर्त्ति वाचमयं मनीषामुशतीमजीगः ।**

**अयं षळुर्वीरमिमीत धीरो न याभ्यो भुवनं कच्चनारे ॥३॥**

अयम् । मे । पीतः । उत् । इयर्त्ति । वाचम् । अयम् । मनीषाम् ।
उशतीम् । अजीगरिति ॥ अयम् । षट् । उर्वीः । अमिमीत ।
धीरः । न । याभ्यः । भुवनम् । कत् । चन । आरे ॥३॥

**अयं स यो वरिमाणं पृथिव्या वर्ष्माणं दिवो अकृणोदयं सः ।**

**अयं पीयूषं तिसृषु प्रवत्सु सोमो दाधारोर्वन्तरिक्षम् ॥४॥**

अयम् । सः । यः । वरिमाणम् । पृथिव्याः । वर्ष्माणम् ।
दिवः । अकृणोत् । अयम् । सः ॥ अयम् । पीयूषम् ।
तिसृषु । प्रवत्ऽसु । सोमः । दाधार । उरु । अन्तरिक्षम् ॥४॥

**अयं विदच्चित्रदृशीकमर्णः शुक्रसद्मनामुषसामनीके ।**

**अयं महान्महता स्कम्भनेनोद्द्यामस्तभ्नाद्वृषभो मरुत्वान् ॥५॥ ( ३० )**

अयम् । विदत् । चित्रऽदृशीकम् । अर्णः । शुक्रऽसद्मनाम् ।
उषसाम् । अनीके ॥ अयम् । महान् । महता । स्कम्भनेन ।
उत् । द्याम् । अस्तभ्नात् । वृषभः । मरुत्वान् ॥५॥

**धृषत्पिब कलशे सोममिन्द्र वृत्रहा शूर समरे वसूनाम् ।**

**माध्यंदिने सवन आ वृषस्व रयिस्थानो रयिमस्मासु धेहि ॥६॥**

धृषत् । पिब । कलशे । सोमम् । इन्द्र । वृत्रऽहा । शूर ।
सम्ऽअरे । वसूनाम् ॥ माध्यन्दिने । सवने । आ ।
वृषस्व । रयिऽस्थानः । रयिम् । अस्मासु । धेहि ॥६॥

**इन्द्र प्र णः पुरएतेव पश्य प्र नो नय प्रतरं वस्यो अच्छ ।**

**भवा सुपारो अतिपारयो नो भवा सुनीतिरुत वामनीतिः ॥७॥**

इन्द्र । प्र । नः । पुरएताऽइव । पश्य । प्र । नः । नय ।
प्र०तरम् । वस्यः । अच्छ ॥ भव । सु०पारः । अति०पारयः ।
नः । भव । सु०नीतिः । उत । वाम०नीतिः ॥७॥

**उरुं नो लोकमनु नेषि विद्वान्त्स्वर्वज्ज्योतिरभयं स्वस्ति ।**
**ऋष्वा त ऽइन्द्र स्थविरस्य बाहू ऽउप स्थेयाम शरणा बृहन्ता ॥८॥**
उरुम् । नः । लोकम् । अनु । नेषि । विद्वान् । स्वः२वत् ।
ज्योतिः । अभयम् । स्वस्ति ॥ ऋष्वा । ते । इन्द्र ।
स्थविरस्य । बाहू इति । उप । स्थेयाम । शरणा । बृहन्ता ॥८॥

**वरिष्ठे न ऽइन्द्र वन्धुरे धा वहिष्ठयोः शतावन्नश्वयोरा ।**
**इषमा वक्षीषां वर्षिष्ठां मा नस्तारीन्मघवन्रायो ऽअर्यः ॥९॥**
वरिष्ठे । नः । इन्द्र । वन्धुरे । धाः । वहिष्ठयोः । शत०वन् ।
अश्वयोः । आ ॥ इषम् । आ । वक्षि । इषाम् । वर्षिष्ठाम् ।
मा । नः । तारीत् । मघ०वन् । रायः । अर्यः ॥९॥

**इन्द्र मृळ मह्यं जीवातुमिच्छ चोदय धियमयसो न धाराम् ।**
**यत्किं चाहं त्वायुरिदं वदामि तज्जुषस्व कृधि मा देववन्तम् ॥१०॥ ( ३१ )**
इन्द्र । मृळ । मह्यम् । जीवातुम् । इच्छ । चोदय । धियम् ।
अयसः । न । धाराम् ॥ यत् । किम् । च । अहम् । त्वा०युः ।
इदम् । वदामि । तत् । जुषस्व । कृधि । मा । देव०वन्तम् ॥१०॥

**त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम् ।**
**ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ॥११॥**
त्रातारम् । इन्द्रम् । अवितारम् । इन्द्रम् । हवे०हवे ।
सु०हवम् । शूरम् । इन्द्रम् ॥ ह्वयामि । शक्रम् । पुरु०हूतम् ।
इन्द्रम् । स्वस्ति । नः । मघ०वा । धातु । इन्द्रः ॥११॥

इन्द्रः सुत्रामा स्ववाँ ऽअवोभिः सुमृळीको भवतु विश्ववेदाः ।
बाधतां द्वेषो ऽअभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥१२॥
इन्द्रः । सुऽत्रामा । स्वऽवान् । अवःऽभिः । सुऽमृळीकः ।
भवतु । विश्वऽवेदाः ॥ बाधताम् । द्वेषः । अभयम् ।
कृणोतु । सुऽवीर्यस्य । पतयः । स्याम ॥१२॥

तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववाँ ऽइन्द्रो ऽअस्मे ऽआराच्चिद्द्वेषः सनुतर्युयोतु ॥१३॥
तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे ।
सौमनसे । स्याम ॥ सः । सुऽत्रामा । स्वऽवान् । इन्द्रः ।
अस्मे इति । आरात् । चित् । द्वेषः । सनुतः । युयोतु ॥१३॥

अव त्वे ऽइन्द्र प्रवतो नोर्मिर्गिरो ब्रह्माणि नियुतो धवन्ते ।
उरू न राधः सवना पुरूण्यपो गा वज्रिन्युवसे समिन्दून् ॥१४॥
अव । त्वे इति । इन्द्र । प्रऽवतः । न । ऊर्मिः । गिरः ।
ब्रह्माणि । निऽयुतः । धवन्ते ॥ उरु । न । राधः । सवना ।
पुरूणि । अपः । गाः । वज्रिन् । युवसे । सम् । इन्दून् ॥१४॥

क ऽईं स्तवत्कः पृणात्को यजाते यदुग्रमिन्मघवा विश्वहावेत् ।
पादाविव प्रहरन्नन्यमन्यं कृणोति पूर्वमपरं शचीभिः ॥१५॥ (३२)
कः । ईम् । स्तवत् । कः । पृणात् । कः । यजाते । यत् । उग्रम् ।
इत् । मघऽवा । विश्वहा । अवेत् ॥ पादौऽइव । प्रऽहरन् ।
अन्यम्ऽअन्यम् । कृणोति । पूर्वम् । अपरम् । शचीभिः ॥१५॥

शृण्वे वीर ऽउग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।
एधमानद्विळुभयस्य राजा चोष्कूयते विश ऽइन्द्रो मनुष्यान् ॥१६॥

शृण्वे । वीरः । उग्रम्०उग्रम् । दम०यन् । अन्यम्०अन्यम् ।
अति०नेनीयमानः ॥ एधमान०द्विट् । उभयस्य । राजा ।
चोष्कूयते । विशः । इन्द्रः । मनुषयान् ॥१६॥

परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो ऽअपरेभिरेति ।
अनानुभूतीरवधून्वानः पूर्वीरिन्द्रः शरदस्तर्तरीति ॥१७॥
परा । पूर्वेषाम् । सख्या । वृणक्ति । वि०तर्तुराणः ।
अपरेभिः । एति ॥ अननु०भूतीः । अव०धून्वानः ।
पूर्वीः । इन्द्रः । शरदः । तर्तरीति ॥१७॥

रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ऽईयते युक्ता ह्यस्य हरयः शता दश ॥१८॥
रूपम्०रूपम् । प्रति०रूपः । बभूव । तत् । अस्य । रूपम् ।
प्रति०चक्षणाय ॥ इन्द्रः । मायाभिः । पुरु०रूपः । ईयते ।
युक्ताः । हि । अस्य । हरयः । शता । दश ॥१८॥

युजानो हरिता रथे भूरि त्वष्टेह राजति ।
को विश्वाहा द्विषतः पक्ष ऽआसत ऽउतासीनेषु सूरिषु ॥१९॥
युजानः । हरिता । रथे । भूरि । त्वष्टा । इह ।
राजति ॥ कः । विश्वाहा । द्विषतः । पक्षः ।
आसते । उत । आसीनेषु । सूरिषु ॥१९॥

अगव्यूति क्षेत्रमागन्म देवा ऽउर्वी सती भूमिरंहूरणाभूत् ।
बृहस्पते प्र चिकित्सा गविष्टावित्था सते जरित्र ऽइन्द्र पन्थाम् ॥२०॥ ( ३३ )
अगव्यूति । क्षेत्रम् । आ । अगन्म । देवाः । उर्वी । सती ।
भूमिः । अंहूरणा । अभूत् ॥ बृहस्पते । प्र । चिकित्स ।
गो०इष्टौ । इत्था । सते । जरित्रे । इन्द्र । पन्थाम् ॥२०॥

**दिवेदिवे सदृशीरन्यमर्द्धं कृष्णा ऽअसेधदप सद्मनो जाः ।**
**अहन्दासा वृषभो वस्नयन्तोदव्रजे वर्चिनं शम्बरं च ॥२१॥**
दिवे०दिवे । स०दृशीः । अन्यम् । अर्द्धम् । कृष्णाः ।
असेधत् । अप । सद्मनः । जाः ॥ अहन् । दासा । वृषभः ।
वस्नयन्ता । उद०व्रजे । वर्चिनम् । शम्बरम् । च ॥२१॥

**प्रस्तोक ऽइन्नु राधसस्त ऽइन्द्र दश कोशयीर्दश वाजिनोऽदात् ।**
**दिवोदासादतिथिग्वस्य राधः शाम्बरं वसु प्रत्यग्रभीष्म ॥२२॥**
प्र०स्तोकः । इत् । नु । राधसः । ते । इन्द्र । दश । कोशयीः ।
दश । वाजिनः । अदात् ॥ दिवः२दासात् । अतिथि०ग्वस्य ।
राधः । शाम्बरम् । वसु । प्रति । अग्रभीष्म ॥२२॥

**दशाश्वान्दश कोशान्दश वस्त्राधियोजना ।**
**दशो हिरण्यपिण्डान्दिवोदासादसानिषम् ॥२३॥**
दश । अश्वान् । दश । कोशान् । दश । वस्त्रा । अधि०योजना ॥
दशो इति । हिरण्य०पिण्डान् । दिवः२दासात् । असानिषम् ॥२३॥

**दश रथान्प्रष्टिमतः शतं गा ऽअथर्वभ्यः ।**
**अश्वथः पायवेऽदात् ॥२४॥**
दश । रथान् । प्रष्टि०मतः । शतम् । गाः । अथर्व०भ्यः ॥
अश्वथः । पायवे । अदात् ॥२४॥

**महि राधो विश्वजन्यं दधानान्भरद्वाजान्त्साञ्जयो ऽअभ्ययष्ट ॥२५॥ ( ३४ )**
महि । राधः । विश्व०जन्यम् । दधानान् ।
भरत्०वाजान् । साञ्जयः । अभि । अयष्ट ॥२५॥

**वनस्पते वीड्वङ्गो हि भूया ऽअस्मत्सखा प्रतरणः सुवीरः ।**
**गोभिः संनद्धो ऽअसि वीळयस्वास्थाता ते जयतु जेत्वानि ॥२६॥**

वनस्पते । वीळु०अङ्गः । हि । भूयाः । अस्मत्०सखा ।
प्र०तरणः । सु०वीरः ॥ गोभिः । सम्०नद्धः । असि ।
वीळयस्व । आ०स्थाता । ते । जयतु । जेत्वानि ॥२६॥

**दिवस्पृथिव्याः पर्योज ऽउद्भृतं वनस्पतिभ्यः पर्याभृतं सहः ।**
**अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रं हविषा रथं यज ॥२७॥**

दिवः । पृथिव्याः । परि । ओजः । उत्०भृतम् । वनस्पति०भ्यः ।
परि । आ०भृतम् । सहः ॥ अपाम् । ओज्मानम् । परि । गोभिः ।
आ०वृतम् । इन्द्रस्य । वज्रम् । हविषा । रथम् । यज ॥२७॥

**इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः ।**
**सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय ॥२८॥**

इन्द्रस्य । वज्रः । मरुताम् । अनीकम् । मित्रस्य । गर्भः ।
वरुणस्य । नाभिः ॥ सः । इमाम् । नः । हव्य०दातिम् ।
जुषाणः । देव । रथ । प्रति । हव्या । गृभाय ॥२८॥

**उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।**
**स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो ऽअप सेध शत्रून् ॥२९॥**

उप । श्वासय । पृथिवीम् । उत । द्याम् । पुरु०त्रा । ते ।
मनुताम् । वि०स्थितम् । जगत् ॥ सः । दुन्दुभे । स०जूः ।
इन्द्रेण । देवैः । दूरात् । दवीयः । अप । सेध । शत्रून् ॥२९॥

**आ क्रन्दय बलमोजो न ऽआ धा निः ष्टनिहि दुरिता बाधमानः ।**
**अप प्रोथ दुन्दुभे दुच्छुना ऽइत ऽइन्द्रस्य मुष्टिरसि वीळयस्व ॥३०॥**

आ । क्रन्दय । बलम् । ओजः । नः । आ । धाः । निः ।
स्तनिहि । दुःऽइता । बाधमानः ॥ अप । प्रोथ । दुन्दुभे ।
दुच्छुनाः । इतः । इन्द्रस्य । मुष्टिः । असि । वीळयस्व ॥३०॥

**आमूरज प्रत्यावर्त्तयेमाः केतुमद्दुन्दुभिर्वावदीति ।**
**समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥३१॥ (३५) [११२६]**
आ । अमूः । अज । प्रति०आवर्त्तय । इमाः । केतु०मत् ।
दुन्दुभिः । वावदीति ॥ सम् । अश्व०पर्णाः । चरन्ति ।
नः । नरः । अस्माकम् । इन्द्र । रथिनः । जयन्तु ॥३१॥

॥ इति चतुर्थाष्टके सप्तमोऽध्यायः ॥ ७ ॥

# सप्तमाध्यायस्य मन्त्रवर्गानुक्रमणी



॥ इति शाङ्खायनसंहितायां चतुर्थाष्टके सप्तमोऽध्यायः ॥

( सप्तमाध्याये वर्गाः ३५, सूक्तानि १९, ऋचः १७६ + २ खिले )

# ॥ चतुर्थाष्टकेऽष्टमोऽध्यायः॥

अथाष्टमोऽध्यायः॥८॥ वर्गाः १-३२ ]   [ षष्ठमण्डले सूक्तानि ४८-६१ ]

## ( ४८ )

२२ शंयुर्बार्हस्पत्यः (तृणपाणिः)। १-१० अग्निः, ११-१५, २०-२१ मरुतः (१३-१५ लिङ्गोक्ता वा), १६-१९ पूषा, २२ द्यावाभूमी वा पृश्निर्वा । प्रगाथः = (१, ३ बृहती, २, ४ सतोबृहती, ५ बृहती, ६ महासतोबृहती, ७ महाबृहती, ८ महासतोबृहती, ९ बृहती, १० सतोबृहती, ११ ककुप्, १२ सतोबृहती) १३ पुरउष्णिक्, १४ बृहती, १५ अतिजगती, १६ ककुप्, १७ सतोबृहती, १८ पुरउष्णिक्, १९-२० बृहती, २१ महाबृहती, यवमधया, २२ अनुष्टुप् ।

यज्ञायज्ञा वो ऽअग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥१॥
यज्ञा०यज्ञा । वः । अग्नये । गिरा०गिरा । च ।
दक्षसे ॥ प्र०प्र । वयम् । अमृतम् । जात०वेदसम् ।
प्रियम् । मित्रम् । न । शंसिषम् ॥१॥

ऊर्जो नपातं स हिनायमस्मयुर्दाशेम हव्यदातये ।
भुवद्वाजेष्वविता भुवद्वृध ऽउत त्राता तनूनाम् ॥२॥
ऊर्जः । नपातम् । सः । हिन । अयम् । अस्म०युः ।
दाशेम । हव्य०दातये ॥ भुवत् । वाजेषु । अविता ।
भुवत् । वृधः । उत । त्राता । तनूनाम् ॥२॥

वृषा ह्यग्ने ऽअजरो महान्विभास्यर्चिषा ।
अजस्रेण शोचिषा शोशुचच्छुचे सुदीतिभिः सु दीदिहि ॥३॥
वृषा । हि । अग्ने । अजरः । महान् ।
वि०भासि । अर्चिषा ॥ अजस्रेण । शोचिषा ।
शोशुचत् । शुचे । सुदीति०भिः । सु । दीदिहि ॥३॥

**महो देवान्यजसि यक्ष्यानुषक्तव क्रत्वोत दंसना ।**

**अर्वाचः सीं कृणुह्यग्नेऽवसे रास्व वाजोत वंस्व ॥४॥**

महः । देवान् । यजसि । यक्षि । आनुषक् । तव ।

क्रत्वा । उत । दंसना ॥ अर्वाचः । सीम् । कृणुहि ।

अग्ने । अवसे । रास्व । वाजा । उत । वंस्व ॥४॥

**यमापो ऽअद्रयो वना गर्भमृतस्य पिप्रति ।**

**सहसा यो मथितो जायते नृभिः पृथिव्या ऽअधि सानवि ॥५॥ ( १ )**

यम् । आपः । अद्रयः । वना । गर्भम् ।

ऋतस्य । पिप्रति ॥ सहसा । यः । मथितः ।

जायते । नृ०भिः । पृथिव्याः । अधि । सानवि ॥५॥

**आ यः पप्रौ भानुना रोदसी ऽउभे धूमेन धावते दिवि ।**

**तिरस्तमो ददृश ऽऊर्म्यास्वा श्यावास्वरुषो वृषा श्यावा ऽअरुषो वृषा ॥६॥**

आ । यः । पप्रौ । भानुना । रोदसी इति । उभे इति । धूमेन ।

धावते । दिवि ॥ तिरः । तमः । ददृशे । ऊर्म्यासु । आ ।

श्यावासु । अरुषः । वृषा । आ । श्यावाः । अरुषः । वृषा ॥६॥

**बृहद्भिरग्ने ऽअर्चिभिः शुक्रेण देव शोचिषा ।**

**भरद्वाजे समिधानो यविष्ठ्य रेवन्नः शुक्र दीदिहि द्युमत्पावक दीदिहि ॥७॥**

बृहत्०भिः । अग्ने । अर्चि०भिः । शुक्रेण । देव । शोचिषा ॥

भरत्०वाजे । सम्०इधानः । यविष्ठ्य । रेवत् । नः । शुक्र ।

दीदिहि । द्यु०मत् । पावक । दीदिहि ॥७॥

**विश्वासां गृहपतिर्विशामसि त्वमग्ने मानुषीणाम् ।**

**शतं पूर्भिर्यविष्ठ पाह्यंहसः समेद्धारं शतं हिमाः स्तोतृभ्यो ये च ददति ॥८॥**

विश्वासाम् । गृह॰पतिः । विशाम् । असि । त्वम् । अग्ने ।
मानुषीणाम् ॥ शतम् । पूःऽभिः । यविष्ठ । पाहि । अंहसः ।
सम्॰एद्धारम् । शतम् । हिमाः । स्तोतृ॰भ्यः । ये । च । ददति ॥८॥

**त्वं नश्चित्र ऽऊत्या वसो राधांसि चोदय ।**
**अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥९॥**
त्वम् । नः । चित्रः । ऊत्या । वसो इति । राधांसि ।
चोदय ॥ अस्य । रायः । त्वम् । अग्ने । रथीः ।
असि । विदाः । गाधम् । तुचे । तु । नः ॥९॥

**पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।**
**अग्ने हेळांसि दैव्या युयोधि नोऽदेवानि ह्वरांसि च ॥१०॥ (२)**
पर्षि । तोकम् । तनयम् । पर्तृ॰भिः । त्वम् ।
अदब्धैः । अप्रयुत्व॰भिः ॥ अग्ने । हेळांसि ।
दैव्या । युयोधि । नः । अदेवानि । ह्वरांसि । च ॥१०॥

**आ सखायः सबर्दुघां धेनुमजध्वमुप नव्यसा वचः ।**
**सृजध्वमनपस्फुराम् ॥११॥**
आ । सखायः । सबःऽदुघाम् । धेनुम् । अजध्वम् । उप । नव्यसा । वचः ॥
सृजध्वम् । अनप॰स्फुराम् ॥११॥

**या शर्धाय मारुताय स्वभानवे श्रवोऽमृत्यु धुक्षत ।**
**या मृळीके मरुतां तुराणां या सुम्नैरेवयावरी ॥१२॥**
या । शर्धाय । मारुताय । स्व॰भानवे । श्रवः ।
अमृत्यु । धुक्षत ॥ या । मृळीके । मरुताम् ।
तुराणाम् । या । सुम्नैः । एव॰यावरी ॥१२॥

भरद्वाजायाव धुक्षत द्विता ।
धेनुं च विश्वदोहसमिषं च विश्वभोजसम् ॥१३॥
भरत्०वाजाय । अव । धुक्षत । द्विता ॥
धेनुम् । च । विश्व०दोहसम् । इषम् । च । विश्व०भोजसम् ॥१३॥

तं व ऽइन्द्रं न सुक्रतुं वरुणमिव मायिनम् ।
अर्यमणं न मन्द्रं सृप्रभोजसं विष्णुं न स्तुष ऽआदिशे ॥१४॥
तम् । वः । इन्द्रम् । न । सु०क्रतुम् । वरुणम्ऽइव । मायिनम् ॥
अर्यमणम् । न । मन्द्रम् । सृप्र०भोजसम् । विष्णुम् । न । स्तुषे । आ०दिशे ॥१४॥

त्वेषं शर्धो न मारुतं तुविष्वण्यनर्वाणं पूषणं सं यथा शता ।
सं सहस्रा कारिषच्चर्षणिभ्य ऽआँ ऽआविर्गूळ्हा वसू करत्सुवेदा नो वसू करत् ॥१५॥
त्वेषम् । शर्धः । न । मारुतम् । तुवि०स्वनि । अनर्वाणम् । पूषणम् ।
सम् । यथा । शता ॥ सम् । सहस्रा । कारिषत् । चर्षणि०भ्यः । आ ।
आविः । गूळ्हा । वसु । करत् । सु०वेदा । नः । वसु । करत् ॥१५॥

आ मा पूषन्नुप द्रव शंसिषं नु ते ऽअपिकर्ण ऽआघृणे ।
अघा ऽअर्यो ऽअरातयः ॥१६॥ ( ३ )
आ । मा । पूषन् । उप । द्रव । शंसिषम् । नु । ते ।
अपि०कर्णे । आघृणे ॥ अघाः । अर्यः । अरातयः ॥१६॥

मा काकम्बीरमुद्वृहो वनस्पतिमशस्तीर्वि हि नीनशः ।
मोत सूरो ऽअह ऽएवा चन ग्रीवा ऽआदधते वेः ॥१७॥
मा । काकम्बीरम् । उत् । वृहः । वनस्पतिम् ।
अशस्तीः । वि । हि । नीनशः ॥ मा । उत । सूरः ।
अहरिति । एव । चन । ग्रीवा । आ०दधते । वेः ॥१७॥

**दृतैरिव तेऽवृकमस्तु सख्यम् ।**
**अच्छिद्रस्य दधन्वतः सुपूर्णस्य दधन्वतः ॥१८॥**
दृतेःऽइव । ते । अवृकम् । अस्तु । सख्यम् ॥
अच्छिद्रस्य । दधन्ऽवतः । सुऽपूर्णस्य । दधन्ऽवतः ॥१८॥

**परो हि मर्त्यैरसि समो देवैरुत श्रिया ।**
**अभि ख्यः पूषन्पृतनासु नस्त्वमवा नूनं यथा पुरा ॥१९॥**
परः । हि । मर्त्यैः । असि । समः । देवैः ।
उत । श्रिया ॥ अभि । ख्यः । पूषन् । पृतनासु ।
नः । त्वम् । अव । नूनम् । यथा । पुरा ॥१९॥

**वामी वामस्य धूतयः प्रणीतिरस्तु सूनृता ।**
**देवस्य वा मरुतो मर्त्यस्य वेजानस्य प्रयज्यवः ॥२०॥**
वामी । वामस्य । धूतयः । प्रऽनीतिः । अस्तु । सूनृता ॥
देवस्य । वा । मरुतः । मर्त्यस्य । वेजानस्य । प्रऽयज्यवः ॥२०॥

**सद्यश्चिद्यस्य चर्कृतिः परि द्यां देवो नैति सूर्यः ।**
**त्वेषं शवो दधिरे नाम यज्ञियं मरुतो वृत्रहं शवो ज्येष्ठं वृत्रहं शवः ॥२१॥**
सद्यः । चित् । यस्य । चर्कृतिः । परि । द्याम् । देवः ।
न । एति । सूर्यः ॥ त्वेषम् । शवः । दधिरे । नाम । यज्ञियम् ।
मरुतः । वृत्रऽहम् । शवः । ज्येष्ठम् । वृत्रऽहम् । शवः ॥२१॥

**सकृद्ध द्यौरजायत सकृद्भूमिरजायत ।**
**पृश्न्या दुग्धं सकृत्पयस्तदन्यो नानु जायते ॥२२॥ (४) [ ११४८ ]**
सकृत् । ह । द्यौः । अजायत । सकृत् । भूमिः । अजायत ॥
पृश्न्याः । दुग्धम् । सकृत् । पयः । तत् । अन्यः । न । अनु । जायते ॥२२॥

# ( ४९ )

१५ ऋजिश्वा भारद्वाजः । विश्वे देवाः । त्रिष्टुप्, १५ शक्वरी ।

**स्तुषे जनं सुव्रतं नव्यसीभिर्गीर्भिर्मित्रावरुणा सुम्नयन्ता ।**

**त ऽआ गमन्तु त ऽइह श्रुवन्तु सुक्षत्रासो वरुणो मित्रो ऽअग्निः ॥१॥**

स्तुषे । जनम् । सु०व्रतम् । नव्यसीभिः । गीःऽभिः ।

मित्रावरुणा । सुम्न०यन्ता ॥ ते । आ । गमन्तु । ते ।

इह । श्रुवन्तु । सु०क्षत्रासः । वरुणः । मित्रः । अग्निः ॥१॥

**विशोविश ऽईड्यमध्वरेष्वदृप्तक्रतुमरतिं युवत्योः ।**

**दिवः शिशुं सहसः सूनुमग्निं यज्ञस्य केतुमरुषं यजध्यै ॥२॥**

विशःऽविशः । ईड्यम् । अध्वरेषु । अदृप्त०क्रतुम् ।

अरतिम् । युवत्योः ॥ दिवः । शिशुम् । सहसः ।

सूनुम् । अग्निम् । यज्ञस्य । केतुम् । अरुषम् । यजध्यै ॥२॥

**अरुषस्य दुहितरा विरूपे स्तृभिरन्या पिपिशे सूरो ऽअन्या ।**

**मिथस्तुरा विचरन्ती पावके मन्म श्रुतं नक्षत ऽऋच्यमाने ॥३॥**

अरुषस्य । दुहितरा । विरूपे इति वि०रूपे । स्तृ०भिः । अन्या ।

पिपिशे । सूरः । अन्या ॥ मिथःऽतुरा । विचरन्ती इति वि०चरन्ती ।

पावके इति । मन्म । श्रुतम् । नक्षतः । ऋच्यमाने इति ॥३॥

**प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारं रथप्राम् ।**

**द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥४॥**

प्र । वायुम् । अच्छ । बृहती । मनीषा । बृहत्०रयिम् ।

विश्व०वारम् । रथ०प्राम् ॥ द्युतत्०यामा । नि०युतः । पत्यमानः ।

कविः । कविम् । इयक्षसि । प्रयज्यो इति प्र०यज्यो ॥४॥

स मे वपुश्छदयदश्विनोर्यो रथो विरुक्मान्मनसा युजानः ।
येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥५॥ (५)
सः । मे । वपुः । छदयत् । अश्विनोः । यः । रथः ।
विरुक्मान् । मनसा । युजानः ॥ येन । नरा । नासत्या ।
इषयध्यै । वर्तिः । याथः । तनयाय । त्मने । च ॥५॥

पर्जन्यवाता वृषभा पृथिव्याः पुरीषाणि जिन्वतमप्यानि ।
सत्यश्रुतः कवयो यस्य गीर्भिर्जगतः स्थातर्जगदा कृणुध्वम् ॥६॥
पर्जन्यवाता । वृषभा । पृथिव्याः । पुरीषाणि ।
जिन्वतम् । अप्यानि ॥ सत्य०श्रुतः । कवयः । यस्य ।
गीः२भिः । जगतः । स्थातः । जगत् । आ । कृणुध्वम् ॥६॥

पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।
ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसत् ॥७॥
पावीरवी । कन्या । चित्र०आयुः । सरस्वती । वीर०पत्नी ।
धियम् । धात् ॥ ग्नाभिः । अच्छिद्रम् । शरणम् ।
स०जोषाः । दुः२आधर्षम् । गृणते । शर्म । यंसत् ॥७॥

पथस्पथः परिपतिं वचस्या कामेन कृतो ऽअभ्यानळर्कम् ।
स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा ॥८॥
पथः२पथः । परि०पतिम् । वचस्या । कामेन । कृतः ।
अभि । आनट् । अर्कम् ॥ सः । नः । रासत् । शुरुधः ।
चन्द्र०अग्राः । धियम्०धियम् । सीसधाति । प्र । पूषा ॥८॥

प्रथमभाजं यशसं वयोधां सुपाणिं देवं सुगभस्तिमृभ्वम् ।
होता यक्षद्यजतं पस्त्यानामग्निस्त्वष्टारं सुहवं विभावा ॥९॥

प्रथम॰भाजम् । यशसम् । वयः॰धाम् । सु॰पाणिम् । देवम् ।
सु॰गभस्तिम् । ऋभ्वम् ॥ होता । यक्षत् । यजतम् ।
पस्त्यानाम् । अग्निः । त्वष्टारम् । सु॰हवम् । विभा॰वा ॥९॥

भुवनस्य पितरं गीर्भिराभी रुद्रं दिवा वर्द्धया रुद्रमक्तौ ।
बृहन्तमृष्वमजरं सुषुम्नमृधग्घुवेम कविनेषितासः ॥१०॥ (६)
भुवनस्य । पितरम् । गीः॰भिः । आभिः । रुद्रम् । दिवा ।
वर्द्धय । रुद्रम् । अक्तौ ॥ बृहन्तम् । ऋष्वम् । अजरम् ।
सु॰सुम्नम् । ऋधक् । हुवेम । कविना । इषितासः ॥१०॥

आ युवानः कवयो यज्ञियासो मरुतो गन्त गृणतो वरस्याम् ।
अचित्रं चिद्धि जिन्वथा वृधन्त ऽइत्था नक्षन्तो नरो ऽअङ्गिरस्वत् ॥११॥
आ । युवानः । कवयः । यज्ञियासः । मरुतः । गन्त ।
गृणतः । वरस्याम् ॥ अचित्रम् । चित् । हि । जिन्वथ ।
वृधन्तः । इत्था । नक्षन्तः । नरः । अङ्गिरस्वत् ॥११॥

प्र वीराय प्र तवसे तुरायाजा यूथेव पशुरक्षिरस्तम् ।
स पिस्पृशति तन्वि श्रुतस्य स्तृभिर्न नाकं वचनस्य विपः ॥१२॥
प्र । वीराय । प्र । तवसे । तुराय । अज । यूथाऽइव ।
पशु॰रक्षिः । अस्तम् ॥ सः । पिस्पृशति । तन्वि ।
श्रुतस्य । स्तृ॰भिः । न । नाकम् । वचनस्य । विपः ॥१२॥

यो रजांसि विममे पार्थिवानि त्रिश्चिद्विष्णुर्मनवे बाधिताय ।
तस्य ते शर्मन्नुपदद्यमाने राया मदेम तन्वाइ तना च ॥१३॥
यः । रजांसि । वि॰ममे । पार्थिवानि । त्रिः । चित् ।
विष्णुः । मनवे । बाधिताय ॥ तस्य । ते । शर्मन् ।
उप॰दद्यमाने । राया । मदेम । तन्वा । तना । च ॥१३॥

**तन्नोऽहिर्बुध्न्यो ऽअद्भिरर्कैस्तत्पर्वतस्तत्सविता चनो धात् ।**
**तदोषधीभिरभि रातिषाचो भगः पुरंधिर्जिन्वतु प्र राये ॥१४॥**
तत् । नः । अहिः । बुध्न्यः । अत्०भिः । अर्कैः । तत् । पर्वतः ।
तत् । सविता । चनः । धात् ॥ तत् । ओषधीभिः । अभि ।
राति०साचः । भगः । पुरम्०धिः । जिन्वतु । प्र । राये ॥१४॥

**नु नो रयिं रथ्यं चर्षणिप्रां पुरुवीरं मह ऽऋतस्य गोपाम् ।**
**क्षयं दाताजरं येन जनान्त्स्पृधो ऽअदेवीरभि च क्रमाम विशऽआदेवीरभ्यश्नवाम ॥१५॥(७)[११६३]**
नु । नः । रयिम् । रथ्यम् । चर्षणि०प्राम् । पुरु०वीरम् । महः । ऋतस्य ।
गोपाम् ॥ क्षयम् । दात । अजरम् । येन । जनान् । स्पृधः । अदेवीः ।
अभि । च । क्रमाम । विशः । आ०देवीः । अभि । अश्नवाम ॥१५॥

## (५०) [ अथ पञ्चमोऽनुवाकः॥५॥ सू. ५०-६१

१५ ऋजिश्वा भारद्वाजः । विश्वे देवाः । त्रिष्टुप् ।

**हुवे वो देवीमदितिं नमोभिर्मृळीकाय वरुणं मित्रमग्निम् ।**
**अभिक्षदामर्यमणं सुशेवं त्रातॄन्देवान्त्सवितारं भगं च ॥१॥**
हुवे । वः । देवीम् । अदितिम् । नमःऽभिः । मृळीकाय ।
वरुणम् । मित्रम् । अग्निम् ॥ अभि०क्षदाम् । अर्यमणम् ।
सु०शेवम् । त्रातॄन् । देवान् । सवितारम् । भगम् । च ॥१॥

**सुज्योतिषः सूर्य दक्षपितॄननागास्त्वे सुमहो वीहि देवान् ।**
**द्विजन्मानो य ऽऋतसापः सत्याः स्वर्वन्तो यजता ऽअग्निजिह्वाः ॥२॥**
सु०ज्योतिषः । सूर्य । दक्ष०पितॄन् । अनागाःऽत्वे । सु०महः ।
वीहि । देवान् ॥ द्वि०जन्मानः । ये । ऋत०सापः । सत्याः ।
स्वःऽवन्तः । यजताः । अग्नि०जिह्वाः ॥२॥

उत द्यावापृथिवी क्षत्रमुरु बृहद्रोदसी शरणं सुषुम्ने ।
महस्करथो वरिवो यथा नोऽस्मे क्षयाय धिषणे ऽअनेहः ॥३॥
उत । द्यावापृथिवी इति । क्षत्रम् । उरु । बृहत् । रोदसी इति ।
शरणम् । सुसुम्ने इति सु०सुम्ने ॥ महः । करथः । वरिवः ।
यथा । नः । अस्मे इति । क्षयाय । धिषणे इति । अनेहः ॥३॥

आ नो रुद्रस्य सूनवो नमन्तामद्या हूतासो वसवोऽधृष्टाः ।
यदीमर्भे महति वा हितासो बाधे मरुतो ऽअह्वाम देवान् ॥४॥
आ । नः । रुद्रस्य । सूनवः । नमन्ताम् । अद्य । हूतासः ।
वसवः । अधृष्टाः ॥ यत् । ईम् । अर्भे । महति । वा ।
हितासः । बाधे । मरुतः । अह्वाम । देवान् ॥४॥

मिम्यक्ष येषु रोदसी नु देवी सिषक्ति पूषा ऽअभ्यर्धयज्वा ।
श्रुत्वा हवं मरुतो यद्ध याथ भूमा रेजन्ते ऽअध्वनि प्रविक्ते ॥५॥ (८)
मिम्यक्ष । येषु । रोदसी । नु । देवी । सिसक्ति । पूषा ।
अभ्यर्ध०यज्वा ॥ श्रुत्वा । हवम् । मरुतः । यत् ।
ह । याथ । भूम । रेजन्ते । अध्वनि । प्र०विक्ते ॥५॥

अभि त्यं वीरं गिर्वणसमर्चेन्द्रं ब्रह्मणा जरितर्नवेन ।
श्रवदिद्धवमुप च स्तवानो रासद्वाजाँ ऽउप महो गृणानः ॥६॥
अभि । त्यम् । वीरम् । गिर्वणसम् । अर्च । इन्द्रम् । ब्रह्मणा ।
जरितः । नवेन ॥ श्रवत् । इत् । हवम् । उप । च ।
स्तवानः । रासत् । वाजान् । उप । महः । गृणानः ॥६॥

ओमानमापो मानुषीरमृक्तं धात तोकाय तनयाय शं योः ।
यूयं हि ष्ठा भिषजो मातृतमा विश्वस्य स्थातुर्जगतो जनित्रीः ॥७॥

ओमानम् । आपः । मानुषीः । अमृक्तम् । धात । तोकाय ।
तनयाय । शम् । योः ॥ यूयम् । हि । स्थ । भिषजः ।
मातृ०तमाः । विश्वस्य । स्थातुः । जगतः । जनित्रीः ॥७॥

**आ नो देवः सविता त्रायमाणो हिरण्यपाणिर्यजतो जगम्यात् ।**
**यो दत्रवाँ ऽउषसो न प्रतीकं व्यूर्णुते दाशुषे वार्याणि ॥८॥**
आ । नः । देवः । सविता । त्रायमाणः । हिरण्य०पाणिः ।
यजतः । जगम्यात् ॥ यः । दत्र०वान् । उषसः । न ।
प्रतीकम् । वि०ऊर्णुते । दाशुषे । वार्याणि ॥८॥

**उत त्वं सूनो सहसो नो ऽअद्या देवाँ ऽअस्मिन्नध्वरे ववृत्याः ।**
**स्यामहं ते सदमिद्रातौ तव स्यामग्नेऽवसा सुवीरः ॥९॥**
उत । त्वम् । सूनो इति । सहसः । नः । अद्य । देवान् ।
अस्मिन् । अध्वरे । ववृत्याः ॥ स्याम् । अहम् । ते । सदम् ।
इत् । रातौ । तव । स्याम् । अग्ने । अवसा । सु०वीरः ॥९॥

**उत त्या मे हवमा जग्म्यातं नासत्या धीभिर्युवमङ्ग विप्रा ।**
**अत्रिं न महस्तमसोऽमुमुक्तं तूर्वतं नरा दुरितादभीके ॥१०॥ (९)**
उत । त्या । मे । हवम् । आ । जग्म्यातम् । नासत्या । धीभिः ।
युवम् । अङ्ग । विप्रा ॥ अत्रिम् । न । महः । तमसः ।
अमुमुक्तम् । तूर्वतम् । नरा । दुः०इतात् । अभीके ॥१०॥

**ते नो रायो द्युमतो वाजवतो दातारो भूत नृवतः पुरुक्षोः ।**
**दशस्यन्तो दिव्याः पार्थिवासो गोजाता ऽअप्या मृळता च देवाः ॥११॥**
ते । नः । रायः । द्यु०मतः । वाज०वतः । दातारः । भूत ।
नृ०वतः । पुरु०क्षोः ॥ दशस्यन्तः । दिव्याः । पार्थिवासः ।
गो०जाताः । अप्याः । मृळत । च । देवाः ॥११॥

**ते नो रुद्रः सरस्वती सजोषा मीळ्हुष्मन्तो विष्णुर्मृळन्तु वायुः ।**
**ऋभुक्षा वाजो दैव्यो विधाता पर्जन्यावाता पिप्यतामिषं नः ॥१२॥**

ते । नः । रुद्रः । सरस्वती । स०जोषाः । मीळ्हुष्मन्तः ।
विष्णुः । मृळन्तु । वायुः ॥ ऋभुक्षाः । वाजः । दैव्यः ।
वि०धाता । पर्जन्यावाता । पिप्यताम् । इषम् । नः ॥१२॥

**उत स्य देवः सविता भगो नोऽपां नपादवतु दानु पप्रिः ।**
**त्वष्टा देवेभिर्जनिभिः सजोषा द्यौर्देवेभिः पृथिवी समुद्रैः ॥१३॥**

उत । स्यः । देवः । सविता । भगः । नः । अपाम् । नपात् ।
अवतु । दानु । पप्रिः ॥ त्वष्टा । देवेभिः । जनि०भिः ।
स०जोषाः । द्यौः । देवेभिः । पृथिवी । समुद्रैः ॥१३॥

**उत नोऽहिर्बुध्न्यः शृणोत्वज ऽएकपात्पृथिवी समुद्रः ।**
**विश्वे देवा ऽऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता ऽअवन्तु ॥१४॥**

उत । नः । अहिः । बुध्न्यः । शृणोतु । अजः । एक०पात् ।
पृथिवी । समुद्रः ॥ विश्वे । देवाः । ऋत०वृधः । हुवानाः ।
स्तुताः । मन्त्राः । कवि०शस्ताः । अवन्तु ॥१४॥

**एवा नपातो मम तस्य धीभिर्भरद्वाजा ऽअभ्यर्चन्त्यर्कैः ।**
**ग्ना हुतासो वसवोऽधृष्टा विश्वे स्तुतासो भूता यजत्राः ॥१५॥ ( १० ) [ ११७८ ]**

एव । नपातः । मम । तस्य । धीभिः । भरत्०वाजाः ।
अभि । अर्चन्ति । अर्कैः ॥ ग्नाः । हुतासः । वसवः ।
अधृष्टाः । विश्वे । स्तुतासः । भूत । यजत्राः ॥१५॥

# ( ५१ )

१६ ऋजिश्वा भारद्वाजः । विश्वेदेवाः । त्रिष्टुप्, १३-१५ उष्णिक्, १६ अनुष्टुप् ।

**उदु त्यच्चक्षुर्महि मित्रयोरॉं ऽएति प्रियं वरुणयोरदब्धम् ।**
**ऋतस्य शुचि दर्शतमनीकं रुक्मो न दिव ऽउदिता व्यद्यौत् ॥१॥**
उत् । ऊँ इति । त्यत् । चक्षुः । महि । मित्रयोः । आ । एति ।
प्रियम् । वरुणयोः । अदब्धम् ॥ ऋतस्य । शुचि । दर्शतम् ।
अनीकम् । रुक्मः । न । दिवः । उत्ऽइता । वि । अद्यौत् ॥१॥

**वेद यस्त्रीणि विदथान्येषां देवानां जन्म सनुतरा च विप्रः ।**
**ऋजु मर्त्तेषु वृजिना च पश्यन्नभि चष्टे सूरो ऽअर्य ऽएवान् ॥२॥**
वेद । यः । त्रीणि । विदथानि । एषाम् । देवानाम् । जन्म ।
सनुतः । आ । च । विप्रः ॥ ऋजु । मर्त्तेषु । वृजिना ।
च । पश्यन् । अभि । चष्टे । सूरः । अर्यः । एवान् ॥२॥

**स्तुष ऽउ वो मह ऽऋतस्य गोपानदितिं मित्रं वरुणं सुजातान् ।**
**अर्यमणं भगमदब्धधीतीनच्छा वोचे सधन्यः पावकान् ॥३॥**
स्तुषे । ऊँ इति । वः । महः । ऋतस्य । गोपान् । अदितिम् ।
मित्रम् । वरुणम् । सुऽजातान् ॥ अर्यमणम् । भगम् ।
अदब्धऽधीतीन् । अच्छ । वोचे । सऽधन्यः । पावकान् ॥३॥

**रिशादसः सत्पतीँरदब्धान्महो राज्ञः सुवसनस्य दातॄन् ।**
**यूनः सुक्षत्रान्क्षयतो दिवो नॄनादित्यान्याम्यदितिं दुवोयु ॥४॥**
रिशादसः । सत्ऽपतीन् । अदब्धान् । महः । राज्ञः ।
सुऽवसनस्य । दातॄन् ॥ यूनः । सुऽक्षत्रान् । क्षयतः ।
दिवः । नॄन् । आदित्यान् । यामि । अदितिम् । दुवःऽयु ॥४॥

**द्यौ३ष्पितः पृथिवि मातरध्रुगग्ने भ्रातर्वसवो मृळता नः ।**
**विश्वे ऽआदित्या ऽअदिते सजोषा ऽअस्मभ्यं शर्म बहुलं वि यन्त ॥५॥ ( ११ )**
द्यौः । पितरिति । पृथिवि । मातः । अध्रुक् । अग्ने । भ्रातः ।
वसवः । मृळत । नः ॥ विश्वे । आदित्याः । अदिते ।
स०जोषाः । अस्मभ्यम् । शर्म । बहुलम् । वि । यन्त ॥५॥

**मा नो वृकाय वृक्यै समस्मा ऽअघायते रीरधता यजत्राः ।**
**यूयं हि ष्ठा रथ्यो नस्तनूनां यूयं दक्षस्य वचसो बभूव ॥६॥**
मा । नः । वृकाय । वृक्यै । समस्मै । अघ०यते ।
रीरधत । यजत्राः ॥ यूयम् । हि । स्थ । रथ्यः । नः ।
तनूनाम् । यूयम् । दक्षस्य । वचसः । बभूव ॥६॥

**मा व ऽएनो ऽअन्यकृतं भुजेम मा तत्कर्म वसवो यच्चयध्वे ।**
**विश्वस्य हि क्षयथ विश्वदेवाः स्वयं रिपुस्तन्वं रीरिषीष्ट ॥७॥**
मा । वः । एनः । अन्य०कृतम् । भुजेम । मा । तत् । कर्म ।
वसवः । यत् । चयध्वे ॥ विश्वस्य । हि । क्षयथ ।
विश्व०देवाः । स्वयम् । रिपुः । तन्वम् । रिरिषीष्ट ॥७॥

**नम ऽइदुग्रं नम ऽआ विवासे नमो दाधार पृथिवीमुत द्याम् ।**
**नमो देवेभ्यो नम ऽईश ऽएषां कृतं चिदेनो नमसा विवासे ॥८॥**
नमः । इत् । उग्रम् । नमः । आ । विवासे । नमः । दाधार ।
पृथिवीम् । उत । द्याम् ॥ नमः । देवेभ्यः । नमः । ईशे ।
एषाम् । कृतम् । चित् । एनः । नमसा । आ । विवासे ॥८॥

**ऋतस्य वो रथ्यः पूतदक्षानृतस्य पस्त्यसदो ऽअदब्धान् ।**
**ताँ ऽआ नमोभिरुरुचक्षसो नृन्विश्वान्व ऽआ नमे महो यजत्राः ॥९॥**

ऋतस्य । वः । रथ्यः । पूत॰दक्षान् । ऋतस्य । पस्त्य॰सदः ।
अदब्धान् ॥ तान् । आ । नमः॰भिः । उरु॰चक्षसः । नृन् ।
विश्वान् । वः । आ । नमे । महः । यजत्राः ॥९॥

**ते हि श्रेष्ठवर्चसस्त ऽउ नस्तिरो विश्वानि दुरिता नयन्ति ।**
**सुक्षत्रासो वरुणो मित्रो ऽअग्निर्ऋतधीतयो वक्मराजसत्याः ॥१०॥ (१२)**
ते । हि । श्रेष्ठ॰वर्चसः । ते । ऊँ इति । नः । तिरः । विश्वानि ।
दुः॰इता । नयन्ति ॥ सु॰क्षत्रासः । वरुणः । मित्रः ।
अग्निः । ऋत॰धीतयः । वक्मराज॰सत्याः ॥१०॥

**ते न ऽइन्द्रः पृथिवी क्षाम वर्द्धन्पूषा भगो ऽअदितिः पञ्च जनाः ।**
**सुशर्माणः स्ववसः सुनीथा भवन्तु नः सुत्रात्रासः सुगोपाः ॥११॥**
ते । नः । इन्द्रः । पृथिवी । क्षाम । वर्द्धन् । पूषा । भगः ।
अदितिः । पञ्च । जनाः ॥ सु॰शर्माणः । सु॰अवसः ।
सु॰नीथाः । भवन्तु । नः । सु॰त्रात्रासः । सु॰गोपाः ॥११॥

**नू सद्मानं दिव्यं नंशि देवा भारद्वाजः सुमतिं याति होता ।**
**आसानेभिर्यजमानो मियेधैर्देवानां जन्म वसूयुर्ववन्द ॥१२॥**
नु । सद्मानम् । दिव्यम् । नंशि । देवाः । भारत्॰वाजः ।
सु॰मतिम् । याति । होता ॥ आसानेभिः । यजमानः ।
मियेधैः । देवानाम् । जन्म । वसु॰युः । ववन्द ॥१२॥

**अप त्यं वृजिनं रिपुं स्तेनमग्ने दुराध्यम् ।**
**दविष्ठमस्य सत्पते कृधी सुगम् ॥१३॥**
अप । त्यम् । वृजिनम् । रिपुम् । स्तेनम् । अग्ने । दुः॰आध्यम् ॥
दविष्ठम् । अस्य । सत्॰पते । कृधि । सु॰गम् ॥१३॥

ग्रावाणः सोम नो हि कं सखित्वनाय वावशुः ।
जही न्यत्रिणं पणिं वृको हि षः ॥१४॥
ग्रावाणः । सोम । नः । हि । कम् । सखि॰त्वनाय । वावशुः ॥
जहि । नि । अत्रिणम् । पणिम् । वृकः । हि । सः ॥१४॥

यूयं हि ष्ठा सुदानव ऽइन्द्रज्येष्ठा ऽअभिद्यवः ।
कर्त्ता नो ऽअध्वन्ना सुगं गोपा ऽअमा ॥१५॥
यूयम् । हि । स्थ । सु॰दानवः । इन्द्र॰ज्येष्ठाः । अभि॰द्यवः ॥
कर्त्त । नः । अध्वन् । आ । सु॰गम् । गोपाः । अमा ॥१५॥

अपि पन्थामगन्महि स्वस्तिगामनेहसम् ।
येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥१६॥ (१३) [ ११९४ ]
अपि । पन्थाम् । अगन्महि । स्वस्ति॰गाम् । अनेहसम् ॥
येन । विश्वाः । परि । द्विषः । वृणक्ति । विन्दते । वसु ॥१६॥

## ( ५२ )

१७ ऋजिश्वा भारद्वाजः । विश्वेदेवाः । त्रिष्टुप्, ७-१२ गायत्री, १४ जगती ।

न तद्दिवा न पृथिव्यानु मन्ये न यज्ञेन नोत शमीभिराभिः ।
उब्जन्तु तं सुभ्व१ः पर्वतासो नि हीयतामतियाजस्य यष्टा ॥१॥
न । तत् । दिवा । न । पृथिव्या । अनु । मन्ये । न । यज्ञेन ।
न । उत । शमीभिः ॥ आभिः । उब्जन्तु । तम् । सु॰भ्वः ।
पर्वतासः । नि । हीयताम् । अति॰याजस्य । यष्टा ॥१॥

अति वा यो मरुतो मन्यते नो ब्रह्म वा यः क्रियमाणं निनित्सात् ।
तपूंषि तस्मै वृजिनानि सन्तु ब्रह्मद्विषमभि तं शोचतु द्यौः ॥२॥

अति । वा । यः । मरुतः । मन्यते । नः । ब्रह्म । वा । यः ।
क्रियमाणम् । निनित्सात् ॥ तपूंषि । तस्मै । वृजिनानि ।
सन्तु । ब्रह्म०द्विषम् । अभि । तम् । शोचतु । द्यौः ॥२॥

**किमङ्ग त्वा ब्रह्मणः सोम गोपां किमङ्ग त्वाहुरभिशस्तिपां नः ।**
**किमङ्ग नः पश्यसि निद्यमानान्ब्रह्मद्विषे तपुषिं हेतिमस्य ॥३॥**
किम् । अङ्ग । त्वा । ब्रह्मणः । सोम । गोपाम् । किम् । अङ्ग ।
त्वा । आहुः । अभिशस्ति०पाम् । नः ॥ किम् । अङ्ग । नः ।
पश्यसि । निद्यमानान् । ब्रह्म०द्विषे । तपुषिम् । हेतिम् । अस्य ॥३॥

**अवन्तु मामुषसो जायमाना ऽअवन्तु मा सिन्धवः पिन्वमानाः ।**
**अवन्तु मा पर्वतासो ध्रुवासोऽवन्तु मा पितरो देवहूतौ ॥४॥**
अवन्तु । माम् । उषसः । जायमानाः । अवन्तु । मा ।
सिन्धवः । पिन्वमानाः ॥ अवन्तु । मा । पर्वतासः ।
ध्रुवासः । अवन्तु । मा । पितरः । देव०हूतौ ॥४॥

**विश्वदानीं सुमनसः स्याम पश्येम नु सूर्यमुच्चरन्तम् ।**
**तथा करद्वसुपतिर्वसूनां देवाँ ऽओहानोऽवसागमिष्ठः ॥५॥ (१४)**
विश्व०दानीम् । सु०मनसः । स्याम । पश्येम । नु ।
सूर्यम् । उच्चरन्तम् ॥ तथा । करत् । वसु०पतिः ।
वसूनाम् । देवान् । ओहानः । अवसा । आ०गमिष्ठः ॥५॥

**इन्द्रो नेदिष्ठमवसागमिष्ठः सरस्वती सिन्धुभिः पिन्वमाना ।**
**पर्जन्यो न ऽओषधीभिर्मयोभुरग्निः सुशंसः सुहवः पितेव ॥६॥**
इन्द्रः । नेदिष्ठम् । अवसा । आ०गमिष्ठः । सरस्वती ।
सिन्धु०भिः । पिन्वमाना ॥ पर्जन्यः । नः । ओषधीभिः ।
मयः२भुः । अग्निः । सु०शंसः । सु०हवः । पिताऽइव ॥६॥

**विश्वे॑ देवास॒ ऽआ ग॑त शृणु॒ता म॑ ऽइ॒मं हव॑म् ।**
**एदं ब॒र्हिर्नि षी॑दत ॥७॥**

विश्वे॑ । दे॒वा॒सः॒ । आ । ग॒त॒ । शृ॒णु॒त । मे॒ । इ॒मम् । हव॑म् ॥
आ । इ॒दम् । ब॒र्हिः । नि । सी॒द॒त॒ ॥७॥

**यो वो॑ देवा घृ॒तस्नु॑ना ह॒व्येन॑ प्रति॒भूष॑ति ।**
**तं विश्व॒ ऽउप॑ गच्छथ ॥८॥**

यः । व॒ः । दे॒वा॒ः । घृ॒त॰स्नु॑ना । ह॒व्येन॑ । प्र॒ति॒॰भूष॑ति ॥
तम् । विश्वे॑ । उप॑ । ग॒च्छ॒थ॒ ॥८॥

**उप॑ नः सू॒नवो॒ गिर॑ः शृ॒ण्वन्त्व॒मृत॑स्य॒ ये ।**
**सु॒मृ॒ळी॒का भ॑वन्तु नः ॥९॥**

उप॑ । न॒ः । सू॒नव॑ः । गिर॑ः । शृ॒ण्वन्तु । अ॒मृत॑स्य । ये ॥
सु॒॰मृ॒ळी॒काः । भ॒व॒न्तु॒ । न॒ः ॥९॥

**विश्वे॑ दे॒वा ऽऋ॑ता॒वृध॑ ऽऋ॒तुभि॑र्हवन॒श्रुत॑ः ।**
**जुष॑न्तां॒ युज्यं॒ पय॑ः ॥१०॥ (१५)**

विश्वे॑ । दे॒वाः । ऋ॒त॒॰वृध॑ः । ऋ॒तु॰भि॑ः । ह॒व॒न॒॰श्रुत॑ः ॥
जुष॑न्ताम् । युज्य॑म् । पय॑ः ॥१०॥

**स्तो॒त्रमिन्द्रो॑ म॒रुद्ग॑ण॒स्त्वष्टृ॑मा॒न्मि॒त्रो ऽअ॑र्य॒मा ।**
**इ॒मा ह॒व्या जु॑षन्त नः ॥११॥**

स्तो॒त्रम् । इन्द्र॑ः । म॒रुत्॰ग॑णः । त्वष्टृ॑॰मान् । मि॒त्रः । अ॒र्य॒मा ॥
इ॒मा । ह॒व्या । जु॒ष॒न्त॒ । न॒ः ॥११॥

**इमं नो ऽअग्ने ऽअध्वरं होतर्वयुनशो यज ।**
**चिकित्वान्दैव्यं जनम् ॥१२॥**
इमम् । नः । अग्ने । अध्वरम् । होतः । वयुन०शः । यज ॥
चिकित्वान् । दैव्यम् । जनम् ॥१२॥

**विश्वे देवाः शृणुतेमं हवं मे ये ऽअन्तरिक्षे य ऽउप द्यवि ष्ठ ।**
**ये ऽअग्निजिह्वा ऽउत वा यजत्रा ऽआसद्यास्मिन्बर्हिषि मादयध्वम् ॥१३॥**
विश्वे । देवाः । शृणुत । इमम् । हवम् । मे । ये । अन्तरिक्षे ।
ये । उप । द्यवि । स्थ ॥ ये । अग्नि०जिह्वाः । उत । वा ।
यजत्राः । आ०सद्य । अस्मिन् । बर्हिषि । मादयध्वम् ॥१३॥

**विश्वे देवा मम शृण्वन्तु यज्ञिया ऽउभे रोदसी ऽअपां नपाच्च मन्म ।**
**मा वो वचांसि परिचक्ष्याणि वोचं सुम्नेष्विद्वो ऽअन्तमा मदेम ॥१४॥**
विश्वे । देवाः । मम । शृण्वन्तु । यज्ञियाः । उभे इति । रोदसी इति ।
अपाम् । नपात् । च । मन्म ॥ मा । वः । वचांसि । परि०चक्ष्याणि ।
वोचम् । सुम्नेषु । इत् । वः । अन्तमाः । मदेम ॥१४॥

**ये के च ज्मा महिनो ऽअहिमाया दिवो जज्ञिरे ऽअपां सधस्थे ।**
**ते ऽअस्मभ्यमिषये विश्वमायुः क्षप ऽउस्रा वरिवस्यन्तु देवाः ॥१५॥**
ये । के । च । ज्मा । महिनः । अहि०मायाः । दिवः । जज्ञिरे ।
अपाम् । सध०स्थे ॥ ते । अस्मभ्यम् । इषये । विश्वम् ।
आयुः । क्षपः । उस्राः । वरिवस्यन्तु । देवाः ॥१५॥

**अग्नीपर्जन्याववतं धियं मेऽस्मिन्हवे सुहवा सुष्टुतिं नः ।**
**इळामन्यो जनयद्गर्भमन्यः प्रजावतीरिष ऽआ धत्तमस्मे ॥१६॥**

अग्नीपर्जन्यौ । अवतम् । धियम् । मे । अस्मिन् । हवे । सु०हवा ।
सु०स्तुतिम् । नः ॥ इळाम् । अन्यः । जनयत् । गर्भम् ।
अन्यः । प्रजा०वतीः । इषः । आ । धत्तम् । अस्मे इति ॥१६॥

**स्तीर्णे बर्हिषि समिधाने ऽअग्नौ सूक्तेन महा नमसा विवासे ।**
**अस्मिन्नो ऽअद्य विदथे यजत्रा विश्वे देवा हविषि मादयध्वम् ॥१७॥ ( १६ ) [ १२११ ]**
स्तीर्णे । बर्हिषि । सम्०इधाने । अग्नौ । सु०उक्तेन । महा ।
नमसा । आ । विवासे ॥ अस्मिन् । नः । अद्य । विदथे ।
यजत्राः । विश्वे । देवाः । हविषि । मादयध्वम् ॥१७॥

# ( ५३ )

१० बार्हस्पत्यो भरद्वाजः । पूषा । गायत्री, ८ अनुष्टुप् ।

**वयमु त्वा पथस्पते रथं न वाजसातये ।**
**धिये पूषन्नयुज्महि ॥१॥**
वयम् । ऊँ इति । त्वा । पथः । पते । रथम् । न । वाज०सातये ॥
धिये । पूषन् । अयुज्महि ॥१॥

**अभि नो नर्यं वसु वीरं प्रयतदक्षिणम् ।**
**वामं गृहपतिं नय ॥२॥**
अभि । नः । नर्यम् । वसु । वीरम् । प्रयत०दक्षिणम् ॥
वामम् । गृह०पतिम् । नय ॥२॥

**अदित्सन्तं चिदाघृणे पूषन्दानाय चोदय ।**
**पणेश्चिद्वि म्रदा मनः ॥३॥**
अदित्सन्तम् । चित् । आघृणे । पूषन् । दानाय । चोदय ॥
पणेः । चित् । वि । म्रद । मनः ॥३॥

**वि पथो वाजसातये चिनुहि वि मृधो जहि ।**

**साधन्तामुग्र नो धियः ॥४॥**

वि । पथः । वाज०सातये । चिनुहि । वि । मृधः । जहि ॥

साधन्ताम् । उग्र । नः । धियः ॥४॥

**परि तृन्धि पणीनामारया हृदया कवे ।**

**अथेमस्मभ्यं रन्धय ॥५॥ ( १७ )**

परि । तृन्धि । पणीनाम् । आरया । हृदया । कवे ॥

अथ । ईम् । अस्मभ्यम् । रन्धय ॥५॥

**वि पूषन्नारया तुद पणेरिच्छ हृदि प्रियम् ।**

**अथेमस्मभ्यं रन्धय ॥६॥**

वि । पूषन् । आरया । तुद । पणेः । इच्छ । हृदि । प्रियम् ॥

अथ । ईम् । अस्मभ्यम् । रन्धय ॥६॥

**आ रिख किकिरा कृणु पणीनां हृदया कवे ।**

**अथेमस्मभ्यं रन्धय ॥७॥**

आ । रिख । किकिरा । कृणु । पणीनाम् । हृदया । कवे ॥

अथ । ईम् । अस्मभ्यम् । रन्धय ॥७॥

**यां पूषन्ब्रह्मचोदनीमारां बिभर्ष्याघृणे ।**

**तया समस्य हृदयमा रिख किकिरा कृणु ॥८॥**

याम् । पूषन् । ब्रह्म०चोदनीम् । आराम् । बिभर्षि । आघृणे ॥

तया । समस्य । हृदयम् । आ । रिख । किकिरा । कृणु ॥८॥

**या ते ऽअष्ट्रा गोओपशाघृणे पशुसाधनी ।**
**तस्यास्ते सुम्नमीमहे ॥९॥**
या । ते । अष्ट्रा । गो०ओपशा । आघृणे । पशु०साधनी ॥
तस्याः । ते । सुम्नम् । ईमहे ॥९॥

**उत नो गोषणिं धियमश्वसां वाजसामुत ।**
**नृवत्कृणुहि वीतये ॥१०॥ (१८)** [ १२२१ ]
उत । नः । गो०सनिम् । धियम् । अश्वसाम् । वाजसाम् ॥
उत । नृ०वत् । कृणुहि । वीतये ॥१०॥

## ( ५४ )

१० बार्हस्पत्यो भरद्वाजः । पूषा । गायत्री ।

**सं पूषन्विदुषा नय यो ऽअञ्जसानुशासति ।**
**य ऽएवेदमिति ब्रवत् ॥१॥**
सम् । पूषन् । विदुषा । नय । यः । अञ्जसा । अनु०शासति ।
यः । एव । इदम् इति । ब्रवत् ॥१॥

**समु पूष्णा गमेमहि यो गृहाँ ऽअभिशासति ।**
**इम ऽएवेति च ब्रवत् ॥२॥**
सम् । ऊँ इति । पूष्णा । गमेमहि । यः । गृहान् । अभि०शासति ॥
इमे । एव । इति । च । ब्रवत् ॥२॥

**पूष्णश्चक्रं न रिष्यति न कोशोऽव पद्यते ।**
**नो ऽअस्य व्यथते पविः ॥३॥**

पूष्णः । चक्रम् । न । रिष्यति । न । कोर्शः । अर्व । पद्यते ॥
नो इति । अस्य । व्यथते । पविः ॥३॥

**यो ऽअस्मै हविषाविधन्न तं पूषापि मृष्यते ।**
**प्रथमो विन्दते वसु ॥४॥**
यः । अस्मै । हविषा । अविधत् । न । तम् । पूषा । अपि । मृष्यते ॥
प्रथमः । विन्दते । वसु ॥४॥

**पूषा गा ऽअन्वेतु नः पूषा रक्षत्वर्वतः ।**
**पूषा वाजं सनोतु नः ॥५॥ ( १९ )**
पूषा । गाः । अनु । एतु । नः । पूषा । रक्षतु । अर्वतः ॥
पूषा । वाजम् । सनोतु । नः ॥५॥

**पूषन्ननु प्र गा ऽइहि यजमानस्य सुन्वतः ।**
**अस्माकं स्तुवतामुत ॥६॥**
पूषन् । अनु । प्र । गाः । इहि । यजमानस्य । सुन्वतः ॥
अस्माकम् । स्तुवताम् । उत ॥६॥

**माकिर्नेशन्माकीं रिषन्माकीं सं शारि केवटे ।**
**अथारिष्टाभिरा गहि ॥७॥**
माकिः । नेशत् । माकीम् । रिषन् । माकीम् । सम् । शारि । केवटे ।
अथ । अरिष्टाभिः । आ । गहि ॥७॥

**शृण्वन्तं पूषणं वयमिर्यमनष्टवेदसम् ।**
**ईशानं राय ऽईमहे ॥८॥**

शृण्वन्तम् । पूषणम् । वयम् । इर्यम् । अनष्ट०वेदसम् ॥
ईशानम् । रायः । ईमहे ॥८॥

**पूषन्तव व्रते वयं न रिष्येम कदा चन ।**
**स्तोतारस्त इह स्मसि ॥९॥**
पूषन् । तव । व्रते । वयम् । न । रिष्येम । कदा । चन ॥
स्तोतारः । ते । इह । स्मसि ॥९॥

**परि पूषा परस्ताद्धस्तं दधातु दक्षिणम् ।**
**पुनर्नो नष्टमाजतु ॥१०॥ (२०)** [ १२३१ ]
परि । पूषा । परस्तात् । हस्तम् । दधातु । दक्षिणम् ॥
पुनः । नः । नष्टम् । आ । अजतु ॥१०॥

## (५५)

**६ बार्हस्पत्यो भरद्वाजः । पूषा । गायत्री ।**

**एहि वां विमुचो नपादाघृणे सं सचावहै ।**
**रथीर्ऋतस्य नो भव ॥१॥**
आ । इहि । वाम् । वि०मुचः । नपात् । आघृणे । सम् । सचावहै ॥
रथीः । ऋतस्य । नः । भव ॥१॥

**रथीतमं कपर्दिनमीशानं राधसो महः ।**
**रायः सखायमीमहे ॥२॥**
रथि०तमम् । कपर्दिनम् । ईशानम् । राधसः । महः ॥
रायः । सखायम् । ईमहे ॥२॥

रायो धारास्याघृणे वसो राशिरजाश्व ।
धीवतोधीवतः सखा ॥३॥
रायः । धारा । असि । आघृणे । वसोः । राशिः । अज॰अश्व ॥
धीवतः२धीवतः । सखा ॥३॥

पूषणं न्वजाश्वमुप स्तोषाम वाजिनम् ।
स्वसुर्यो जार ऽउच्यते ॥४॥
पूषणम् । नु । अज॰अश्वम् । उप । स्तोषाम । वाजिनम् ॥
स्वसुः । यः । जारः । उच्यते ॥४॥

मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः ।
भ्रातेन्द्रस्य सखा मम ॥५॥
मातुः । दिधिषुम् । अब्रवम् । स्वसुः । जारः । शृणोतु । नः ॥
भ्राता । इन्द्रस्य । सखा । मम ॥५॥

आजासः पूषणं रथे निशृम्भास्ते जनश्रियम् ।
देवं वहन्तु बिभ्रतः ॥६॥ ( २१ ) [ १२३७ ]
आ । अजासः । पूषणम् । रथे । नि॰शृम्भाः । ते । जन॰श्रियम् ॥
देवम् । वहन्तु । बिभ्रतः ॥६॥

# ( ५६ )

६ बार्हस्पत्यो भरद्वाजः । पूषा । गायत्री, ६ अनुष्टुप् ।

य ऽएनमादिदेशति करम्भादिति पूषणम् ।
न तेन देव ऽआदिशे ॥१॥
यः । एनम् । आ॰दिदेशति । करम्भ॰अत् । इति । पूषणम् ॥
न । तेन । देवः । आ॰दिशे ॥१॥

**उत घा स रथीतमः सख्या सत्पतिर्युजा ।**

**इन्द्रो वृत्राणि जिघ्नते ॥२॥**

उत । घ । सः । रथिऽतमः । सख्या । सत्ऽपतिः । युजा ।

इन्द्रः । वृत्राणि । जिघ्नते ॥२॥

**उतादः परुषे गवि सूरश्चक्रं हिरण्ययम् ।**

**न्यैरयद्रथीतमः ॥३॥**

उत । अदः । परुषे । गवि । सूरः । चक्रम् । हिरण्ययम् ॥

नि । ऐरयत् । रथिऽतमः ॥३॥

**यदद्य त्वा पुरुष्टुत ब्रवाम दस्र मन्तुमः ।**

**तत्सु नो मन्म साधय ॥४॥**

यत् । अद्य । त्वा । पुरुऽस्तुत । ब्रवाम । दस्र । मन्तुऽमः ॥

तत् । सु । नः । मन्म । साधय ॥४॥

**इमं च नो गवेषणं सातये सीषधो गणम् ।**

**आरात्पूषन्नसि श्रुतः ॥५॥**

इमम् । च । नः । गोऽएषणम् । सातये । सीसधः । गणम् ॥

आरात् । पूषन् । असि । श्रुतः ॥५॥

**आ ते स्वस्तिमीमह ऽआरेअघामुपावसुम् ।**

**अद्या च सर्वतातये श्वश्च सर्वतातये ॥६॥ ( २२ )** [ १२४३ ]

आ । ते । स्वस्तिम् । ईमहे । आरेऽअघाम् । उपऽवसुम् ॥

अद्य । च । सर्वऽतातये । श्वः । च । सर्वऽतातये ॥६॥

# ( ५७ )

६ बार्हस्पत्यो भरद्वाजः । इन्द्रापूषणौ । गायत्री ।

**इन्द्रा नु पूषणा वयं सख्याय स्वस्तये ।**

**हुवेम वाजसातये ॥१॥**

इन्द्रा । नु । पूषणा । वयम् । सख्याय । स्वस्तये ॥

हुवेम । वाज॰सातये ॥१॥

**सोममन्य ऽउपासदत्पातवे चम्वोः सुतम् ।**

**करम्भमन्य ऽइच्छति ॥२॥**

सोमम् । अन्यः । उप । असदत् । पातवे । चम्वोः । सुतम् ॥

करम्भम् । अन्यः । इच्छति ॥२॥

**अजा ऽअन्यस्य वह्नयो हरी ऽअन्यस्य संभृता ।**

**ताभ्यां वृत्राणि जिघ्नते ॥३॥**

अजाः । अन्यस्य । वह्नयः । हरी इति । अन्यस्य । सम्॰भृता ॥

ताभ्याम् । वृत्राणि । जिघ्नते ॥३॥

**यदिन्द्रो ऽअनयद्रितो महीरपो वृषन्तमः ।**

**तत्र पूषाभवत्सचा ॥४॥**

यत् । इन्द्रः । अनयत् । रितः । महीः । अपः । वृषन्॰तमः ॥

तत्र । पूषा । अभवत् । सचा ॥४॥

**तां पूष्णः सुमतिं वयं वृक्षस्य प्र वयामिव ।**

**इन्द्रस्य चा रभामहे ॥५॥**

ताम् । पूष्णः । सुऽमतिम् । वयम् । वृक्षस्य । प्र । वयाम्ऽइव ॥
इन्द्रस्य । च । आ । रभामहे ॥५॥

**उत्पूषणं युवामहेऽभीशूँरिव सारथिः ।**
**मह्या ऽइन्द्रं स्वस्तये ॥६॥ ( २३ )** [ १२४९ ]
उत् । पूषणम् । युवामहे । अभीशून्ऽइव । सारथिः ॥
मह्यै । इन्द्रम् । स्वस्तये ॥६॥

## ( ५८ )

४ बार्हस्पत्यो भरद्वाजः । पूषा । त्रिष्टुप्, २ जगती ।

**शुक्रं ते ऽअन्यद्यजतं ते ऽअन्यद्विषुरूपे ऽअहनी द्यौरिवासि ।**
**विश्वा हि माया ऽअवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥१॥**
शुक्रम् । ते । अन्यत् । यजतम् । ते । अन्यत् । विषुरूपे इति विषुऽरूपे ।
अहनी इति । द्यौःऽइव । असि ॥ विश्वाः । हि । मायाः । अवसि ।
स्वधाऽवः । भद्रा । ते । पूषन् । इह । रातिः । अस्तु ॥१॥

**अजाश्वः पशुपा वाजपस्त्यो धियंजिन्वो भुवने विश्वे ऽअर्पितः ।**
**अष्ट्रां पूषा शिथिरामुद्वरीवृजत्संचक्षाणो भुवना देव ऽईयते ॥२॥**
अजऽअश्वः । पशुऽपाः । वाजऽपस्त्यः । धियम्ऽजिन्वः ।
भुवने । विश्वे । अर्पितः ॥ अष्ट्राम् । पूषा । शिथिराम् ।
उत्ऽवरीवृजत् । सम्ऽचक्षाणः । भुवना । देवः । ईयते ॥२॥

**यास्ते पूषन्नावो ऽअन्तः समुद्रे हिरण्ययीरन्तरिक्षे चरन्ति ।**
**ताभिर्यासि दूत्यां सूर्यस्य कामेन कृत श्रव ऽइच्छमानः ॥३॥**
याः । ते । पूषन् । नावः । अन्तरिति । समुद्रे । हिरण्ययीः ।
अन्तरिक्षे । चरन्ति ॥ ताभिः । यासि । दूत्याम् ।
सूर्यस्य । कामेन । कृत । श्रवः । इच्छमानः ॥३॥

पूषा सुबन्धुर्दिव ऽआ पृथिव्या ऽइळस्पतिर्मघवा दस्मवर्चाः ।
यं देवासो ऽअददुः सूर्यायै कामेन कृतं तवसं स्वञ्चम् ॥४॥ (२४) [१२५३]
पूषा । सु॰बन्धुः । दिवः । आ । पृथिव्याः । इळः । पतिः ।
मघ॰वा । दस्म॰वर्चाः ॥ यम् । देवासः । अददुः ।
सूर्यायै । कामेन । कृतम् । तवसम् । सु॰अञ्चम् ॥४॥

## (५९)

१० बार्हस्पत्यो भरद्वाजः । इन्द्राग्नी । बृहती, ७-१० अनुष्टुप् ।

प्र नु वोचा सुतेषु वां वीर्याइ यानि चक्रथुः ।
हतासो वां पितरो देवशत्रव ऽइन्द्राग्नी जीवथो युवम् ॥१॥
प्र । नु । वोच । सुतेषु । वाम् । वीर्या । यानि । चक्रथुः ॥
हतासः । वाम् । पितरः । देव॰शत्रवः । इन्द्राग्नी इति । जीवथः । युवम् ॥१॥

बळित्था महिमा वामिन्द्राग्नी पनिष्ठ ऽआ ।
समानो वां जनिता भ्रातरा युवं यमाविहेहमातरा ॥२॥
बट् । इत्था । महिमा । वाम् । इन्द्राग्नी इति । पनिष्ठः । आ ॥
समानः । वाम् । जनिता । भ्रातरा । युवम् । यमौ । इहेह॰मातरा ॥२॥

ओकिवांसा सुते सचाँ ऽअश्वा सप्तीइवादने ।
इन्द्रा न्वग्नी ऽअवसेह वज्रिणा वयं देवा हवामहे ॥३॥
ओकि॰वांसा । सुते । सचा । अश्वा । सप्तीइवेति सप्तीऽइव । आदने ॥
इन्द्रा । नु । अग्नी इति । अवसा । इह । वज्रिणा । वयम् । देवा । हवामहे ॥३॥

य ऽइन्द्राग्नी सुतेषु वां स्तवत्तेष्वृतावृधा ।
जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ॥४॥

यः । इन्द्राग्नी इति । सुतेषु । वाम् । स्तवत् । तेषु । ऋतऽवृधा ॥
जोषऽवाकम् । वदतः । पज्रऽहोषिणा । न । देवा । भसथः । चन ॥४॥

**इन्द्राग्नी को ऽअस्य वां देवौ मर्त्तश्चिकेतति ।**
**विषूचो ऽअश्वान्युयुजान ऽईयत ऽएकः समान ऽआ रथे ॥५॥ ( २५ )**

इन्द्राग्नी इति । कः । अस्य । वाम् । देवौ । मर्त्तः । चिकेतति ॥
विषूचः । अश्वान् । युयुजानः । ईयते । एकः । समाने । आ । रथे ॥५॥

**इन्द्राग्नी ऽअपादियं पूर्वागात्पद्वतीभ्यः ।**
**हित्वी शिरो जिह्वया वावदच्चरत्त्रिंशत्पदा न्यक्रमीत् ॥६॥**

इन्द्राग्नी इति । अपात् । इयम् । पूर्वा । आ ।
अगात् । पत्ऽवतीभ्यः ॥ हित्वी । शिरः । जिह्वया ।
वावदत् । चरत् । त्रिंशत् । पदा । नि । अक्रमीत् ॥६॥

**इन्द्राग्नी ऽआ हि तन्वते नरो धन्वानि बाह्वोः ।**
**मा नो ऽअस्मिन्महाधने परा वर्क्तं गविष्टिषु ॥७॥**

इन्द्राग्नी इति । आ । हि । तन्वते । नरः । धन्वानि । बाह्वोः ॥
मा । नः । अस्मिन् । महाऽधने । परा । वर्क्तम् । गोऽइष्टिषु ॥७॥

**इन्द्राग्नी तपन्ति माघा ऽअर्यो ऽअरातयः ।**
**अप द्वेषांस्या कृतं युयुतं सूर्यादधि ॥८॥**

इन्द्राग्नी इति । तपन्ति । मा । अघाः । अर्यः । अरातयः ॥
अप । द्वेषांसि । आ । कृतम् । युयुतम् । सूर्यात् । अधि ॥८॥

**इन्द्राग्नी युवोरपि वसु दिव्यानि पार्थिवा ।**
**आ न ऽइह प्र यच्छतं रयिं विश्वायुपोषसम् ॥९॥**

इन्द्राग्नी इति । युवोः । अपि । वसु । दिव्यानि । पार्थिवा ॥
आ । नः । इह । प्र । यच्छतम् । रयिम् । विश्वायुऽपोषसम् ॥९॥

**इन्द्राग्नी ऽउक्थवाहसा स्तोमेभिर्हवनश्रुता ।**
**विश्वाभिर्गीर्भिरा गतमस्य सोमस्य पीतये ॥१०॥ (२६) [१२६३]**
इन्द्राग्नी इति । उक्थऽवाहसा । स्तोमेभिः । हवनऽश्रुता ॥
विश्वाभिः । गीःऽभिः । आ । गतम् । अस्य । सोमस्य । पीतये ॥१०॥

## (६०)

**१५ बार्हस्पत्यो भरद्वाजः । इन्द्राग्नी । गायत्री,१-३ त्रिष्टुप्, १४ बृहती, १५ अनुष्टुप् ।**
**श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो ऽअग्नी सहुरी सपर्यात् ।**
**इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता ॥१॥**
श्नथत् । वृत्रम् । उत । सनोति । वाजम् । इन्द्रा । यः ।
अग्नी इति । सहुरी इति । सपर्यात् ॥ इरज्यन्ता ।
वसव्यस्य । भूरेः । सहःऽतमा । सहसा । वाजऽयन्ता ॥१॥

**ता योधिष्टमभि गा ऽइन्द्र नूनमपः स्वरुषसो ऽअग्न ऽऊळ्हाः ।**
**दिशः स्वरुषस ऽइन्द्र चित्रा ऽअपो गा ऽअग्ने युवसे नियुत्वान् ॥२॥**
ता । योधिष्टम् । अभि । गाः । इन्द्र । नूनम् । अपः । स्वः ।
उषसः । अग्ने । ऊळ्हाः । दिशः । स्वः । उषसः । इन्द्र ।
चित्राः । अपः । गाः । अग्ने । युवसे । नियुत्वान् ॥२॥

**आ वृत्रहणा वृत्रहभिः शुष्मैरिन्द्र यातं नमोभिरग्ने ऽअर्वाक् ।**
**युवं राधोभिरकवेभिरिन्द्राग्ने ऽअस्मे भवतमुत्तमेभिः ॥३॥**
आ । वृत्रऽहना । वृत्रहऽभिः । शुष्मैः । इन्द्र । यातम् ।
नमःऽभिः । अग्ने । अर्वाक् ॥ युवम् । राधःऽभिः । अकवेभिः ।
इन्द्र । अग्ने । अस्मे इति । भवतम् । उत्ऽतमेभिः ॥३॥

**ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम् ।**
**इन्द्राग्नी न मर्धतः ॥४॥**

ता । हुवे । ययोः । इदम् । पप्ने । विश्वम् । पुरा । कृतम् ॥
इन्द्राग्नी इति । न । मर्धतः ॥४॥

**उग्रा विघनिना मृध ऽइन्द्राग्नी हवामहे ।**
**ता नो मृळात ऽईदृशे ॥५॥ ( २७ )**

उग्रा । वि०घनिना । मृधः । इन्द्राग्नी इति । हवामहे ॥
ता । नः । मृळातः । ईदृशे ॥५॥

**हतो वृत्राण्यार्या हतो दासानि सत्पती ।**
**हतो विश्वा ऽअप द्विषः ॥६॥**

हतः । वृत्राणि । आर्या । हतः । दासानि । सत्पती इति सत्०पती ॥
हतः । विश्वाः । अप । द्विषः ॥६॥

**इन्द्राग्नी युवामिमेऽभि स्तोमा ऽअनूषत ।**
**पिबतं शंभुवा सुतम् ॥७॥**

इन्द्राग्नी इति । युवाम् । इमे । अभि । स्तोमाः । अनूषत ॥
पिबतम् । शम्०भुवा । सुतम् ॥७॥

**या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा ।**
**इन्द्राग्नी ताभिरा गतम् ॥८॥**

याः । वाम् । सन्ति । पुरु०स्पृहः । नि०युतः । दाशुषे । नरा ।
इन्द्राग्नी इति । ताभिः । आ । गतम् ॥८॥

**ताभिरा गच्छतं नरोपेदं सवनं सुतम् ।**
**इन्द्राग्नी सोमपीतये ॥९॥**

ताभिः । आ । गच्छतम् । नरा । उप । इदम् । सवनम् । सुतम् ॥
इन्द्राग्नी इति । सोम०पीतये ॥९॥

**तमीळिष्व यो ऽअर्चिषा वना विश्वा परिष्वजत् ।**
**कृष्णा कृणोति जिह्वया ॥१०॥ ( २८ )**

तम् । ईळिष्व । यः । अर्चिषा । वना । विश्वा । परि०स्वजत् ॥
कृष्णा । कृणोति । जिह्वया ॥१०॥

**य ऽइद्ध ऽआविवासति सुम्नमिन्द्रस्य मर्त्यः ।**
**द्युम्नाय सुतरा ऽअपः ॥११॥**

यः । इद्धे । आ०विवासति । सुम्नम् । इन्द्रस्य । मर्त्यः ॥
द्युम्नाय । सु०तराः । अपः ॥११॥

**ता नो वाजवतीरिष ऽआशून्पिपृतमर्वतः ।**
**इन्द्रमग्निं च वोळ्हवे ॥१२॥**

ता । नः । वाज०वतीः । इषः । आशून् । पिपृतम् । अर्वतः ॥
इन्द्रम् । अग्निम् । च । वोळ्हवे ॥१२॥

**उभा वामिन्द्राग्नी ऽआहुवध्या ऽउभा राधसः सह मादयध्यै ।**
**उभा दातारविषां रयीणामुभा वाजस्य सातये हुवे वाम् ॥१३॥**

उभा । वाम् । इन्द्राग्नी इति । आ०हुवध्यै । उभा । राधसः ।
सह । मादयध्यै ॥ उभा । दातारौ । इषाम् । रयीणाम् ।
उभा । वाजस्य । सातये । हुवे । वाम् ॥१३॥

आ नो गव्येभिरश्व्यैर्वसव्यैरुप गच्छतम् ।
सखायौ देवौ सख्याय शंभुवेन्द्राग्नी ता हवामहे ॥१४॥
आ । नः । गव्येभिः । अश्व्यैः । वसव्यैः । उप । गच्छतम् ॥
सखायौ । देवौ । सख्याय । शम्ऽभुवा । इन्द्राग्नी इति । ता । हवामहे ॥१४॥

इन्द्राग्नी शृणुतं हवं यजमानस्य सुन्वतः ।
वीतं हव्यान्या गतं पिबतं सोम्यं मधु ॥१५॥ ( २९ ) [ १२७८ ]
इन्द्राग्नी इति । शृणुतम् । हवम् । यजमानस्य । सुन्वतः ॥
वीतम् । हव्यानि । आ । गतम् । पिबतम् । सोम्यम् । मधु ॥१५॥

# ( ६१ )

१४ बार्हस्पत्यो भरद्वाजः । सरस्वती । गायत्री, १-३, १३ जगती, १४ त्रिष्टुप् ।

इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ।
या शश्वन्तमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥१॥
इयम् । अददात् । रभसम् । ऋणऽच्युतम् । दिवःऽदासम् ।
वध्रिऽअश्वाय । दाशुषे ॥ या । शश्वन्तम् । आऽचखाद ।
अवसम् । पणिम् । ता । ते । दात्राणि । तविषा । सरस्वति ॥१॥

इयं शुष्मेभिर्बिसखाइवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः ।
पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥२॥
इयम् । शुष्मेभिः । बिसखाःऽइव । अरुजत् । सानु । गिरीणाम् ।
तविषेभिः । ऊर्मिऽभिः ॥ पारावतऽघ्नीम् । अवसे ।
सुवृक्तिऽभिः । सरस्वतीम् । आ । विवासेम । धीतिऽभिः ॥२॥

सरस्वति देवनिदो नि बर्हय प्रजां विश्वस्य बृसयस्य मायिनः ।
उत क्षितिभ्योऽवनीरविन्दो विषमेभ्यो ऽअस्रवो वाजिनीवति ॥३॥

सरस्वति । देव॰निदः । नि । बर्हय । प्र॰जाम् । विश्वस्य ।
बृसयस्य । मायिनः ॥ उत । क्षिति॰भ्यः । अवनीः ।
अविन्दः । विषम् । एभ्यः । अस्रवः । वाजिनी॰वति ॥३॥

**प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती ।**
**धीनामवित्र्यवतु ॥४॥**
प्र । नः । देवी । सरस्वती । वाजेभिः । वाजिनी॰वती ॥
धीनाम् । अवित्री । अवतु ॥४॥

**यस्त्वा देवि सरस्वत्युपब्रूते धने हिते ।**
**इन्द्रं न वृत्रतूर्ये ॥५॥ ( ३० )**
यः । त्वा । देवि । सरस्वति । उप॰ब्रूते । धने । हिते ॥
इन्द्रम् । न । वृत्र॰तूर्ये ॥५॥

**त्वं देवि सरस्वत्यवा वाजेषु वाजिनि ।**
**रदा पूषेव नः सनिम् ॥६॥**
त्वम् । देवि । सरस्वति । अव । वाजेषु । वाजिनि ॥
रद । पूषाऽइव । नः । सनिम् ॥६॥

**उत स्या नः सरस्वती घोरा हिरण्यवर्त्तनिः ।**
**वृत्रघ्नी वष्टि सुष्टुतिम् ॥७॥**
उत । स्या । नः । सरस्वती । घोरा । हिरण्य॰वर्त्तनिः ॥
वृत्र॰घ्नी । वष्टि । सु॰स्तुतिम् ॥७॥

**यस्या ऽअनन्तो ऽअह्रुतस्त्वेषश्चरिष्णुरर्णवः ।**
**अमश्चरति रोरुवत् ॥८॥**

यस्याः । अनन्तः । अह्रुतः । त्वेषः । चरिष्णुः । अर्णवः ॥
अमः । चरति । रोरुवत् ॥८॥

सा नो विश्वा ऽअति द्विषः स्वसॄरन्या ऽऋतावरी ।
अतन्नहेव सूर्यः ॥९॥
सा । नः । विश्वाः । अति । द्विषः । स्वसॄः । अन्याः । ऋत०वरी ॥
अतन् । अहाऽइव । सूर्यः ॥९॥

उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा ।
सरस्वती स्तोम्या भूत् ॥१०॥ ( ३१ )
उत । नः । प्रिया । प्रियासु । सप्त०स्वसा । सु०जुष्टा ॥
सरस्वती । स्तोम्या । भूत् ॥१०॥

आपप्रुषी पार्थिवान्युरु रजो ऽअन्तरिक्षम् ।
सरस्वती निदस्पातु ॥११॥
आ०पप्रुषी । पार्थिवानि । उरु । रजः । अन्तरिक्षम् ॥
सरस्वती । निदः । पातु ॥११॥

त्रिषधस्था सप्तधातुः पञ्च जाता वर्द्धयन्ती ।
वाजेवाजे हव्या भूत् ॥१२॥
त्रि०सधस्था । सप्त०धातुः । पञ्च । जाता । वर्द्धयन्ती ॥
वाजे०वाजे । हव्या । भूत् ॥१२॥

प्र या महिम्ना महिनासु चेकिते द्युम्नेभिरन्या ऽअपसामपस्तमा ।
रथइव बृहती विभ्वने कृतोपस्तुत्या चिकितुषा सरस्वती ॥१३॥

प्र । या । महिम्ना । महिनासु । चेकिते । द्युम्नेभिः । अन्याः ।
अपसाम् । अपःऽतमा । रथःऽइव । बृहती । विऽभ्वने ।
कृता । उपऽस्तुत्या । चिकितुषा । सरस्वती ॥१३॥

**सरस्वत्यभि नो नेषि वस्यो मापं स्फरीः पयसा मा न ऽआ धक् ।**
**जुषस्व नः सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म ॥१४॥ ( ३२ )[ १२९२ ]**
सरस्वति । अभि । नः । नेषि । वस्यः । मा । अप । स्फरीः ।
पयसा । मा । नः । आ । धक् ॥ जुषस्व । नः । सख्या ।
वेश्या । च । मा । त्वत् । क्षेत्राणि । अरणानि । गन्म ॥१४॥

॥ इति चतुर्थाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥

# अष्टमाध्यायस्य मन्त्रवर्गानुक्रमणी

यज्ञायज्ञा वो अग्नये ॥१॥
आ यः पप्रौ भानुना ॥२॥
आ सखायः सबर्दुघां ॥३॥
मा काकम्बीरमुद्बृहो ॥४॥
स्तुषेजनं सुव्रतं ॥ ५॥
पर्जन्यवाता वृषभा ॥६॥
आ युवानः कवयो ॥७॥
हुवे वो देवीमदितिं ॥८॥
अभित्यं वीरं गिर्वणस ॥९॥
ते नो रायो द्युमतो ॥१०॥
उदु त्यच्चक्षुर्महिं ॥११॥
मा नो वृकाय ॥१२॥
ते न इन्द्रः पृथिवी ॥१३॥
न तद्दिवा न पृथिव्या ॥१४॥
इन्द्रो नेदिष्ठमवसा ॥१५॥
स्तोत्रमिन्द्रो मरुद्गण ॥१६॥
वयमु त्वा पथस्पते ॥१७॥
वि पूषन्नारया तुद ॥१८॥
सं पूषन् विदुषा नय ॥१९॥
पूषन्ननु प्र गा इहि ॥२०॥
एहि वां विमुचो नपा ॥२१॥
य एनमादिदेशति ॥२२॥
इन्द्रा नु पूषणा वयं ॥२३॥
शुक्रं ते अन्यद् यजतं ॥२४॥
प्र नु वोचा सुतेषु ॥२५॥
इन्द्राग्नी अपादियं ॥२६॥
श्नथेद् वृत्रमुत सनोति ॥२७॥
हतो वृत्राण्यार्या ॥२८॥
य इद्ध आविवासति ॥२९॥
इयमददाद् रभस ॥३०॥
त्वं देवि सरस्वत्य ॥३१॥
आपप्रुषी पार्थिवा ॥३२॥

॥ इति शाङ्खायनसंहितायां चतुर्थाष्टकेऽष्टमोऽध्यायः ॥
(अष्टमाध्याये वर्गाः ३२, सूक्तानि १४, ऋचः १६६)

चतुर्थाष्टकेऽध्यायाः ८, वर्गाः २५०, सूक्तानि १४०, ऋचः १२८९ + ३ = १२९२ + ५ खिलानि = १२९७

# अथ चतुर्थाष्टकस्य मन्त्राणां वर्णानुक्रमणी

| | |
|---|---|
| अत्रिर्यद्वामवरोहन्नृ० | ४.४.१९; ५.७८.४ |
| अदत्रया दयते वार्याणि | ४.३.३; ५.४९.३ |
| अदब्धेभिस्तव गोपाभि | ४.५.१०; ६.८.७ |
| अदर्दरुत्समसृजो वि खानि | ४.१.३२; ५.३२.१ |
| अदित्सन्तं चिदाघृणे | ४.८.१७; ६.५३.३ |
| अदिद्युतत्स्वपाको विभावाग्ने | ४.५.१३; ६.११.४ |
| अद्या चिन्नू चित्तदपो | ४.७.२; ६.३०.३ |
| अद्या नो देव सवितः | ४.४.२५; ५.८२.४ |
| अद्वेषो नो मरुतो | ४.४.३४; ५.८७.८ |
| अध क्रत्वा मघवन्तुभ्यं | ४.१.२३; ५.२९.५ |
| अध जिह्वा पापतीति | ४.५.८; ६.६.५ |
| अध त्वष्टा ते मह | ४.६.२; ६.१७.१० |
| अध त्वा विश्वे पुर | ४.६.२; ६.१७.८ |
| अध द्यौश्चित्ते ऽअप | ४.६.२; ६.१७.९ |
| अध स्म यस्यार्चयः | ४.१.१; ५.९.५ |
| अध स्मा ते चर्षणयो | ४.६.२०; ६.२५.७ |
| अध स्मा नो वृधे | ४.७.२९; ६.४६.११ |
| अध स्मास्य पनयन्ति | ४.५.१४; ६.१२.५ |
| अधा नरो न्योहतेऽधा | ४.३.१०; ५.५२.११ |
| अधा मन्ये बृहदसुर्यमस्य | ४.७.२; ६.३०.२ |
| अधा हि काव्या | ४.४.४; ५.६६.४ |
| अधा हि विक्ष्वीड्यो | ४.५.२; ६.२.७ |
| अधा होता न्यसीदो | ४.४.३५; ६.१.२ |
| अधा ह्यग्न ऽएषां | ४.१.८; ५.१६.४ |
| अधारयतं पृथिवीमुत | ४.३.३०; ५.६२.३ |
| अधि बृबुः पणीनां | ४.७.२६; ६.४५.३१ |
| अध्वर्यवश्चकृवांसो | ४.२.२०; ५.४३.३ |
| अध्वर्यो वीर प्र महे | ४.७.१८; ६.४४.१३ |
| अनवस्ते रथमश्वाय | ४.१.२९; ५.३१.४ |
| अनस्वन्ता सत्पतिर्मामहे | ४.१.२१; ५.२७.१ |
| अनागसो ऽअदितये | ४.४.२६; ५.८२.६ |
| अनु ते दायि मह | ४.६.२०; ६.२५.८ |
| अनु त्वाहिघ्ने ऽअध | ४.६.६; ६.१८.१४ |
| अनु द्यावापृथिवी तत्त | ४.६.६; ६.१८.१५ |
| अनु प्र येजे जन ऽओजो | ४.७.८; ६.३६.२ |
| अनु यदीं मरुतो | ४.१.२३; ५.२९.२ |
| अनु श्रुताममतिं वर्द्धदुर्वी | ४.३.३०; ५.६२.५ |
| अनूनोदत्र हस्तयतो | ४.२.२७; ५.४५.७ |
| अन्यदद्य कर्वरमन्यदु | ४.६.१७; ६.२४.५ |
| अप त्यं वृजिनं रिपुं | ४.८.१३; ६.५१.१३ |
| अपादित ऽउदु | ४.७.१०; ६.३८.१ |
| अपामुपस्थे महिषा | ४.५.१०; ६.८.४ |
| अपारो वो महिमा | ४.४.३४; ५.८७.६ |
| अपि पन्थामगन्महि | ४.८.१३; ६.५१.१६ |
| अपूर्व्या पुरुतमान्यस्मै | ४.७.४; ६.३२.१ |
| अभि क्रन्द स्तनय | ४.४.२८; ५.८३.७ |
| अभि त्यं वीरं गिर्वण | ४.८.९; ६.५०.६ |
| अभि त्वा पाजो रक्षसो | ४.६.१२; ६.२१.७ |
| अभि न ऽइळा यूथस्य | ४.२.१६; ५.४१.१९ |
| अभि नो नर्यं वसु | ४.८.१७; ६.५३.२ |
| अभि प्रयांसि सुधितानि | ४.५.१९; ६.१५.१५ |
| अभि ये त्वा विभावरि | ४.४.२१; ५.७९.४ |
| अभि वो ऽअर्चे पोष्यावतो | ४.२.१४; ५.४१.८ |
| अभूदुषा रुशत्पशुरा० | ४.४.१६; ५.७५.९ |
| अभूरु वीर गिर्वणो | ४.७.२३; ६.४५.१३ |
| अभूरेको रयिपते रयीणामा | ४.७.३; ६.३१.१ |
| अभ्यवस्थाः प्र जायन्ते | ४.१.११; ५.१९.१ |
| अभ्राजि शर्द्धो मरुतो | ४.३.१५; ५.५४.६ |
| अमादेषां भियसा | ४.३.२४; ५.५९.२ |
| अयं देवः सहसा | ४.७.२०; ६.४४.२२ |
| अयं द्यावापृथिवी | ४.७.२०; ६.४४.२४ |
| अयं द्योतयदद्युता | ४.७.११; ६.३९.३ |
| अयं मे पीत ऽउदियर्त्ति | ४.७.३०; ६.४७.३ |
| अयं रोचयदरुचो | ४.७.११; ६.३९.४ |
| अयं विदच्चित्रदृशी० | ४.७.३०; ६.४७.५ |
| अयं स यो वरिमाणं | ४.७.३०; ६.४७.४ |

| | |
|---|---|
| एतत्त्यत्त ऽइन्द्रियमचेति | ४.६.२३; ६.२७.४ |
| एता धियं कृणवामा | ४.२.२७; ५.४५.६ |
| एता विश्वा चकृवाँ | ४.१.२५; ५.२९.१४ |
| एतावद्वेदुषस्त्वं भूयो वा | ४.४.२२; ५.७९.१० |
| एतो न्वद्य सुध्योइ | ४.२.२६; ५.४५.५ |
| एदं मरुतो ऽअश्विना | ४.१.२०; ५.२६.९ |
| एना मन्दानो जहि | ४.७.१९; ६.४४.१७ |
| एमेनं प्रत्येतन सोमेभिः | ४.७.१४; ६.४२.२ |
| एवा जज्ञानं सहसे | ४.७.१०; ६.३८.५ |
| एवा ता विश्वा चकृवांस० | ४.६.३; ६.१७.१३ |
| एवा ते ऽअग्ने सुमतिं | ४.१.२१; ५.२७.३ |
| एवा नः स्पृधः समजा | ४.६.२०; ६.२५.९ |
| एवा न ऽइन्द्रोतिभिरव | ४.२.२; ५.३३.७ |
| एवा नपातो मम तस्य | ४.८.१०; ६.५०.१५ |
| एवा पाहि प्रत्नथा | ४.६.१; ६.१७.३ |
| एवा हि त्वामृतुथा | ४.१.३३; ५.३२.१२ |
| एवाँ ऽअग्निं वसूयवः | ४.१.१८; ५.२५.९ |
| एवेदिन्द्रः सुहव ऽऋष्वो | ४.७.१; ६.२९.६ |
| एवेन्द्राग्निभ्यामहावि | ४.४.३२; ५.८६.६ |
| एष क्षेति रथवीतिर्मघवा | ४.३.२९; ५.६१.१९ |
| एष ग्रावेव जरिता त | ४.२.७; ५.३६.४ |
| एष ते देव नेता | ४.३.४; ५.५०.५ |
| एष द्रप्सो वृषभो | ४.७.१३; ६.४१.३ |
| एष स्तोमो मारुतं शर्द्धो | ४.२.१९; ५.४२.१५ |
| एषा गोभिररुणेभि० | ४.४.२३; ५.८०.३ |
| एषा जनं दर्शता | ४.४.२३; ५.८०.२ |
| एषा प्रतीची दुहिता दिवो | ४.४.२३; ५.८०.६ |
| एषा व्येनी भवति द्विबर्हा | ४.४.२३; ५.८०.४ |
| एषा शुभ्रा न तन्वो | ४.४.२३; ५.८०.५ |
| एहि वां विमुचो | ४.८.२१; ६.५५.१ |
| एह्यू षु ब्रवाणि | ४.५.२४; ६.१६.१६ |
| ऐतान्रथेषु तस्थुषः कः | ४.३.११; ५.५३.२ |
| ऐषु धा वीरवद्यश | ४.४.२२; ५.७९.६ |
| ओकिवांसा सुते सचाँ | ४.८.२५; ६.५९.३ |
| ओमानमापो मानुषीरमृक्तं | ४.८.९; ६.५०.७ |
| औच्छत्सा रात्री परितक्म्या | ४.१.२८; ५.३०.१४ |
| कं याथः कं ह गच्छथः | ४.४.१३; ५.७४.३ |
| क ऽईं स्तवत्कः | ४.७.३२; ६.४७.१५ |
| कथा दाशेम नमसा | ४.२.१६; ५.४१.१६ |
| कथा महे रुद्रियाय | ४.२.१५; ५.४१.११ |
| कथो नु ते परि चराणि | ४.१.२५; ५.२९.१३ |
| कदा भुवन्रथक्षयाणि | ४.७.७; ६.३५.१ |
| कदु प्रियाय धाम्ने मनामहे | ४.३.२; ५.४८.१ |
| कया नो ऽअग्न | ४.१.४; ५.१२.३ |
| कर्हि स्वित्तदिन्द्र यज्जरित्रे | ४.७.७; ६.३५.३ |
| कर्हि स्वित्तदिन्द्र यन्नृभि० | ४.७.७; ६.३५.२ |
| कस्मा ऽअद्य सुजाताय | ४.३.१३; ५.५३.१२ |
| कितवासो यद्रिरिपुर्न | ४.४.३१; ५.८५.८ |
| किमङ्ग त्वा ब्रह्मणः | ४.८.१४; ६.५२.३ |
| किमस्य मदे किम्वस्य | ४.६.२३; ६.२७.१ |
| कुवित्संस्य प्र हि व्रजं | ४.७.२५; ६.४५.२४ |
| कुह त्या कुह नु श्रुता | ४.४.१३; ५.७४.२ |
| कूष्ठो देवावश्विनाद्या | ४.४.१३; ५.७४.१ |
| के ते ऽअग्ने रिपवे | ४.१.४; ५.१२.४ |
| के ष्ठा नरः श्रेष्ठतमा | ४.३.२६; ५.६१.१ |
| को नु वां मित्रावरुणा० | ४.२.१३; ५.४१.१ |
| को नु वां मित्रास्तुतो | ४.४.५; ५.६७.५ |
| को वामद्य पुरूणामा | ४.४.१४; ५.७४.७ |
| को वेद जानमेषां को | ४.३.११; ५.५३.१ |
| को वेद नूनमेषां | ४.३.२८; ५.६१.१४ |
| को वो महान्ति महतामु० | ४.३.२४; ५.५९.४ |
| को ऽअस्य शुष्मं तविषीं | ४.१.३३; ५.३२.९ |
| क्रत्वा दा ऽअस्तु | ४.५.२६; ६.१६.२६ |
| क्रत्वा हि द्रोणे | ४.५.२; ६.२.८ |
| क्रीळन्नो रश्म ऽआ | ४.१.११; ५.१९.५ |
| क्व१ वोऽश्वाः क्वा३ | ४.३.२६; ५.६१.२ |

| | |
|---|---|
| क्व१ स्य वीरः को | ४.१.२६; ५.३०.१ |
| गन्ता नो यज्ञं यज्ञियाः | ४.४.३४; ५.८७.९ |
| गन्तेयान्ति सवना हरिभ्यां | ४.६.१५; ६.२३.४ |
| गम्भीरेण न ऽउरुणा० | ४.६.१८; ६.२४.९ |
| गर्भे मातुः पितुष्पिता | ४.५.२७; ६.१६.३५ |
| गवामिव श्रियसेशृङ्गमुत्तमं | ४.३.२४; ५.५९.३ |
| गावो भगो गाव ऽइन्द्रो | ४.६.२५; ६.२८.५ |
| गोमदश्वावद्रथवत्सुवीरं | ४.३.२२; ५.५७.७ |
| ग्रावाणः सोम नो हि | ४.८.१३; ६.५१.१४ |
| ग्राव्णो ब्रह्मा युयुजानः | ४.२.१२; ५.४०.८ |
| चक्रं न वृत्तं पुरुहूत | ४.२.७; ५.३६.३ |
| *चक्षुश्च श्रोत्रं च | ४.७.२०; ६.४४.२५ |
| चतुःसहस्रं गव्यस्य पश्वः | ४.१.२८; ५.३०.१५ |
| चत्वार ऽईं बिभ्रति क्षेमयन्तो | ४.३.१; ५.४७.४ |
| चिकित्विन्मनसं त्वा | ४.१.१४; ५.२२.३ |
| चित्रा वा येषु दीधिति० | ४.१.१०; ५.१८.४ |
| छन्दःस्तुभः कुभन्यव | ४.३.१०; ५.५२.१२ |
| जघने चोद ऽएषां वि | ४.३.२६; ५.६१.३ |
| जनं वज्रिन्महि चिन्म० | ४.६.८; ६.१९.१२ |
| जनस्य गोपा ऽअजनिष्ट | ४.१.३; ५.११.१ |
| जनिष्वा देववीतये | ४.५.२०; ६.१५.१८ |
| *जागर्षि त्वं भुवने | ४.२.२५; ५.४४.१६ |
| जुहुरे वि चितयन्तो० | ४.१.११; ५.१९.२ |
| ज्यायांसमस्य यतुनस्य | ४.२.२४; ५.४४.८ |
| तं त्वा घृतस्नवीमहे | ४.१.१९; ५.२६.२ |
| तं त्वा वयं सुध्यो३ | ४.४.३६; ६.१.७ |
| तं त्वा शोचिष्ठ दीदिवः | ४.१.१६; ५.२४.४ |
| तं त्वा समिद्भिरङ्गिरो | ४.५.२३; ६.१६.११ |
| तं नाकमर्यो ऽअगृभीत० | ४.३.१६; ५.५४.१२ |
| तं नो ऽअग्ने ऽअभी | ४.१.१; ५.९.७ |
| तं पृच्छन्ती वज्रहस्तं | ४.६.१३; ६.२२.५ |
| तं पृच्छन्तोऽवरासः | ४.६.१२; ६.२१.६ |
| तं प्रत्नथा पूर्वथा | ४.२.२३; ५.४४.१ |
| तं वः शर्द्धं रथानां त्वेषं | ४.३.१२; ५.५३.१० |
| तं वः शर्द्धं रथेशुभं | ४.३.२०; ५.५६.९ |
| तं वः सखायः सं यथा | ४.६.१६; ६.२३.९ |
| तं व ऽइन्द्रं चतिनमस्य | ४.६.७; ६.१९.४ |
| तं व ऽइन्द्रं न सुक्रतुं | ४.८.३; ६.४८.१४ |
| तं वो दीर्घायुशोचिषं | ४.१.१०; ५.१८.३ |
| तं वो धिया नव्यस्या | ४.६.१४; ६.२२.७ |
| तं वो धिया परमया | ४.७.१०; ६.३८.३ |
| तं सध्रीचीरूतयो वृष्ण्यानि | ४.७.८; ६.३६.३ |
| तं सुप्रतीकं सुदृशं | ४.५.१८; ६.१५.१० |
| तं हि शश्वन्त ऽईळते | ४.१.६; ५.१४.३ |
| ततुरिर्वीरो नर्यो विचेताः | ४.६.१७; ६.२४.२ |
| ततृदानाः सिन्धवः क्षोदसा | ४.३.१२; ५.५३.७ |
| तत्सवितुर्वृणीमहे | ४.४.२५; ५.८२.१ |
| तत्सु नो विश्वे | ४.७.२६; ६.४५.३३ |
| तत्सु वां मित्रावरुणा | ४.३.३०; ५.६२.२ |
| तदस्तु मित्रावरुणा | ४.३.१; ५.४७.७ |
| तदिन्नु ते करणं दस्म | ४.१.३०; ५.३१.७ |
| तदू षु वामेना कृतं | ४.४.११; ५.७३.४ |
| तदृतं पृथिवि बृहच्छ्रवएष | ४.४.४; ५.६६.५ |
| तद्व ऽउक्थस्य बर्हण० | ४.७.१७; ६.४४.६ |
| तद्वीर्यं वो मरुतो | ४.३.१४; ५.५४.५ |
| तद्वो गाय सुते सचा | ४.७.२५; ६.४५.२२ |
| तद्वो यामि द्रविणं | ४.३.१६; ५.५४.१५ |
| तन्नः प्रत्नं सख्यमस्तु | ४.६.४; ६.१८.५ |
| तन्नो वि वोचो यदि | ४.६.१३; ६.२२.४ |
| तन्नो ऽअनर्वा सविता | ४.३.३; ५.४९.४ |
| तन्नोऽहिर्बुध्न्यो | ४.८.७; ६.४९.१४ |
| तमग्ने पास्युत तं पिपर्षि | ४.५.१९; ६.१५.११ |
| तमग्ने पृतनाषहं रयिं | ४.१.१५; ५.२३.२ |
| तमध्वरेष्वीळते देवं | ४.१.६; ५.१४.२ |
| तमा नूनं वृजनमन्यथा | ४.७.७; ६.३५.५ |
| तमीमह ऽइन्द्रमस्य रायः | ४.६.१३; ६.२२.३ |

| | |
|---|---|
| दमूनसो ऽअपसो ये | ४.२.१९; ५.४२.१२ |
| दश क्षिपों युञ्जते बाहू | ४.२.२०; ५.४३.४ |
| दश मासांञ्छशयानः | ४.४.२०; ५.७८.९ |
| दश रथान्प्रष्टिमतः | ४.७.३४; ६.४७.२४ |
| दशस्या नः पुर्वणीक | ४.५.१३; ६.११.६ |
| दशाश्वान्दश कोशान्दश | ४.७.३४; ६.४७.२३ |
| दिवस्पृथिव्याः पर्योज | ४.७.३५; ६.४७.२७ |
| दिवेदिवे सदृशीरन्यमर्द्धं | ४.७.३४; ६.४७.२१ |
| दिवो न तुभ्यमन्विन्द्र | ४.६.९; ६.२०.२ |
| दिवो न यस्य विधतो | ४.५.४; ६.३.७ |
| दिवो नों वृष्टिं मरुतो | ४.४.२८; ५.८३.६ |
| दुणाशं सख्यं तव | ४.७.२६; ६.४५.२६ |
| दुराच्चिदा वसतो ऽअस्य | ४.७.१०; ६.३८.२ |
| दृतेरिव तेऽवृकमस्तु | ४.८.४; ६.४८.१८ |
| दुळ्हा चिद्या वनस्पतीं० | ४.४.२९; ५.८४.३ |
| देवं वो देवयज्यया० | ४.१.१३; ५.२१.४ |
| देवं वो ऽअद्य सवितारमेषे | ४.३.३; ५.४९.१ |
| देवानां पत्नीरुशतीरवन्तु | ४.२.२८; ५.४६.७ |
| देवो भर्गः सविता रायो | ४.२.१७; ५.४२.५ |
| द्यावो न यस्य पनयन्त्यभ्वं | ४.५.५; ६.४.३ |
| द्युतद्यामानं बृहतीमृतेन | ४.४.२३; ५.८०.१ |
| द्युतानं वो ऽअतिथिं | ४.५.१७; ६.१५.४ |
| द्युमत्तमं दक्षं धेह्यस्मे | ४.७.१७; ६.४४.९ |
| द्यौ३ष्पितः पृथिवि | ४.८.११; ६.५१.५ |
| द्यौर्न य ऽइन्द्राभि भूमार्य० | ४.६.९; ६.२०.१ |
| द्वयाँ ऽअग्ने रथिनो | ४.६.२४; ६.२७.८ |
| द्वितायं मुक्तवाहसे | ४.१.१०; ५.१८.२ |
| धन्यां चिद्धि त्वे | ४.५.१३; ६.११.३ |
| धर्मणा मित्रावरुणा विपश्चिता | ४.४.१; ५.६३.७ |
| धायोभिर्वा यो युज्येभिर | ४.५.४; ६.३.८ |
| धियं वो ऽअप्सु दधिषे | ४.२.२७; ५.४५.११ |
| धिष्व वज्रं गभस्त्यो | ४.७.२४; ६.४५.१८ |
| धीभिरर्वद्भिरर्वतो | ४.७.२३; ६.४५.१२ |
| धूनुथ द्यां पर्वतान्दाशुषे | ४.३.२१; ५.५७.३ |
| धृतव्रतो धनदाः सोमवृद्धः | ४.६.७; ६.१९.५ |
| धृषत्पिब कलशे सोममिन्द्र | ४.७.३१; ६.४७.६ |
| ध्रुवं ज्योतिर्निहितं | ४.५.११; ६.९.५ |
| न घा वसुर्नि यमते | ४.७.२५; ६.४५.२३ |
| न तद्दिवा न पृथिव्यानु | ४.८.१४; ६.५२.१ |
| न ता नशन्ति न दभाति | ४.६.२५; ६.२८.३ |
| न ता ऽअर्वा रेणुककाटो | ४.६.२५; ६.२८.४ |
| न ते त ऽइन्द्राभ्य१स्म० | ४.२.१; ५.३३.३ |
| न ते ऽअन्तः शवसो | ४.७.१; ६.२९.५ |
| न पञ्चभिर्दशभिर्वष्ट्यारभं | ४.२.३; ५.३४.५ |
| न पर्वता न नद्यो | ४.३.१८; ५.५५.७ |
| न यं जरन्ति शरदो न | ४.६.१८; ६.२४.७ |
| न यं हिंसन्ति धीतयो न | ४.७.६; ६.३४.३ |
| न वीळवे नमते न | ४.६.१८; ६.२४.८ |
| न स जीयते मरुतो | ४.३.१५; ५.५४.७ |
| न स राजा व्यथते | ४.२.८; ५.३७.४ |
| न संस्कृतं प्र मिमीतो | ४.४.१७; ५.७६.२ |
| नम ऽइदुग्रं नम ऽआ | ४.८.१२; ६.५१.८ |
| नयसीद्वति द्विषः | ४.७.२२; ६.४५.६ |
| नव यदस्य नवतिं च | ४.१.२४; ५.२९.६ |
| नवग्वासः सुतसोमास | ४.१.२५; ५.२९.१२ |
| नहि ते पूर्तमक्षिप | ४.५.२४; ६.१६.१८ |
| नहि त्वा शूरो न तुरो | ४.६.१९; ६.२५.५ |
| नहि नु ते महिमनः | ४.६.२३; ६.२७.३ |
| नाना ह्य१ग्नेऽवसे | ४.५.१६; ६.१४.३ |
| नाभिं यज्ञानां सदनं | ४.५.९; ६.७.२ |
| नाहं तन्तुं न वि जानाम्योतुं | ४.५.११; ६.९.२ |
| नि ये रिणन्त्योजसा | ४.३.१९; ५.५६.४ |
| नितिक्ति यो वारणमन्नमत्ति | ४.५.५; ६.४.५ |
| नियुत्वन्तो ग्रामजितो | ४.३.१५; ५.५४.८ |
| नीचीनबारं वरुणः कवन्धं | ४.४.३०; ५.८५.३ |
| नु नो रयिं रथ्यं चर्षणिप्रां | ४.८.७; ६.४९.१५ |

